KÂVYAMÂLÂ. 49

THE

# DVISANDHÁ

OF

# DHANANJAYA

WITH THE COMMENTARY OF BADARÎNÂTH.

---

EDITED BY

PANDIT S'IVADATTA

Head Pandit and Superintendent, Sanskrit Department, Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRNAYA-SÂGAR" PRESS.

BOMBAY.

1895.

*Price 1½ Rupee.*

काव्यमाला. ४९.

श्रीधनंजयविरचितं

# द्विसंधानम् ।

वदरीनाथविरचितया टीकया समेतम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरवोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९५



मूल्यं सार्धो रूप्यकः ।

# द्विसंधानमहाकाव्यस्य भूमिका ।

---

अयं द्विसंधानमहाकाव्यस्य राघवपाण्डवीयापरनामकस्य कर्ता धनंजयमहाकविः कदा कतमं भूमिमण्डलं मण्डयामासेति न निश्चितम्.

परंतु ८८४ खिस्ताब्दपर्यन्तं कश्मीरान्पालयितुरवान्तिवर्मणः समकालीनयोर्ध्वन्यालोकनिर्मायकानन्दवर्धन-हरचरितमहाकाव्यरचयितृरत्नाकरयोः स्तावकस्य, ९५९ खिस्ताब्दरचितयशस्तिलकचम्पूनिर्मातृजैनसोमदेवेन स्तुतस्य, बालरामायणाद्यनेकनाटकादिनिर्मातृराजशेखरस्य नाम्ना जल्हणादिसंगृहीतसूक्तिमुक्तावल्यादिषु लिखितेषु प्राचीनकविवर्णनाश्लोकेषु (सूक्तिमुक्तावलि-सुभाषितहारावल्योः)

'द्विसंधाने निपुणतां स तां चक्रे धनंजयः ।
यया जातं फलं तस्य सतां चक्रे धनं जयः ॥'

इत्युपलभ्यमानत्वेन 'राजशेखरकवेः प्राचीनो धनंजयकविरासीत्' इति, प्रकृतकाव्ये जैनसमयमात्रप्रसिद्धकथानां निबद्धत्वात् 'जैनः सः' इति च प्रतीयते.

'प्रमाणमकलङ्कस्य पूज्यपादस्य लक्षणम् ।
द्विसंधानकवेः काव्यं रत्नत्रयमकण्टकम् ॥
कवेर्धनंजयस्येयं सत्कवीनां शिरोमणेः ।
प्रमाणं नाममालेति श्लोकानां च शतद्वयम् ॥'

इति धनंजयनिघण्टुरूपनाममालाया दर्शनेन अकलङ्कप्रमाण-पूज्यपादलक्षण-नाममाला अप्यनेन धनंजयेन निर्मिता इति प्रतीयते. अकलङ्क पूज्यपादयोर्ग्रन्थकर्तृत्वे तु धनंजयेन द्विसंधानकाव्यं नाममाला चेति ग्रन्थद्वयं निर्मितमिति ज्ञेयम्.

सभङ्गाभङ्गश्लेषप्रधानतया कथाद्वयवर्णकस्य तस्य चास्य महाकाव्यस्य टीकापि विनयचन्द्रान्तेवासिनेमिचन्द्रेण महती कृतासीत्. तस्याश्चातीव विस्तृतत्वात्ततः सारमुद्धृत्य श्रीबदरीनाथेनेव सकलसुमनोभूषितेन दाधीचजयपुरसंस्कृतपाठशालाध्यापकविद्वद्वरबदरीनाथेनेयं सुधाख्या प्रकाशिता. इमे च १८९५ खिस्ताब्दे इदं जगदसारं मत्वा परलोकं प्रस्थितवन्तः.

तस्य चास्य सटीकस्य महाकाव्यस्य शोधने यदावयोः स्खलनं स्यात्तत्परमदयार्द्रमनस्कैः शोधनीयं क्षन्तव्यं च. यतः—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति विज्ञापयतः — पण्डितशिवदत्त-काशीनाथौ.

---

महाकविश्रीधनंजयविरचितं

# द्विसंधानम् ।

श्रीबदरीनाथकृतया टीकया समेतम् ।

## प्रथमः सर्गः ।

कीर्त्या निर्मलयन्दिशो दशरथश्लाघी समृद्धोद्भवः
संग्रामप्रकटीकृतार्जुनयशाः शत्रुघ्नवीराहृतः ।
वलगज्जाम्बवता प्रशंसितमहाः प्रौढाङ्गदोद्भासितः
श्रीमान्नीलरुचिः शिवं दिशतु वो रामोऽथ कृष्णोऽथ वा ॥

आसीदसीमगुणभूमिरभूमिरंहःसङ्गस्य कृष्णचरणाम्बुजचञ्चरीकः ।
दाधीचजातिगतकौत्सकुले प्रसूतः साहेबराम इति नाम दधद्द्विजाग्र्यः ॥

अनन्तपादार्चनलब्धसिद्धिरनन्तवाणीपरिनिष्ठबुद्धिः ।
अनन्तविद्वत्कुलशैलसानुरनन्तरामोऽभवदस्य सूनुः ॥

तस्य कृष्णैकभक्तोऽभूच्छोटीलालाभिधः सुतः ।
सदासुखमनीरामकनीयान्पुण्यभाजनम् ॥

काव्याध्यापनलब्धशुद्धयशसा रामाभिधाज्ज्यायसा
कुद्दालेत्युपनामकेन बदरीनाथेन तत्सूनुना ।
प्राक्टीकामुपलभ्य चैव सुगमा बोधाय विद्यार्थिनां
टीकेयं क्रियते धनंजयकृते काव्ये द्विसंधानके ॥

तत्र श्रीमाँच्छ्लेषोक्तिचतुरो धनंजयनामा महाकविः प्रारिप्सितस्य राघवपाण्डवीयकथानकयोः कुत्रचिज्जतुकाष्ठन्यायेन कुत्रचिदेकवृन्तगतफलद्वयन्यायेन सभङ्गाभङ्गश्लेषप्राधान्येन प्रतिपादकस्य द्विसंधाननामकमहाकाव्यस्य निर्विघ्नपरिसमाप्तिप्रचारादिफलकं शिष्टाचारप्राप्तं तीर्थकृदाशीरूपं मङ्गलमाचरति—

श्रियं जगद्बोधविधौ विहायसि व्यदीपि नक्षत्रमिवैकमुद्गतम् ।
स यस्य वस्तीर्थरथस्य सुव्रतः प्रवर्तको नेमिरनश्वरीं क्रियात् ॥ १ ॥

श्रियमिति ॥ यस्य बोधविधौ कैवल्यज्ञानानुष्ठाने, विहायसि गगने, उद्गतमेकं नक्षत्रमिव, जगद् व्यदीपि भाति स्म । स तीर्थमागम एव रथः, तस्य नेमिश्चक्रधारा सन्,

प्रवर्तकः सुव्रतो नाम विंशस्तीर्थंकरः, अनश्वरीं नित्यां मोक्षोपलक्षितां श्रियं वो युष्माकं क्रियात् विधेयात् ॥ भारतपक्षे—नेमिः शिवानन्दनो द्वाविंशस्तीर्थकृद्विशेष्यः । तस्य, शोभनानि निरतिचाराणि व्रतानि यस्येत्यर्थकं सुव्रत इति विशेषणम् । बोधविधौ बोधचन्द्र इति विशेषः । अस्मिन्काव्ये श्लेष एव मुख्योऽलंकारः । तथापि तन्मूलकानि अलंकारान्तराणि तत्र तत्र ज्ञेयानि । तत्रात्रोपमारूपकयोः संकरालंकारः । सर्गेऽस्मिन्वंशस्थं नाम च्छन्दः—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥

सतीं श्रुतस्कन्धवने विहारिणीमनेकशाखागहने सरस्वतीम् ।
गुरुप्रवाहेण जडानुकम्पिना स्तुवेऽभिनन्द्ये वनदेवतामिव ॥ २ ॥

सतीमिति ॥ सतीं पूर्वापरप्रमाणबाधारहिताम्, अनेकशाखाभिः प्राभृतिकादिग्रन्थविशेषैर्गहने, जडान्हेयोपादेयविवेकविकलाननुकम्पतीत्येवंशीलेन गुरूणां प्रवाहेण, अभि समन्तान्नन्दनीये, श्रुतस्कन्धो ग्रन्थविशेषः स एव वनं तस्मिन्विहरणशीलाम्, सरस्वतीं वनदेवतामिव स्तुवे । कीदृशीं वनदेवताम् । सतीं साङ्गोपाङ्गसंपूर्णलक्षणाम्, डलयोरैक्याज्जलानुकम्पिना गरिष्ठप्रवाहेण, अभिनन्द्येऽभिवर्धनीये, अनेकाभिर्वृक्षशाखाभिर्निबिडे, श्रुताः विख्याताः स्कन्धाः प्रकाण्डा यत्र तत्र वने विहरणशीलाम् । उपमालंकारः ॥

चिरंतने वस्तुनि गच्छति स्पृहां विभाव्यमानोऽभिनवैर्नवप्रियः ।
रसान्तरैश्चित्तहरैर्जनोऽन्धसि प्रयोगरम्यैरुपदंशकैरिव ॥ ३ ॥

चिरंतन इति ॥ नवप्रियः नूतनाभिलाषुकः, अभिनवैर्नवीनैः, चित्तहरैश्चेतोरञ्जकैः प्रयोगरम्यैः शब्दरचनाविशेषरमणीयैः रसान्तरैः । 'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः ॥' इत्युक्तेषु रसेषु एकैकस्य निवृत्तावुत्तरोत्तरं समुत्पन्नैः । विभाव्यमान आह्लाद्यमानो जनो लोकः, चिरंतने पुरातने वस्तुनि पदार्थे स्पृहां वाञ्छां गच्छति प्राप्नोति । कैः कस्मिन्निव । प्रयोगरम्यैः प्रकारविशेषोत्कर्षमनोहरैः, अभिनवैर्नूतनैः, चित्तहरैर्मनोहारिभिः, रसान्तरैर्मधुराम्ललवणकटुकषायतिक्तानां सांकर्येण विलक्षणरसतामापन्नैरुपदंशकैर्व्यञ्जनैः, अन्धसि भक्त इव ॥

स जातिमार्गो रचना च साकृतिस्तदेव सूत्रं सकलं पुरातनम् ।
विवर्तिता केवलमक्षरैः कृतिर्न कञ्चुकश्रीरिव वर्ण्यमृच्छति ॥ ४ ॥

स इति ॥ यद्यपि स एव बहुत्रोपलब्ध एव जातिमार्गो जगत्यादिच्छन्दःपद्धतिः, चकारोऽवधारणार्थः, सैव रचना पदन्यासः, सैव आकृतिर्गद्यपद्यबन्धादिलक्षणः संस्थानविशेषः, तदेव पुरातनं पूर्वाचार्यप्रणीतं सकलं समस्तं सूत्रं सूत्र्यन्ते रच्यन्ते गुम्फ्यन्ते कथारूपतया अर्था येन तत्पुरुषाश्रितचरित्रम् । अस्तीति शेषः । तथापि केवलमक्षरैर्वर्णैः कृत्वा विवर्तिता परावृत्ता सती कृतिः काव्यं किं वर्ण्यं श्लाघ्यतां न ऋच्छति गच्छति । अपि तु गच्छत्येवेति काकुः । केव । कञ्चुकश्रीरिव । यथा कञ्चुकश्रीः, अक्षं द्रव्यं रान्ति

गृह्णन्ति तेऽक्षराः सूचीजीविकाः शिम्पकास्तैः कर्तृभिः, केवलं परं, विवर्तिता सती किं श्लाघ्यतां न याति । यद्यपि स एव जातिमार्गोऽङ्गवङ्गादिदेशोद्भवजनाभिप्रायः, सैव रचना हस्तावरणाद्यनेकविन्यासः, सैवाकृतिः संस्थानं, सकलं तदेव सूत्रं तन्तुजालरूपं चिरंतनमित्यर्थः ॥

कवेरपार्थामधुरा न भारती कथेव कर्णान्तमुपैति भारती ।
तनोति सालंकृतिलक्ष्मणान्विता सतां मुदं दाशरथेर्यथा तनुः ॥ ५ ॥

कवेरिति ॥ अपार्थार्थशून्या, अमधुरा माधुर्यगुणोज्झिता, कवेः कथा, अपार्थार्जुनशून्या, मधुं दैत्यं राति हन्ति स मधुरो नारायणः । 'रा दाने' इत्यत्र दानशब्दे 'दोऽवखण्डने' इति धातुनिष्पन्नत्वात् । तथा चोक्तम्—'विज्ञप्तस्त्वं वदसि बहुधा दीयते दीयते मे द्वौ दानार्थौ द्वयमपि तथा खण्डने पालने च । दारूपाणां भवति नियतं रूपमेकं चतुर्णा नो जानीमः कथयति भवान्कस्य धातोः प्रयोगम् ॥' इति । तेन रहिता भारती कथा कर्णस्य राधेयस्यान्तं वधमिव, कर्णस्य श्रोत्रस्यान्तं सामीप्यं नोपैति । अलंकृतिरलंकारः, लक्ष्म व्याकरणम्, तत्समाहारेणान्विता सा कथा, सुभूषितसौमित्रिणान्विता दाशरथे रामस्य तनुः शरीरमिव, सतां सत्पुरुषाणां मुदं तनोति । श्लेषोपमा ॥

हृतोऽपि चित्ते प्रसभं सुभाषितैर्न साधुकारं वचसि प्रयच्छति ।
क्व शिष्यमुत्सेकभियावजानतः पदं गुरोर्धावति दुर्जनः क्व सः ॥ ६ ॥

हृत इति ॥ यः सुभाषितैः सूक्तैः चित्ते हृदये प्रसभं बलात्कारेण हृतो गृहीतोऽपि क्वापि वचसि साधुकारं न प्रयच्छति, स दुर्जन उत्सेकभिया गर्वभयेन शिष्यं विनेयम् अवजानतोऽवहेलयतः गुरोः पदं पदवीं क्व धावति, अपि तु न । विषमालंकारः ॥

ततोऽधिके तादृशि वा कृतश्रमः परैः कृतं निन्दतु तत्र का व्यथा ।
व्यलीकवैदग्ध्यहतेऽपवादिनि ज्वलत्यनाश्वानपि मन्युना तपन् ॥ ७ ॥

तत इति ॥ ततः परकृताद् अधिके, तादृशि वा कृतश्रमो विहिताभ्यासः सन् परैरितरैः कृतं काव्यं निन्दतु दूषयतु, तत्र निन्दके का व्यथा पीडा । अपि तु न कापि । युक्तमेतत् । परं व्यलीकवैदग्ध्यहते असत्यचातुरीजर्जरीभूते अपवादिनि परदोषग्राहके तपंस्तपसन् अनाश्वान् तपस्वी मन्युना कोपेन ज्वलति दीप्तो भवति । अर्थान्तरन्यासः ॥

कृतावतारायतिपुण्यनायकैरजातशत्रुप्रमुखैरियं कृतिः ।
नवार्च्यते केन नराघवारिभिर्नरोत्तमैः कोटिशिलेव चालिता ॥ ८ ॥

कृतेति ॥ आयतिरुत्तरकालस्तेन पुण्यस्य नायकैः, न जाताः शत्रवः प्रमुखाः संमुखा येषां तैः, राघवारिभी रामरावणादिभिः, कृतो विहितोऽवतारोऽवतरणं यस्यां सा यतिषु व्रतिषु पुण्यैः प्रधानैर्नायकैः स्वामिभिर्नरोत्तमैर्जिनसेनादिभिश्चालिता चर्चिता इयं

कृतिः कृतावतारायतिपुण्यनायकैर्विहितावतारदीर्घदेवप्रधानैरजातरिपुसंमुखैर्नरोत्तमैर्नारायणैश्चालिता कोटिशिलेव केन वा इव न न अर्च्यते, पूज्यत एवेति भावः॥ भारतीयपक्षे—अजातशत्रुप्रमुखैर्युधिष्ठिरप्रमुखैः, नरोऽर्जुनः अघं विघ्नं वारयति निराकरोतीत्येवंशीलो येषां तैः। 'राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः। राजानमनुवर्तन्ते यथा राजा तथा प्रजा॥' इत्युक्तेः, नराणां मनुष्याणामघं वारयतीत्येवंशीलैर्वा नरोत्तमैर्धीरोदात्तादिगुणास्पदैः कृतावतारा नवा नूतना कृतिः नरोत्तमैः समन्तभद्रादिभिश्चालिता कोटिशिलेव केन सुखेनार्च्यते। श्लेषोपमा॥

अथापरागोऽप्यपरागतां गतः स पश्चिमोऽपि प्रथमो विपश्चिताम्।
अनुज्ञया वीरजिनस्य गौतमो गणाग्रणीः श्रेणिकमित्यवोचत॥ ९॥

अथेति॥ अथशब्दो मङ्गलवाची। अपि यस्मात्कारणादपगतरागतां प्रीतिराहित्यं गतोऽत एवापराग एनोमलरहितः, विपश्चितां विदुषां प्रथम आद्योऽपि वीरजिनस्यापेक्षया पाश्चात्यः, गणाग्रणीर्गौतमो गणधरः श्रेणिकं मगधदेशस्वामिनम् इति वक्ष्यमाणं वीरजिनस्य वर्धमानस्य चतुर्विंशस्य तीर्थकर्तुराज्ञया अवादीत्। अपरागतां वाच्यतां गतोऽपि कथमपरागो मलरजोरहितो भवतीति, विपश्चितामाद्योऽपि सन् कथं पश्चिम इति च विरोधः। परिहारस्तूक्तः। विरोधालंकारः॥

इहैव जम्बूतरुमालवालवत्परीयुषोच्चैर्भरतेऽब्धिना वृते।
निवस्तुमिष्टास्तिमितार्यकिंनरैर्नगर्ययोध्यासमहास्तिनाख्यया॥ १०॥

इहेति॥ हे आर्य, जम्बूतरुमुच्चैः परीयुषा वेष्टितवताब्धिना समुद्रेणालवालेन स्थानकेनेवावृते वेष्टितेऽस्मिन्नेव भरते भारते क्षेत्रे स्तिमिता निश्चला नरैः निवस्तुं स्थातुमिष्टा अभिलषिता समहा सोत्सवा आख्यया नाम्ना अयोध्या नगरी किं नास्ति, अपि त्वस्त्येव॥भारतीयपक्षे—हे असम एवंभूते भारते मिता योजनायामविष्कम्भसंमिता किंनरैः यक्षैः, आर्यकिंनरैः प्रधानयक्षैर्वा निवस्तुमिष्टा अयोध्या परैर्योद्धुमशक्या आख्यया हास्तिना नगरी अस्ति। श्लेषालंकारः॥

पुरी पयोधीन्कुलपर्वतानपि प्रसाधयन्ती करशुद्धमण्डला।
बिभर्ति साकेतकगोत्रसूचिता सरस्सु लक्ष्मीं प्रतिमा रवेरिव॥ ११॥

पुरीति॥ करेण सिद्धायेन शुद्धं विटमत्तजनादिरहितं मण्डलं देशो यस्याः सा तथोक्ता, साकेतं कायति तेन कथयता साकेतकेन गोत्रेण नाम्ना सूचिता साकेतपर्यायेण प्रसिद्धायोध्या पुरी, पयोधीन्समुद्रान् कुलपर्वतांश्च, प्रसाधयन्ती आत्मगान्कुर्वती सती, करैः किरणैः शुद्धं मण्डलं यस्याः सा, केतकानां गोत्रस्य संतानस्य सूचिता प्रादुर्भावो यस्याः सकाशात् सा, रवेः प्रतिमा बिम्बं पयोधीन् समुद्रान् कुलपर्वतांश्च प्रसाधयन्ती आत्मगान्कुर्वती सतीव, सरस्सु सरोवरेषु लक्ष्मीं शोभां बिभर्ति॥ भारतीयपक्षे—पुरी हास्तिना, साकेतकानां राजपुत्रविशेषाणां गोत्राय अन्वयाय सुष्ठूचिता योग्येति विशेषः। श्लेषोपमा॥

विसारिभिः स्नानकषायभूषितैर्विभीषितेव प्रियगात्रमङ्गना।
शुचौ समालिङ्गति यत्र सारवे ह्रदे तरन्ती कलहंससंकुले॥ १२॥

विसारीति॥ यत्र नगर्यां शुचौ ग्रीष्मे, कलहंससंकुले, सारवे सरयूभवे, ह्रदे, तरन्ती अङ्गना, स्नानकषायभूषितैः स्नानार्थे कषायैः कुङ्कुमादिभिर्भूषितैः, विसारिभिर्मत्स्यैर्विभीषिता भयं नीतेव सती प्रियगात्रं समालिङ्गति॥ भारतीयपक्षे—सारवे सस्वने। उत्प्रेक्षा॥

अरान्घटीयन्त्रगतान्गतश्रमः पयःकणैरग्रपदेन पीडयन्।
स यत्र कच्छी सतनुः सुरालयं प्रयुज्य निःश्रेणिमिवारुरुक्षति॥ १३॥

अरानिति॥ यत्र नगर्यां पयःकणैरुदबिन्दुभिः गतश्रमो विगतखेदः स कच्छी मालाकारः अग्रपदेन अग्रचरणेन घटीयन्त्रगताञ्जलपात्राश्रितान्, अरान्काष्ठकीलकान्, पीडयन् कदर्थयन् सन्, निःश्रेणिं, प्रयुज्य संबध्य, सतनुः सशरीरः सुरालयं स्वर्गम्, आरुरुक्षतीव आरोढुमिच्छतीव। उत्प्रेक्षा॥

उदर्कसंक्लेशभरं स्वयं वहत्परस्य संतापहरं फलप्रदम्।
युतं विजात्यापि विलङ्घ्य सज्जनं विभाति यत्रोपवनं समन्ततः॥ १४॥

उदर्केति॥ यत्र, समन्ततः सामस्त्येन, उदर्कादूर्ध्वस्थितार्कात्संक्लेशभरं संतापभारम्, स्वयं वहत्, परस्य जनस्य संतापहरं फलप्रदम्, सज्जनं विलङ्घ्य अतिक्रम्य वीनां जात्या युतम् उपवनं विभाति। अर्थवशाद्विभक्तिविपरिणामेन—उदर्के उत्तरफले संक्लेशभरं स्वयं वहन्, परस्य संतापहारकः फलप्रदः, 'मातृपक्षो भवेज्जातिः पितृपक्षः कुलं भवेत्' इत्युक्तेर्विशिष्टया लाञ्छनरहितया जात्या मातृपक्षेण युत उपवनमतिक्रम्य सज्जनोऽपि विभाति। सज्जनातिक्रामी विशिष्टजातियुतः कथमिति विरोधः। परिहारस्तूक्तः। विरोधालंकारः॥

दशां दधानाः खलु गन्धधारिणीं महाद्रुमस्कन्धनिबद्धकंधराः।
स्वबन्धवैरोद्धटयेव सिन्धुराः शिरांसि यस्यां धुनतेऽरुणेक्षणाः॥ १५॥

दशामिति॥ यस्यां खलु निश्चयेन गन्धधारिणीसंज्ञितां दशामवस्थां दधानाः, महाद्रुमाणां स्कन्धेषु निबद्धा यन्त्रिता कंधरा ग्रीवा येषां ते, अरुणेक्षणा लोहितलोचनाः, सिन्धुरा हस्तिनः स्वबन्धेन वैरमुद्घाटयितुकामा इव शिरांसि धुनते। उक्तं च—'संजाततिलका पूर्वा द्वितीयार्धकपोलिका। तृतीयार्धनिबद्धा तु चतुर्थी गन्धधारिणी॥ पञ्चमी क्रोधिनी ज्ञेया षष्ठी चैव प्रवर्तिका। संप्रभिन्नकपोलाथ सप्तमी सार्वकालिका॥' इति। उत्प्रेक्षा॥

कुशासनोदीरितचेतसश्चला मनोजवामेघपथेऽतिवर्तिनः।
प्रसह्य नीता गुरुभिर्महापथं नरोऽतिदाम्यन्त्यपि यत्र वाजिनः॥ १६॥

कुशेति॥ यत्र कुशासनैः कुशिक्षादायिभिरुदीरितमुदीर्णमुद्धूलितं चेतो हृदयं येषां

ते, 'तमः खलु चलं नीलम्' इति वचनाच्चलास्तमस्विनः, मनोजवामे कंदर्पानुकूले अघपथे पापमार्गे अतिशयेन वर्तमानाः, गुरुभिरुपाध्यायैः, प्रसह्य हठात्, महापथं सन्मार्गं, नीताः प्रापिताः, नरो मनुष्याः। कुशयावलगयासने स्थानकविशेषे उदीरितं दत्तं चेतो यैस्ते, चलाश्चञ्चलाः, मनोजवा मनोवेगिनः, मेघपथे नभःस्थले, अतिवर्तिनः उत्प्लवनशीलाः, वाजिनोऽश्वा अपि गुरुभिरश्ववारैः प्रसह्य महापथं वाह्यालीं नीताः। अतिदाम्यन्ति सुशिक्षिता जायन्ते। श्लेषः॥

प्रभाविरामस्य सपत्नसंततेः शरासनाभ्यासपदं किरीटिनः।
बहिर्यतोऽद्यापि निचाय्य दूरगं मदं विमुञ्चन्ति शरं न धन्विनः॥ १७॥

प्रभेति॥ यतः बहिर्बाह्यप्रदेशेऽद्यापि सांप्रतमपि किरीटिनो मुकुटवतो रामस्य शराणामसने प्रक्षेपेऽभ्यासपदं दूरगं विप्रकृष्टं सपत्नानामरीणां संततेः प्रभवनशीलं निचाय्य आलोक्य धन्विनश्चापधराः शरासनस्याभ्यासे पदं निष्ठा यस्य, शत्रूणां प्रभवनशीलं दूरगं शरं बाणं न मुञ्चन्ति, अपि तु मदम्॥ भारतीयपक्षे—शत्रुसंततेः प्रभायाः विरामोऽन्तो यस्मात्तस्य किरीटिनोऽर्जुनस्येति विशेषः। श्लेषालंकारः॥

प्रपासभासार्थनटाश्रमव्रजैर्जनाकुलैर्भान्ति भृशं बहिर्भुवः।
प्रजाः कुतश्चित्परदेशभङ्गतो विलोलिता यां शरणं गता इव॥ १८॥

प्रपेति॥ बहिर्भुवो बहिर्देशाः भृशमत्यर्थम्, जनाकुलैः। प्रपा जलस्थानम्, सभा नियोगिनां धर्मविचारस्थानम्, सार्था वणिग्जनानां समूहाः, बहुरूपिणः, आश्रमास्तपस्विनां मठाः, व्रजा गोकुलानि, तैः कुतश्चित्परदेशभङ्गतः कस्माच्चिच्छत्रुमण्डलाद् विलोलिताः कदर्थिताः प्रजाः कारुकादयो जना यां नगरीं शरणं गता इव भान्ति भासन्ते। उत्प्रेक्षा॥

असूययागम्य निशाम्य यां पुरो विलज्जयाम्भःपरिणामिनीं दशाम्।
गता इवाभान्ति कुलाद्रिपेशलाश्चरण्युलोलाः परिखाम्बुवीचयः॥ १९॥

असूयेति॥ कुलाचलसदृशाः, चरण्युलोला अनिलचञ्चलाः परिखाम्बुवीचयः असूयया परगुणासहनेन, आगम्य आगत्य, यां नगरीं, निशाम्य विलोक्य, पुरोऽन्या नगर्यः, विलज्जया अम्भःपरिणामिनीं अम्भसः परिणामः पर्यायोऽस्त्यस्याः तां जलरूपपरिणमनशीलां दशामवस्थां गता इव आभान्ति। उत्प्रेक्षा॥

इतस्ततोऽभ्रंलिहशृङ्गकोटयो विभान्ति यस्यां पुरि वप्रभूमयः।
गजेन्द्रदन्ताहतिगाढगह्वरैर्गवाक्षजालैरिव हर्म्यपङ्क्तयः॥ २०॥

---

१. अनेन तमसि क्रियावत्त्वस्यैव पूर्वपक्षितत्वेन चलशब्दस्य तमःपर्यायतायां मानाभावाच्चिन्त्यमिदम्.

इत इति ॥ यस्याम् इतस्ततः प्रदेशेषु वप्रभूमयो गिरितटावनयः अभ्रंलिहशृङ्गकोटयो गगनतलस्पर्शिशिखराः गजेन्द्रदन्ताहतिगाढगह्वरैर्दन्तीन्द्रदन्तप्रहारगाढच्छिद्रैः, हर्म्यपङ्क्तयः गवाक्षजालैर्वातायनकदम्बकैरिव, विभान्ति । श्लेषोपमा ॥

समुच्छ्रिते यत्परिधौ हिरण्मये प्रहाविवागाधतमे तमोरिपुः ।

भवत्यनूचान इवोग्रचर्यया स दृष्टनष्टोऽहनि मध्यमे चरन् ॥ २१ ॥

समुच्छ्रितेति ॥ समुच्छ्रिते समुन्नते हिरण्मये काञ्चनमये यस्याः परिधौ प्राकारे, उग्रचर्यया तीव्रगत्या चरन् तमोरिपुः सूर्यः मध्याह्ने पूर्वे दृष्टः पश्चान्नष्टः विलोकिततिरोहितः, अगाधतमे प्रहौ कूपे उग्रचर्यया तीव्रव्रताचरणेन चरन् अनूचानः तपस्वीव, भवति । उपमा ॥

सपुष्पशय्याजगतीलतागृहाः सहेमसोपानपथाः सनिर्झराः ।

स्फुटं तटा यत्र सुरोपसेव्यतां व्रजन्ति मेरोरिव कृत्रिमाद्रयः ॥ २२ ॥

सपुष्पेति ॥ यत्र पुष्पशय्याः कुसुमशयनानि जगत्यो वेदिकाः, लतागृहा वल्लीमन्दिराणि तैः सह वर्तमानाः, सहेमसोपानपथाः कनकपादस्थानीयमार्गैः सहिताः, निर्जरैः सहिताः, कृत्रिमाद्रयः क्रीडाचलाः, मदिरानुशीलत्वम्, एवं विशेषणविशिष्टा मेरोः तटाः सानवः देवाश्रयणीयताम् इव, स्फुटं व्रजन्ति । उपमा ॥

अनेकमन्तर्वणवारितातपं तपेऽपि यन्त्रोद्धृतवारिपूरितम् ।

शिखावलान्यत्र वहत्प्रणालिकं करोति धारागृहमब्दशङ्किनः ॥ २३ ॥

अनेकेति ॥ यत्र विविधप्रकारम्, वनमध्यनिराकृतोष्णम् यन्त्रोद्धृतवारिपूरितं वहत्प्रणालिकं धारागृहं तपे ग्रीष्मेऽपि अब्दशङ्किनः जलधरावितर्किणः शिखावलान् मयूरान् करोति । भ्रान्तिमानलंकारः ॥

विशालकूटाः सुखवासहेतवः समुन्नता यत्र सुधालयालयः ।

ज्वलन्ति जालोद्गतधूमयष्टयः पुरस्य धूपोद्गमकुण्डिका इव ॥ २४ ॥

विशालेति ॥ यत्र विशालकूटा विस्तीर्णशिखराः, सुखावासहेतवः सुखस्थितिकारणानि, जालोद्गतधूमयष्टयो वातायननिर्गतधूममञ्जर्यः, समुन्नता उच्चाः, सुधालयालयश्चूर्णशुभ्रमन्दिरश्रेणयः, विशालकूटाः विस्तीर्णकण्ठाः, सुखवासहेतवः सुखपरिमलनिमित्तानि, जालोद्गतधूमयष्टयो गवाक्षरन्ध्रोद्गीर्णधूमयष्टयः उच्चाः पुरस्य नगरस्य धूपार्थमुद्गमः प्रादुर्भावो यासां ताः कुण्डिका इव, ज्वलन्ति भान्ति । उत्प्रेक्षा ॥

सुवर्णमय्यः शुचिरत्नपीठिका हरिन्मणीनां फलकैः कृतस्थलाः ।

कलापिनां यत्र निवासयष्टयः स्फुरन्ति मायूरपताकिका इव ॥ २५ ॥

सुवर्णेति ॥ यत्र, कनकविकाराः, शुचिरत्नपीठिकाः स्फाटिकमणिपीठिकाः, हरिन्मणीनां मरकतमणीनां, फलकैः पट्टिकाभिः, कृतस्थला विहितास्पदाः, कलापिनां म-

यूराणां कं सुखं लपन्तीत्येवंशीलानां सत्पुरुषाणां वा निवासयष्टयः गृहवरण्डिका हर्म्यपङ्क्यो वा, मायूरपताकिका मायूरवैजयन्त्य इव, स्फुरन्ति । उपमा ॥

सितासिताम्भोरुहसारितान्तराः प्रवृत्तपाठीनविवर्तनक्रियाः ।
समायता यत्र विभान्ति दीर्घिकाः कटाक्षलीला इव वारयोषिताम्॥२६॥

सितेति ॥ यत्र सितासिताम्भोरुहसारितान्तराः श्वेतनीलकमलपूरितमध्याः, प्रवृत्ताः संजाताः पाठीनानां मीनानां विवर्तनक्रिया यासु ताः, समाः समकोणा आयता दीर्घा, दीर्घिकाः क्रीडावाप्यः, शुक्लश्यामाम्बुजैरिव संवलितमध्याः प्रवृत्ताः पाठीनानामिव विवर्तनक्रिया यासां ताः पण्याङ्गनानां कटाक्षलीला अपाङ्गपातशोभा इव, विभान्ति । उपमा ॥

अदृश्यपारापतनाभिहेतुषु स्थिरान्धकारेषु जलावगाहिषु ।
अधोगतिं संप्रतिपन्नवत्सु या न कूपदेशेष्वपि सत्सु दूषिता ॥ २७ ॥

अदृश्येति ॥ अदृश्यापारा अनिरीक्ष्यपर्यन्ता, या नगरी, पतनाभिहेतुषु गृहीतव्रतप्रच्यवनाभिकारणेषु, स्थिरान्धकारेषु स्थिरपापेषु, जडावगाहिषु, अधोगतिं निन्द्याचरणं संप्राप्तवत्सु, कुत्सितोपदेशेषु सत्स्वपि न दूषितेति विरोधः । अदृश्याः पारापताः पक्षिणो यत्र तस्या नाभेर्मध्यस्य हेतुषु वृद्धिप्रापकेषु, स्थिरान्धकारेषु स्तिमिततमःस्तोमेषु, जलमवगाहिषु, अधोगतिमधस्ताद्विवरमार्गं संप्रतिपन्नवत्सु, कूपदेशेषु प्रहिप्रदेशेषु सत्स्वपि या न दूषितेति परिहारः । विरोधालंकारः ॥

अशोकसप्तच्छदनागकेसरैः सुमाधिकैराततपुष्पवासनैः ।
प्रयान्त्यभिज्ञातपथाः कथंचन क्षपासु यस्यां प्रियवासमङ्गनाः ॥ २८ ॥

अशोकेति ॥ यस्यां, क्षपासु, अङ्गनाः कमनीयकामिन्यः, सुमाधिकैः, पुष्पाधिकैः, आततपुष्पवासनैः प्रसृतकुसुमामोदैः, अशोकैः पिण्डीद्रुमैः सप्तच्छदैः सप्तपर्णैः नागकेशरैर्वृक्षविशेषैः, कथंचन महता कष्टेन अभिज्ञातपथा आत्मप्रतीतिनीतमार्गाः सत्यः प्रियावासं वल्लभसुरतमन्दिरं प्रयान्ति ॥

विशीर्णहारा हतकीर्णशेखराश्च्युतोरुजाला गलितावतंसकाः ।
रतोत्सवे विस्मृतसीधुशुक्तयो यदीयसंकेतभुवश्चकासति ॥ २९ ॥

विशीर्णेति ॥ यदीयसंकेतभुवः, त्रुटितमौक्तिकावल्यः, पूर्वं हताः पश्चात्कीर्णाः शिखास्थसुममाला यासु ताः, पतितमेखलाः, च्युतकर्णभूषणाः, विस्मृतमद्यचषकाः सत्यो दीप्यन्ते ॥

तनुं नटन्त्याः किल काचकुट्टिमे भुवस्तले यत्र विलोक्य बिम्बिताम् ।
इयं प्रविष्टा किमसूचिता वधूरिति भ्रकुंसैर्भ्रकुटिर्विरच्यते ॥ ३० ॥

तनुमिति ॥ यत्र किल काचबद्धे भूतले बिम्बितां नर्तक्यास्तनुं विलोक्य 'असूचिता वधूः किमियं प्रविष्टा' इति हेतोर्भ्रकुंसैर्भ्रकुटिर्विरच्यते । भ्रान्तिमान् ॥

प्रियेषु गोत्रस्खलितेन पादयोर्नतेषु यस्यां शममागताः स्त्रियः ।
स्वबिम्बमालोक्य विपक्षशङ्कया पुनर्विकुप्यन्ति च रत्नभित्तिषु ॥ ३१ ॥

प्रियेष्विति ॥ यस्यां गोत्रस्खलितेन द्वितीयायाः सपत्न्या नामग्रहणापराधेन पादयोर्नतेषु प्रियेषु सत्सु शमं प्राप्ता अपि स्त्रियः पुना रत्नभित्तिषु स्वबिम्बमालोक्य विपक्षशङ्कया विशेषेण कुप्यन्ति । भ्रान्तिमान् ॥

प्रवालमुक्ताफलशङ्खशुक्तिभिर्विनीलकर्केतनवज्रगारुडैः ।
यदापणा भान्ति चतुःपयोधयः कुतोऽपि शुष्का इव रत्नशेषतः॥३२॥

प्रवालेति ॥ यस्यामापणाः प्रवालैर्विद्रुमैः, मुक्ताफलैर्मौक्तिकैः शङ्खैः कम्बुभिः, शुक्तिभिर्मुक्तास्फोटैः, विशिष्टैर्नीलैर्मेचकैः, कर्केतनै रत्नविशेषैः, वज्रैर्हीरकैः, गारुडैर्गारुत्मतैर्मणिभिः, कुतोऽपि कारणाच्छुष्काश्चतुःपयोधयो रत्नशेषत इव, भान्ति । उत्प्रेक्षा ॥

पट्यः पटक्षौमदुकूलकम्बलं मधूनि वर्माणि च रत्नकाञ्चनम् ।
क्रयाय कर्पूरमयांसि चक्रिणो यदापणानन्तरितं समस्त्यपि ॥ ३३ ॥

पट्य इति ॥ सीवितवस्त्रद्वयलक्षणाः पट्यः, पटाः परिधानवस्त्राणि क्षौमाणि वस्त्रविशेषाः दुकूलानि पत्रोर्णानि कम्बला ऊर्णायवः एषां समाहारः, मधूनि क्षौद्राणि, वर्माणि तनुत्राणि, रत्नानि पद्मरागादीनि, काञ्चनानि हिरण्यानि, कर्पूरं घनसारम् । जात्यैकत्वम् । अयांसि लोहानि, चक्रिणो रथाः, इत्येवं सकलवस्तुजातं यदापणानन्तरितं यस्यां हट्टानवच्छिन्नं क्रयाय द्रव्यविनिमयाय समस्ति ॥

रसेषु हेमे कुसुमेषु कुङ्कुमे घनेषु वज्रे जलजेषु मौक्तिके ।
समस्तपण्ये सुलभे सुदुर्लभं यदीयवेश्याजनपण्यमुज्ज्वलम् ॥ ३४ ॥

रसेष्विति ॥ रसेषु धातुषु सुवर्णे, पुष्पेषु घुसृणे, कठोरेषु हीरके, वारिजेषु मौक्तिके, एवं समस्तपण्ये सुलभेऽपि यदीयवेश्याजनं जात्योज्ज्वलं सुदुर्लभमित्यर्थः । सुलभेषु हिरण्यहीरकादिषु व्ययीक्रियमाणेष्वपि यन्नगरीनिवासिनां यूनां प्रचुरतया उज्ज्वलं लावण्ययौवनमनोहरणीयतादिगुणयुक्तं वैश्याजनरूपपण्यं दुर्लभं तासामल्पत्वादिति भावः । समुच्चयः ॥

कृतार्थसारान्व्यवहारघोषिणो न सत्पदव्याकरणेन मानितान् ।
गुरून्यदीयान्विपणींश्च संश्रितास्तृपान्यदीयाञ्जिहतेऽन्यवस्तुनः ॥ ३५ ॥

कृतेति ॥ कृतार्थसारान्विहितार्थनिर्णयान्, व्यवहारं लौकिकाचारं घुष्यन्ति वदन्तीत्येवंशीलान्, प्रमाणबाधादूरीकृतपदानां तर्ककाव्यसिद्धान्तशास्त्राणां व्याकरणेन च मा-

नितान् यस्यां भवान् गुरून्, कृतद्रव्यसारकान् क्रयविक्रयभाषिणः सत्पदव्या समीचीनमार्गेण करणेन नरेन्द्राध्यक्षधर्माधर्मविचारस्थानेन च मानितानधिष्ठितान् यस्यां भवान् विपणींश्च, संश्रिताः सन्तः शिष्या ग्राहकाश्च अन्यनगरीसंबन्धिनोऽन्यवस्तुनो वाञ्छया न जिहते यान्ति । श्लेषालंकारः ॥

परं वचित्वा पुरि देवदारु तन्न दारु यस्यामुपयाति विक्रयम् ।
गृहाणि तार्णानि भवन्ति पक्षिणां कुरङ्गजातिर्न नटेषु सद्मसु ॥ ३६ ॥

परमिति ॥ यस्यां पुरि परं केवलं देवदारु सरलद्रुमकाष्ठं वचित्वा विहाय तत्प्रसिद्धं दारु खादिरादि विक्रयं नोपयाति । तथा तार्णानि गृहाणि पक्षिणां चटकादीनाम्, न जनानाम् । कुत्सितनृत्यस्थानजातिर्नटेषु न, अपि तु कुरङ्गजातिः क्रीडामृगविशेषः सद्मसु गृहेष्वेवास्ति । परिसंख्या ॥

भटा जुहूराणरथद्विपं नृपाः श्रयन्ति घातं चतुरङ्गपद्धतौ ।
परांशुकाक्षेपणमङ्गना रतौ विधौ कलङ्कोऽप्यहिषु द्विजिह्वता ॥ ३७ ॥

भटा इति ॥ यस्यां चतुरङ्गपद्धतौ द्यूतविशेषे, केवलं भटा वीराः, जुहूराणास्तुरंगमाः, रथा लोहबद्धशकटाः, द्विपा दन्तिनः नृपा नरेन्द्रा घातं श्रयन्ति । अङ्गना रतौ परेभ्यो रमणेभ्योंऽशुकस्यापक्षेपणमाकर्षणम्, न तस्करादिभ्यः । विधौ चन्द्रे कलङ्कः, नान्यत्र । सर्पेषु सर्पता, न जनेषु सूचकता । परिसंख्या ॥

जडेषु बाह्येषु च जीवलोकतो दृशामपथ्येषु पदानतेष्वपि ।
हतावकुर्वत्सु जनस्य वेदनां नखाश्छिदां यत्र नयन्ति जन्तवः ॥ ३८ ॥

जडेष्विति ॥ यत्र जीवलोकतो जीवावष्टब्धशरीराद्बहिर्भूतेषु, दृशां लोचनानाम् अपथ्येषु आन्ध्यकारिषु, चरणनतेषु, हतावपि ताडनायामपि सत्यां जनस्य लोकस्य वेदनां कदर्थनाम् अविदधत्सु जडेषु अचेतनेषु नखाश्चरणरुहा एव छिदां खण्डनां न यन्ति प्राप्नुवन्ति । सम्यग्दर्शनादीनां विरोधिषु, ताडनायां सत्यामपि पदानतेषु पदलग्नेषु, जनस्य पीडामकुर्वत्सु, जडेषु अज्ञेषु, जीवलोकतो ब्राह्मणक्षत्रियवैश्यादिभ्यो बहिःकृतेषु चाण्डालादिषु जन्तवः प्राणिनः न यान्ति प्राप्नुवन्ति । परिसंख्या ॥

अनन्यसाधारणरूपकान्तिषु स्मरोऽन्धकारातिविघातहेतुषु ।
धनुः समारोप्य गृहीतरोपणः पुरि भ्रमन्यत्र करोत्युपप्लवम् ॥ ३९ ॥

अनन्येति ॥ यत्र पुरि गृहीतरोपणोऽङ्गीकृतबाणः स्मरो मारः न अन्यसाधारणा रूपकान्तिर्येषां तेषु अन्धकारस्यात्यन्तविघातकारणेषु चन्द्रादिषु सत्सु धनुः समारोप्य भ्रमन् सन् उपप्लवं करोति । चन्द्रादीनामुद्दीपकत्वात् । उक्तं च—'आस्तां परेषां नरकीटकानां तपस्यितानामपि वै मुनीनाम् । चन्द्रासवाभ्यां रमणीजनेभ्यः प्रोद्दीपनं केशवन-

न्दनस्य ॥' अथवा अन्धकस्यारातेर्विधातस्य तपश्चर्यातश्च्यवनस्य हेतुषु अनन्यसाधारण-रूपकान्तिषु कामिनीषु धनुः समारोप्येत्यादि । श्लेषः ॥

धनुर्गुणग्राहिषु नम्रवृत्तिषु प्रशुद्धवंशेषु परस्य पीडकम् ।
ऋजुप्रकारेषु कृतायतिष्वसौ भिनत्ति यस्यां हृदयानि मार्गणः ॥४०॥

धनुरिति ॥ गुणो ज्या शास्त्रचातुरीलक्षणश्च । नम्रा नमनशीला मार्दवी च । वंशो वेणुरन्वयश्च । ऋजुः सरलः कृताञ्जलिश्च । आयतिर्दीर्घतोत्तरकालश्च । परिसंख्या ॥

विलोलनेत्रेषु कुशाग्रबुद्धिषु प्रगीतरक्तेषु मृगेषु चापलम् ।
न यत्र तीक्ष्णाः परदारवृत्तयः परे कृपाणात्कलहप्रवेशिनः ॥ ४१ ॥

विलोलेति ॥ कुशाग्रे बुद्धिर्येषाम् । कुशाग्र इव तीक्ष्णा बुद्धिर्येषाम् । तीक्ष्णास्तीव्रा हिंस्राश्च । परेषां दारे विदारणे वृत्तिर्येषाम्, परेषां दारेषु पत्नीषु वृत्तिर्येषाम्, इति च ॥ कलहः कोशः कलिश्च । कृपाणात्खड्गात् । परिसंख्या ॥

प्रकोपनिर्मीलितरक्तलोचनं तलप्रहाराहतकीर्णशेखरम् ।
रतेषु दष्टाधरमाहृतांशुकं परं न यस्यां कदनं कचाकचि ॥ ४२ ॥

प्रकोपेति ॥ यस्यां प्रकोपेन विस्फुरितानि रक्तनेत्राणि यत्र, तलप्रहारेण पूर्वमाहताः पश्चात्कीर्णाः शेखराः केशबन्धनानि यत्र, कचेषु कचेषु गृहीत्वा प्रवृत्तं कदनं युद्धं सुरतेषु परं वर्तते नान्यत्र । परिसंख्या ॥

जघन्यवृत्तिं पुरि यत्र काञ्चयः श्रयन्ति कर्णेजपतां च कर्णिकाः ।
परस्य वा कण्ठकचग्रहोत्सवं व्रजन्ति मुक्तावलयो न योषितः ॥ ४३ ॥

जघन्येति ॥ जघन्या जघनभवा अधमा च । काञ्चयः कटिसूत्राणि । कर्णेजपता कर्णसामीप्यं सूचकता च । कर्णिकास्ताटङ्कभूषणानि । परिसंख्या ॥

मदच्युता नीरदनादबृंहिता भवन्ति यस्यामवदानवृत्तयः ।
अनुत्कटा नित्यविहस्तसंश्रया महारथा न द्विरदाः कदाचन ॥ ४४ ॥

मदेति ॥ यस्यां मदेभ्यो जातिकुलैश्वर्यरूपाभिमानज्ञानतपःसिद्धिशिल्पलक्षणेभ्यश्च्युताः, मेघनादवर्धिताः, अवदाने त्यागशौर्यप्रसिद्धौ वृत्तिर्येषाम्, अतीव्राः, नित्यं विहस्तानां निराश्रयाणां संश्रया महारथा भवन्ति ॥ द्विरदा गजा न गण्डक्षरणलक्षणेन मदेन च्युताः, रदैर्दन्तैर्नादैर्ध्वनिभिर्बृंहितैश्चीत्कृतैर्वर्जिताः, अवगतकटोद्भेदानान्तरीयवृत्तयः, नोद्भिन्नाः कटाः कपोला येषाम्, अनवरतविशिष्टकरसमाश्रयाः, कदापि भवन्ति । श्लेषपरिसंख्ये ॥

जले जने नक्रमहानियोजनं धनुर्भृतां ज्यानिहतिर्न संपदाम् ।
रणे यतौ चापगुणेन संग्रहो विशालता यत्र न सा विशालता ॥४५॥

जल इति ॥ यत्र जले नक्राणां महाव्यापारः । न जने वृद्धपरिपाटीहानिसंयोगः । धनुर्धराणां प्रत्यञ्चाविस्फारः । न संपदां ज्यानेर्हानितो विघातः । रणे शरासनजीवया स्वीकारः । निर्गुणे यतौ नाङ्गीकारः । विशालताविस्तीर्णता । विशालता विगतप्राकारता न । श्लेषपरिसंख्ये ॥

अनिष्टयोगः प्रियविप्रयोगिता प्रजाविलोपः पुररोधनं परैः ।
विलापितान्यायरवः पराभवः कथागमेष्वेव न यत्र जातुचित् ॥ ४६ ॥

अनिष्टेति ॥ यत्र पुरि । अनिष्टयोगः अनिष्टयोर्दुःखतत्कार्ययोर्योगः संबन्धः । प्रियविप्रयोगिता प्रिययोः सुखतत्कारणयोर्विप्रयोगिता विप्रलम्भः । प्रजानामष्टादशप्रकृतीनां विलोप उच्छेदः । परैः शत्रुभिः पुररोधनम् । विलापिता गुणग्रहणमिश्रं रोदनम् । अन्यायरवोऽनीतिशब्दः । अभिभवः पराभवः । एते प्रकाराः कथागमेष्वेव पुराणेतिहासेष्वेव श्रूयन्ते । नाप्रजासु जातुचित् कदापि ॥

च्युताधिकारा इव चिन्तयाकुला विनोदबिन्दोः श्रमगा मृगा इव ।
भुवं लिखन्तः कनकातुरा इव श्रयन्ति यस्यां कवयः परां व्यथाम् ४७

च्युतेति ॥ यस्यां कवय एव परां व्यथां श्रयन्ति नान्य इति परिसंख्या । विनोदबिदोः कुतूहललवाय । श्लेषाय । चतुर्थ्यर्थे षष्ठी । मृगास्तु जलबिन्दोर्विना श्रमप्राप्ताः । उपमालंकारः ॥

रथाङ्गनामा विरही क्षपाकरः स पक्षहीनो मुखरश्च कोकिलः ।
कृतोर्ध्वनाशः करभो नखक्षतं क्षतं न यस्यामपरं कुतश्चन ॥ ४८ ॥

रथाङ्गेति ॥ यस्यां रथाङ्गनामा चक्रवाको विरही, नान्यः । क्षपाकरश्चन्द्रः पक्षहीनः संततिवर्जितः (कृष्णपक्षे हीनतागामी) नान्यः सपक्षविधुरः । कोकिलो वाचालो नान्यः । उष्ट्रः कृतोर्ध्वघ्राणः; नान्यः । शूलारोपणमृत्युः । नखक्षतं क्षतमासीत्, अपरं कुतश्चन न । परिसंख्या ॥

कुकाव्यबन्धे यतिवृत्तभङ्गयोः स्थितिः समासादिषु लोपविग्रहम् ।
सरःसु रोधः पुरि यत्र पत्रिषु प्रयुज्यते पक्षतिरक्षरे लयः ॥ ४९ ॥

कुकेति ॥ यत्र पुरि यतेर्विच्छेदसंज्ञिकाया वृत्तस्य छन्दसो भङ्गयोः स्थितिरवस्थानं कुत्सितकाव्यबन्धे एव । यतेर्लिङ्गिनो वृत्तस्य ब्रह्मचर्यरूपस्य भङ्गयोस्तु न । समासादिषु व्याकरणप्रसिद्धेषु, लोपो विभक्त्यादेः, विग्रहो वृत्त्यर्थावबोधकवाक्यम्, नान्यत्र लोपो देवदायाद्यपहरणम्, विग्रहः परस्परं विरोधः । सरःसु तडागेषु रोधस्तटम्, नान्यत्रावरणम् । पत्त्रिषु विहगेषु पक्षतिः पक्षमूलम्, नान्यत्रापगता क्षतिः । अक्षरे वर्णे लयः श्लेषः, नान्यत्र । श्लेषः ॥

असत्यसंधाः परलोकवञ्चकाः कृतोपचाराः कृतकेन कर्मणा ।
मुहूर्तरक्तास्तरला बहुच्छलाः परे न यस्यां पुरि पण्यदारतः ॥ ५० ॥

---

१. 'यमकश्लेषचित्रेषु सशयोर्वबयोर्न भित्' इत्युक्तिमाश्रित्येदम्.

असत्येति ॥ यस्यां पुरि पण्यदारतो वेश्याजनतः परे अन्ये अनृतप्रतिज्ञाः, अन्यजनप्रतारकाः; कृतकेन कर्मणा विहितोपचर्याः, क्षणानुरागिणः, चञ्चलाः, प्रचुरच्छद्मानो न । परिसंख्या ॥

गतारिपुत्रासगुणायशोधिकासमानवापीवरनिम्ननाभिका ।
कथं कुलस्त्रीव सती सदानवा पुरी किल स्यादिति यत्र विस्मयः ॥९१॥

गतेति ॥ यत्र इति विस्मयो वर्तते । किम् । गता नष्टापलापिता आ समन्ताद्रिपवत्रासगुणेन यस्याः सा, यशोधिका, समानासु चतुरस्रासु वापीषु वरं निर्मलं निम्नं गभीरं नाभिभूतं मध्यभूतं कं जलं यत्र, सती समीचीना सदा सर्वदा नवा नूतना । दानवैर्दैत्यैः सहितापि समीचीनेतिविरोधः । परिहारस्तूक्तः । पुरी 'गता नष्टा कुलस्त्रीव' कथं स्यात् । यतो नष्टकुलस्त्री, अरिपूणां बन्धूनां त्रासो भयमेव गुणो यस्याः सकाशात्, अयशोधिका निन्दाबहुला, असमानवा न समानो जातिकुलाभ्यां वो वल्लभो यस्याः, पीवरा घना निम्ना गम्भीरा नाभिस्तुन्दीर्यस्याः, सर्वदा नवा प्राप्तयौवनभरा भवति ॥ अथवा इयं पुरी कुलस्त्रीव कथं न, अपि तु भवत्येव । यतः कुलस्त्री, गतारिपुत्रा गता विनष्टा अरिभूतपुत्रा यस्याः, पुत्रा वैरिणो नेति भावः । सगुणा गुणैरौदार्यादिभिः सहिता, यशोधिका यशःप्रचुरा, समा पितामातृकुलेन तुल्या मया लक्ष्म्या सहिता वा, समानवल्लभा वा, अनवा । परसंनिधौ वृद्धेव, अपि समन्ताद् या लक्ष्म्या शोभया वरा मनोज्ञा निम्ना नाभिर्यस्याः, सती पतिव्रता भवति । श्लेषोपमाविरोधाः ॥

को वा कविः पुरमिमां परमार्थवृत्त्या शक्नोति वर्णयितुमत्र विनिर्णयेन ।
नित्यं विधिः सततसंनिहितो विभूतिमन्यादृशां सृजति यत्र धनंजयाय॥९२॥

इति श्रीधनंजयविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये अयोध्याहास्तिनापुरव्यावर्णनो नाम प्रथमः सर्गः ।

को वेति ॥ यत्र अनवरतनिकटवर्ती विधिश्चतुर्मुखो विभूतिं संपदं अन्यादृशमपूर्वं धनंजयाय रामाय सृजति, तामिमां पुरं विनिर्णयेन परमार्थवृत्त्या वर्णयितुमत्र लोके कः कविः शक्नोति । भारतीयपक्षे—धनंजयाय अर्जुनाय । [यत्र काव्ये सततसांनिहितो विधिरिष्टदेवः अन्यादृशं अनन्यसाधारणां विभूतिं पदरचनाप्रतिभां धनंजयाय कवये सृजति ददाति ।] वसन्ततिलकावृत्तम् । आक्षेपालंकारः ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीच्छोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां पुरवर्णनो नाम प्रथमः सर्गः ।

---

द्वितीयः सर्गः ।

अथाभवत्सदशरथोग्रविक्रमः सरन्दिवानिशमृषिधर्मसंयमान् ।
पुरः श्रियः शशिरुचिपाण्डुराननं विकासयन्नधिपतिरिद्धशासनः ॥ १ ॥

अथेति ॥ स लोकप्रसिद्धः । अग्रविक्रमः प्रधानविक्रमः, दशरथः, दिवानिशमहोरात्रम् ऋषिभिः प्रणीते धर्मे निरूपितान् संयमान् स्मरन् सन्, इद्धं दीप्तमुत्कर्षं प्राप्तं शासनं यस्य तादृशः सन् पुरो नगरीसंबन्धिन्याः श्रियोऽधिष्ठानदेवतायाः शशिरुचिवत्पाण्डुरमाननं विकासयन्नधिपतिरभवत् ॥ भारतीयपक्षे—पाण्डुः कर्ता शशिरुचीत्याननविशेषणम् । पाण्डोर्विशेषणं सदशरथोग्रविक्रमः दशया संपूर्णयौवनैकया सहितश्चासौ रथेनोग्रस्तीव्रो विक्रमः प्रतापो यस्य स चेत्यर्थकम् । अन्यत्समानम् ॥ श्लेषः । सर्गेऽस्मिन्वैश्वदेवीवृत्तम् ॥

उरः श्रियः स्थलकमलं भुजद्वयं समस्तरक्षणकरणार्गलायुगम् ।
जयश्रियः कृतकविहारपर्वतौ समुन्नते भुजशिरसी बभार यः ॥ २ ॥

उर इति ॥ यः श्रियो लक्ष्म्याः स्थितिकमलमुरो वक्षः, सकलरक्षाविधानपरिघाद्वितयं भुजद्वयं बाहुद्वन्द्वम्, जयश्रियो वीरलक्ष्म्याः कृत्रिमक्रीडाचलौ समुन्नते उच्चे भुजशिरसी स्कन्धौ बभार ॥ रूपकालंकारः । समुच्चय इति केचित् ॥

परित्रया बहुभरणेन च प्रजामवीवृधद्विधिविहितां यतोऽखिलाम् ।
ततः प्रजापतिरिति यो मतः सतां ध्रुवं प्रजापतिरपि यूथितां गतः ॥ ३ ॥

परीति ॥ यतो विधिविहितामखिलां प्रजां परित्रया समन्ताद्रक्षणेन बहुभरणेन च अवीवृधत् वृद्धिमनैषीत् ॥ ततः कारणात् यो राजा प्रजापतिरिति सतां मतः, ध्रुवं निश्चयेन प्रजापतिः स्रष्टापि यूथितां गतः प्रजापतिसमूहमध्यं पतितः ॥ उत्प्रेक्षा ॥

न संममे दिशि दिशि निर्मलं यशो न पौरुषं रिपुषु वदान्यतार्थिषु ।
जगत्सु धीर्भुवि न चमूर्जनाशिषि श्रिया सह स्थितिरपि यस्य नायुषः ॥ ४ ॥

नेति ॥ यस्य राज्ञोऽवदातं यशो दिशि दिशि, पौरुषं विक्रमो रिपुषु, वदान्यता बहुप्रदता याचकेषु, धीः भुवनेषु, चमूः सेना पृथिव्याम्, लक्ष्म्या सह आयुषः स्थितिरपि जनाशिषि न संममे ॥ समुच्चयालंकारः ॥

गुणोऽखिलं वसु च परेण तद्वयं गृहीतमप्यभजत यत्र न व्ययम् ।
असत्यसंव्यवहृतिलोभविस्मयं परात्तमन्वगमदशेषतः क्षयम् ॥ ५ ॥

गुण इति ॥ यत्र राज्ञि परेण गृहीतमपि आत्मसात्कृतमपि गुणः स्वपरहिताहितविचारणा वसु हिरण्यादि द्रव्यं च अखिलं तद्वयम्, कथं नाशं नाभजत । अलीकलौकिकाचारः ममेदंभावः आश्चर्यं (पूर्वं) परैरात्तमशेषतः निर्मूलतः क्षयं विनाशमन्वगमत् ॥ वक्रोक्तिः ॥

अभूद्गुरुर्बहुरुपदेश्यभूमतः स यस्य योऽजनि जगदेकसद्गुरुः ।
हिते जडे परमहिते च पण्डिते रहस्यमन्त्रयत न पञ्चकं नयम् ॥ ६ ॥

अभूदिति ॥ यस्य उपदेश्यानां बहुत्वाद्बहुर्गुरुरभूत्, स जगतां लोकानामेकोऽसाधा-

रणः सन्क्लिष्टो गुरुरजनि ॥ यो हिते हेयोपादेयविवेकविकले जडे मनोवृत्तेरकुटिलस्वभावत्वाद्धृदयग्रन्थिविनिर्मुक्तत्वान्मूर्खत्वाद्वा, परं केवलमहिते विरुद्धे परैररातिभिर्महिते मणिहिरण्यादिना संतोष्य भेदिते वा पण्डिते अपकृतत्वादपकारं स्मारं स्मारं भेदकत्वात् परमिलितत्वाद्वा, रहस्येकान्ते पञ्चकं नयं नामन्त्रयत। एतेन नरपतेराकारादिना जनानामन्तर्मनःपरीक्षालक्षणकौशल्यमुपदर्शितम्। उक्तं च—'आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च। नेत्रवक्त्रविकारेण गृह्यतेऽन्तर्गतं मनः ॥' नयपञ्चकं च—कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिश्चेति। उक्तं च—'सहायः साधनोपायौ देशकालबलाबलम्। विपत्तेश्च प्रतीकारः पञ्चाङ्गो मन्त्र इष्यते ॥' समुच्चयालंकारः ॥

स्वमर्पयन्गुरुमधिदेवतामिव स्वबान्धवं गुरुमिव बह्वमन्यत।
सदापि यः स्वमिव सहायमास्तिकः कुलोचितं सुहृदमिवानुजीविनम् ॥ ७ ॥

स्वमेति ॥ य आस्तिकः स्वं द्रव्यमर्पयन् गुरुं स्वेष्टदेवतामिव, स्वभ्रातरं गुरुमिव, सहायं स्वमिव, कुलोचितमनुजीविनं मित्रमिव, सदापि बह्वमन्यत। उपमा ॥

यथायथं विधिषु चतुर्विधानया व्ययुज्यत क्षणमपि राजविद्यया।
नियुक्तया न च यदुपायचिन्तया विमुच्यते क्वचिदपि यो न सेनया ॥ ८ ॥

यथेति ॥ 'आन्वीक्षक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ। अर्थानर्थौ तु वार्तायां दण्डनीतौ नयानयौ ॥' इत्येवं यथायोग्यं विधिषु समुत्पन्नकार्येषु नियुक्तया चतुःप्रकारया आन्वीक्षिकीत्रयीवार्तादण्डनीतिलक्षणया राजविद्यया उपायचिन्तया सामादिस्वभावया च यस्मात्कारणात्क्षणमपि यो न व्ययुज्यत। तस्मात्कारणात्क्वचिदपि सेनया मातङ्गतुरगरथपदातिरूपया यो न विमुच्यते। समुच्चयः ॥

उपाददे परसुखदुःखचिन्तया न भूतिषु क्वचिदुदसिच्यत स्वयम्।
प्रमाद्यति स न विषसाद योगिवद्दिवानिशं विधिषु विभज्य यः स्थितः ॥ ९ ॥

उपादद इति ॥ परेषामाश्रितानामनाथानां च हिताहितयोश्चिन्तया 'केनोपायेनायं जनो दुःखेनापाक्रियते सुखेनापाक्रियते' इति परामर्शेन यः स्वयं परोपदेशानपेक्षमुपाददे जगृहे। तथा भूतिषु संपत्सु क्वचिदपि स्थाने नोदासिच्यत गर्वेणानुभूयते स्म। योगिवदौदासीन्यावलम्बिमुनीन्द्रवत् प्रमत्तो न बभूव विषण्णो न बभूव। विधिषु धर्मार्थकामलक्षणेषु अहोरात्रं विभज्य यो राजा स्थितः। समुच्चयः ॥

द्विपो जगद्विलयभयान्न्यपातयन्न्यसेवत स्मरमपि संततीच्छया।
गृहीतवान्करमपमित्य याचितुं स्वजन्म यः समगमयत्परार्थताम् ॥ १० ॥

द्विप इति ॥ यो लोकविनाशभीत्यारीन्व्यापादयामास। संतत्यभिलाषेण काममपि से-

वितवान्, याचित्वा दातुं सिद्धा यं जगृहे, इत्यनया युक्तयात्मोत्पत्तिं साफल्यतामनैषीत्। समुच्चयः॥

जिगाय षड्विधमरिमन्तराश्रयं ततः स्वयं त्यजति न षड्विधं बलम्।
न यस्य यद्व्यसनमदीपि सप्तकं स्थिराभवत्प्रकृतिषु सप्तसु स्थितिः॥ ११॥

जिगायेति॥ यतोऽयं अन्तराश्रयं षड्विधम् 'कामः क्रोधश्च मानश्च लोभो हर्षस्तथा मदः। अन्तरङ्गोऽरिषड्वर्गः क्षितीशानां भवत्ययम्॥' इत्युक्तभेदं रिपुं जितवान्। ततः स्वयं नृपतिः षड्विधम् 'श्रैणं दौर्गं च सौहार्दं मौलं भृतकमाटवम्। षड्विधं च बलं प्राहुर्बुधा नीतिविचक्षणाः॥' इत्युक्तभेदं बलं न त्यजति स्म। यद्यस्मात् यस्य सप्तकं 'दण्डपारुष्यकंदर्पवाक्पारुष्यार्थदूषणम्। मद्यस्त्रीद्यूतपापर्द्धितेति व्यसनसप्तकम्॥' इत्युक्तभेदं व्यसनं नादीपि। तस्मात्तस्य सप्तसु 'स्वाम्यमात्यौ सुहृत्कोशौ राष्ट्रं दुर्गं तथा बलम्। प्राकृतं सप्तकं प्रोक्तं नीतिशास्त्रविशारदैः॥' इत्युक्तेषु प्रकृतिषु स्थितिः स्थिराभवत्॥ विरुद्धत्वालंकारः॥

विवर्ज्य यः प्रियमहिषीं युवाधिपं स्वमप्यतः परमुपनीय लक्ष्यताम्।
सदोपधाविधिभिरमात्यमेकशो यथोचितं पदमनयद्विशोधितम्॥ १२॥

विवर्ज्येति॥ यो नृपतिः पट्टराज्ञीं मुख्यकुमारमात्मानमपि वर्जयित्वा अत एवैभ्योऽन्यं सर्वदा 'छलेन परचित्तानां धर्मार्थकामभीतिषु। परीक्षणं विधीयेत सोपधा कथ्यते बुधैः॥' इत्युक्तलक्षणाया उपधाया विधानैर्लक्ष्यतां विशोध्यभावममात्यं नीत्वा विशोधितं निर्बाधं यथायोग्यं पदं अमात्य-सचिव-महत्तर-पुरोहित-दण्डनायकादिपदवीमेकमेकं नीतवान्। समुच्चयः॥

वणिक्पथे खनिषु वनेषु सेतुषु व्रजेषु योऽहनि निशि दुर्गराष्ट्रयोः।
गुणाधिकं धनमववर्धदुद्धतं यशोधनं ध्रुवमुपचेतुमुज्ज्वलम्॥ १३॥

वणिगिति॥ य उज्ज्वलं शुभ्रम्। उद्धतमुल्बणम्। यशोधनं नेतुम्। गुणैरौदार्यादिभिः प्रचुरम्, कनकादिकं वणिजां मार्गे रत्नोत्पत्तिस्थानेषु कान्तारेषु समुद्रादितटेषु गोकुलेषु यस्य नियोगात्परे दुःखं गच्छन्ति तस्मिन्दुर्गे पशुधान्यहिरण्यसंपदा राजते शोभते तत्र राष्ट्रे वृद्धिं प्रापयामास। उत्प्रेक्षा॥

अनारतं तिसृषु सतीषु शक्तिषु त्रिवर्ग्यपि व्यभिचरति स्म न स्वयम्।
पदातयः किमु किमरातयः सुताः सहायता किमु किल यस्य बन्धुता॥ १४॥

अनारेति॥ यस्य सततं 'तिस्रो हि शक्तयः स्वामिमन्त्रोत्साहोपलक्षिताः। स्वपरज्ञाविधायिन्यो राज्ञां राज्यस्य हेतवः॥' इत्युक्तेः प्रभुमन्त्रोत्साहरूपासु तिसृषु शक्तिषु, सतीषु, त्रिवर्गी धर्मार्थकामलक्षणानां त्रयाणां वर्गाणां समाहारोऽपि, स्वयमात्मना, न व्यभिचरति परस्परं परितत्याज। धर्ममभिभूय नहि तादृशमर्थोपार्जनम्, तन्मूलत्वाद-

र्थस्य । यथोक्तमर्थोपार्जनमन्तरेण न यथोक्तकामानुष्ठानम्, कामानुष्ठानमन्तरा न संतानोत्पत्तिः, संतानादृते नार्थोपयोगः, अर्थोपयोगेन विना नो धर्मलाभ इति भावः । अपरार्धे साध्याहार्यत्र । अतएव उ संबोधने, किल आश्चर्ये, किमाक्षेपे । किं पदातयो व्यभिचरन्ति, अपि तु न। एवं किं शत्रवः, किं पुत्राः, किं मित्रसमूहः, किं बान्धवसंघः ॥ आक्षेपालंकारः ॥

भुवस्तलं प्रतपति संभ्रमन्रविः शशी चरन्स्वयमभिनन्दयत्ययम् ।
चरैः स्थितः पुरि सचराचरं जगत्परीक्ष्य यः स तपति संधिनोति च ॥१५॥

भुवेति ॥ रविशशिनौ स्वयं चरन्तौ जगत्प्रतापानन्दहेतू । अयं तु पुरि स्थित एव चारैर्जङ्गमस्थावरं जगत्परीक्ष्य संतापप्रीणने चकारेति सूर्यचन्द्रावतिशेत इत्यतिशयालंकारः॥

कृषीवलं कृषिभुवि वल्लवं वहिर्वनेचरं चरमटवीष्वयुङ्क्त यः ।
वणिग्जनं पुरि पुरसीम्नि योगिनं नियोगिनं नृपसुतबन्धुमन्त्रिषु ॥ १६ ॥

कृषीति ॥ यः क्षेत्रकौ कर्षकं, वहिर्गोपालं, वनेषु भिल्लं, पुरि किराटकवेषवन्तं, नगरसीम्नि कौलिकादिवेषवन्तं, राजसुतबान्धवसचिवेषु व्यापारिणं गूढदूतं न्ययुङ्क्त ॥ समुच्चयः ॥

वधूगृहे वधिरकिरातवामनं स्वरक्षया परबलसंग्रहेण च ।
प्रयुक्तवान्प्रणिधिमनाकुलं परानवोधि यः प्रतिवुबुधे च नापरैः ॥ १७ ॥

वध्विति ॥ रामागृहे बधिरं, किरातं विकलाङ्गम्, कुब्जकम्, आत्मरक्षया रिपुसैन्यपरिकलनेन च अनाकुलं चरं प्रयुक्तवान् यः परानबोधि, अपरैश्च न प्रतिबुबुधे ॥ समुच्चयः ॥

अवाहयत्तुरगमवाहितं गजं न चाविशद्वनमविगाहितं हितैः ।
ददर्श यः सपदि न सिद्धतापसं समाययौ न तमवरोधमेककः ॥ १८ ॥

अवाहेति ॥ यः, हितैः परीक्षितान्तःकरणैर्नरैः, अवाहितमनधिरूढम्, तुरगं गजं च, नावाहयन्न चालयामास । अविगाहितमव्यालोडितम्, वनं न प्रविवेश । सपदि सहसा, सिद्धतापसं तपस्विवेषं न ददर्श । तं लोकप्रसिद्धम् अन्तःपुरम्, एकक एकाकी सन्, न गतवान् । अन्तःपुररक्षिणीभिर्वृद्धाभिः सहावरोधमगमत् ॥ समुच्चयः ॥

इदं मया नयमपदिश्य वर्णितं शरं तु यः क्षिपति न यावदाहवे ।
शरासनं शरमिषुधिं परोऽक्षिपत्परं विदुर्यमनपवर्तकं महः ॥ १९ ॥

इदमिति ॥ इदं पूर्वोक्तं मया कविना नयमाश्रित्य वर्णितम् । अधुना विक्रमो वर्ण्यते—यो राजा यावत् सङ्ग्रामे शरं न क्षिपति, तावत् परः शत्रुः शरासनं धनुः शरं बाणम् इषुधिं भस्त्राम् अक्षिपन्मुक्तवान् । परं केवलं यं राजानम् अनपवर्तकं नित्यं महस्तेजो विदुः । नीतिमन्त इति शेषः ॥ विरोधः ॥

न विक्रमः शरभनिपातसंनिभः शृगालवद्भयबहुलो नयो न यः।
न निन्द्यते स्वयमनुकम्प्यते परैर्न येन वा चरितमधत्त तादृशम् ॥ २० ॥

न वीति ॥ येन चरितेन विक्रमः शरभनिपातसंनिभः शरभो विवेकविकलो लीलया किल विचित्रोल्लवनविधानोपपन्नो नखराङ्कुरैर्मृतमातङ्गगण्डस्थलं विदार्य चरणचतुष्टयमध्ये तं च निक्षिप्य पुष्टोऽभवत्। क्रमतो मृतकुथितगजेन्द्रपूयसंभवैर्जन्तुभिर्विदार्यमाणो मृतः तद्वदविचारितविहितो नाभवत्, नयः शृगालवत्। शृगालस्य हि 'समर्थजन्तुजातमालोकमालोकमन्तर्मुखाकारतया पर्यालोच्य चकितचकितत्वेन प्रपलायम्' इति नयः। तद्वत् भयबहुलो नाभूत्, स्वयं परैर्न निन्द्यते, नाप्यनुकम्प्यते, तादृशं चरितं यो राजा अधत्त धृतवान् ॥ समुच्चयः ॥

यदा व्यरित्सदरिमदित्सताथवा धनं तदारुषदतुषच्च यः परम्।
प्रकोपसंमदविषयो गुणः फलं विनोद्गमाद्वट इव यस्य संददे ॥ २१ ॥

यदेति ॥ यदा शत्रुं व्यरित्सद्धन्तुमैच्छत्, अथवा धनम्, अदित्सत दातुमैच्छत्, परं केवलम्, तदा यो राजा अरुषत्, अतुषच्च। उद्गमाद्विना कुसुममन्तरेण न्यग्रोध इव यस्यावनीशस्य रोषतोषगोचरो गुणः फलं समयच्छत् ॥ समुच्चयः ॥

प्ररोपयन्नयभुवि मूलसंततिं प्रसारयन्दिशि बहुशाखमन्वयम्।
फलं दिशन्विपुलमपुष्पयापनं जनस्य यः समजनि कल्पभूरुहः ॥ २२ ॥

प्ररोपेति ॥ यो नृपो नीतिभूमौ मूलस्य 'भाण्डागारी चमूभर्त्ता दुर्गाध्यक्षः पुरोहितः। कर्माध्यक्षोऽथ दैवज्ञो मन्त्री मूलं हि भूभृताम् ॥' इत्युक्तस्य संतानं प्ररोपयन्, दिशि बह्व्यः शाखाः पुत्रपौत्रादयो यस्मिंस्तथाभूतम् अन्वयमाम्नायं प्रसारयन्, अपुष्पयापनमनायासलभ्यं विपुलं प्रचुरं फलं प्रयच्छन्, सज्जनस्य कल्पवृक्षः समजनि। कीदृशः सुरभूरुहः। न्याय्यभूमौ मूलसंततिं नेत्रसमूहं प्ररोपयन्नधोऽधो नयन्, प्रचुरविटपस्थानम् अन्वयं बुध्नं विस्तारयन्, न पुष्पवद्यापना कालगमनिका यत्र तथाभूतं फलं विपुलं ददत् ॥ रूपकम् ॥

जलाशयं दिशि दिशि पङ्कजीविनं नवोत्थितं नियतिषु देशकालयोः।
विमर्द्य षष्टिकमिव विद्विषं भुवि प्ररोपयन्नतुलमलब्ध यः फलम् ॥ २३ ॥

जलेति ॥ यो नृपः जडचित्तं पापजीविनं देशकालयोर्नियतिषु भुवि दिशि दिशि नवोत्थितं नूत्नमुत्थितं विद्विषं शत्रुं विमर्द्य स्वस्थानात्प्रचाल्य प्ररोपयन्। भुवि दिशि दिशि जलाश्रयं कर्दमजीविनं नूतनमुत्पन्नं षष्टिकं व्रीहिविशेषं विमर्द्य मलित्वेव। अतुलं फलमलब्ध ॥ एतेन नीतिकौशल्यं दर्शितम् ॥ श्लेषोपमा ॥

सुहृज्जनं कृशयति यः स कर्कशं पदानतं द्विपमपि तं व्यगाहत।
निजं मलं क्षिपति हि वार्धिरुद्धतं नदीनदं समुपनतं विगाहते ॥ २४ ॥

सुहृज्जेति ॥ यो नृपः कर्कशं निर्दयं सुहृज्जनं मित्रलोकं कृशयति स्म तनूचकार । पदानतं चरणन्यस्तमस्तकं तं द्विपमपि व्यगाहत स्वीचकार । हि यथा वार्धिः समुद्र उद्धतमुत्कटं निजमात्मीयमपि मलं क्षिपति, समुपनतं सम्यक्प्रह्वीभूतं नदीनां नदानां समाहारं स्वीकरोति ॥ अर्थान्तरन्यासः ॥

विवर्धितानतिकठिनान्नखानिव प्रियानपि स्खलितगतीन्समच्छिनत् ।
पुपोष यस्तमिह न येन विक्रिया भवत्यपि स्वपठितमन्त्रतो भयम् ॥ २५ ॥

विवेति ॥ यो नृपः वृद्धिं प्रापितान् अतिनिष्ठुरहृदयान् स्खलिते पाते गतिः प्रवृत्तिर्येषां तथाभूतान् प्रियानपि, विवर्धितान् अतिकठिनान् स्खलिता प्रतिषिद्धा गतिर्गमनं यैस्तथाभूतान् प्रियान् करचरणशोभाविधायित्वेन मनोहरानपि नखानिव समच्छिनत् उच्चपदादपातयत् । येन पोषितेन विक्रिया न भवति तं नरमिह पुपोष । युक्तमप्येतत् । यतो गुरूपदेशमन्तरेणात्मनाधीतान्मन्त्राद्भयं स्यात्, तथा स्ववर्धितेभ्यः पापिभ्योऽपि ॥ अर्थान्तरन्यासः ॥

अनुद्धतान्युवजरतः श्रुतागमाञ्जितश्रमान्नयविनयान्वितान्सुतान् ।
अयोजयन्सममविरोधयन्परैश्चकार यः प्रकटमकर्कटस्थितीन् ॥ २६ ॥

अनुद्धेति ॥ अनुद्धताननुत्कटान्, श्रुत आकर्णित आगमो व्याकरणतर्कषड्दर्शनाभिप्रायसिद्धान्तस्वभावो यैस्तथोक्तान्, जितश्रमान् विहितशस्त्रशास्त्राभ्यासान्, नीतिप्रश्रययुक्तान् युववृद्धान्, पुत्रान्, परैः सह अघटयन् अविरोधयन् यो राजा प्रकटं यथा स्यात्तथा न विद्यते कर्कटस्येव कुलीरस्येव स्थितिर्येषां तथाविधान् अकरोत् । कर्कटपुत्रा हि पितरं भक्षयन्ति ॥

ऋतं वचोऽविसमुदितं क्रियाफलं कृतज्ञतां स्वविभवसंमितां मताम् ।
जिगीषुतां दिगवधृतां कुटुम्बितामशेषभूभरणभरां बभार यः ॥ २७ ॥

ऋतमिति ॥ यो नृपः वच ऋतं सत्यम्, क्रियाफलमविसंवादि, स्वविभूतिसंमितां कृतज्ञताम्, इष्टां दिक्ष्ववधृतां विजेतृताम्, समस्तभूमिपोषणाधारां कुटुम्बितां बभार ॥ समुच्चयः ॥

प्रसेदुषि स्थितिमति यत्र राजनि ध्वजांशुकान्यपि न जहार मारुतः ।
स चातकः सततत्तृषातुरोऽश्रुवाः पतिंवरावलयपरिग्रहे परम् ॥ २८ ॥

प्रेति ॥ यस्मिन् प्रसन्ने स्थैर्यवति राजनि सति, वायुरपि पताकिकावस्त्राणि न जहार । स प्रसिद्धश्चातक (एव) अनवरततृषाव्यग्रः, परं केवलं कन्याकंकणाङ्गीकारे वाष्पजलम् आसीत् ॥ परिसंख्या ॥

बलेन यः स्वयमनिलोऽपि नानिलः सनीतिरप्यभवदनीतिगोचरः ।
अशीतकः शशिशिशिरः समेखलः समेखलस्त्विति न जनेन दूषितः ॥ २९ ॥

बलेनेति ॥ बलेन सामर्थ्येन स्वयं यो राजा 'अनिलो वायुरपि स कथं नानिलः' इति विरोधः। न विद्यते इला भूमिर्यस्य तादृशो भूमिपरित्यक्तो नेत्यर्थः ॥ 'सनीतिः नीत्या सह वर्तमानोऽप्यनीतिगोचरः' इति विरोधः। न ईतयः 'अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः। स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः॥' इत्युक्ता गोचरा लोचनविषया यस्य तादृश इत्यर्थः ॥ 'शशीव चन्द्र इव शिशिरः क्षमया शीतलः, न शीतकः' इति विरोधः। न शीतको मन्दः कार्येष्वमन्द इत्यर्थः ॥ समे औदासीन्यावलम्बिनि पुरुषे खलो दुर्जनः, तु पुनः समे खलो दुर्जनोऽभवदिति कृत्वापि जनेन न दूषितः इति विरोधः। सह मेखलया कटिसूत्रेण वर्तमानः, समे साधावखलः प्रतिपालकः इति हेतोः 'दुष्टानां निग्रहो नीत्या शिष्टानां प्रतिपालनम्। राज्ञां धर्मोऽयमेवासौ नान्यः कश्चिच्च विद्यते॥' इत्युक्तेर्जनैर्न दूषित इत्यर्थः ॥ श्लेषविरोधौ ॥

न्याय्यं सुखावहमहो भुवि धर्मराज्य-
मित्यात्मनः प्रथयतः प्रजयानुभावम्।
तस्याभवत्प्रियतमा गुणपक्षपाता-
ल्लक्ष्म्याः स्वयंवरकृता प्रथमा सपत्नी ॥ ३० ॥

न्याय्यमिति ॥ अहो आश्चर्ये भुवि सुखमावहति तथोक्तम्, धर्मात्प्राप्तम्, धर्मेणोपलक्षितं प्राप्तं वा, राज्यम्, न्यायादनपेतम् यथोक्तप्रजापालनलक्षणम् इति आत्मनः स्वस्य, अनुभावं माहात्म्यम्, प्रजयाष्टादशप्रकृत्या, प्रथयतः ख्यापयतः तस्य प्रथमा स्वयंवरकृता प्रियतमा भार्या गुणानामौदार्यादीनां पक्षपातादङ्गीकारात् लक्ष्म्याः सपत्नी बभूव ॥ भारतीयपक्षे—तस्य पाण्डोः, धर्मस्य पाण्डो राज्यमिति विशेषः ॥ श्लेषः ॥ वसन्ततिलकावृत्तम् ॥

कलागमानामधिदेवतेव वेलेव लावण्यरसाम्बुराशेः।
अन्तर्निधिर्भूरिव वीरभूमिर्या वन्द्यतेऽद्यापि सती सतीभिः ॥ ३१ ॥

कलेति ॥ अद्यापि सांप्रतमपि वीराणां शूराणामुत्पत्त्यर्थं भूमिः शूरोत्पत्तिस्थानं या सती पतिव्रता, कलानां लिखितपठितगणितवेणुवीणादीनां चतुःषष्टेः आगमानां तर्कव्याकरणसिद्धान्तादीनां च इष्टदेवतेव, शरीरसमुदायशोभावारिवारिनिधेः वेला भरितामिव, अन्तर्गतो निधिर्यस्या तादृशी भूमिरिव, सतीभिः पतिव्रताभिर्वन्द्यते नमस्क्रियते स्तूयते, वा ॥ उत्प्रेक्षा ॥ उपजातिर्वृत्तम् ॥

या कौशल्या रूपशीलेन चार्वी दीनाङ्काकुन्त्यागसांनिध्ययोगात्।
दीनेष्वर्थिष्वाददेलोभवादान्नासौ राज्ञः स्वान्तमन्तर्जहार ॥ ३२ ॥

या कौशेति ॥ असौ कौशलो जनपदसमानशब्दः क्षत्रियः, तस्यापत्यं स्त्री कौशल्या। 'वृद्धेत्कोशला—' इति ञ्यङ्। राज्ञो दशरथस्य स्वान्तं मानसम् अन्त आन्तरं हृतवती।

या रूपशीलेन चार्वी मनोज्ञा सती दीनेष्वकिंचित्करेषु, अर्थिषु, दीनां म्लानां काकुं मनोभिप्रायं वक्रोक्तिं वा न लोभस्य वाद उक्तिर्यत्र तस्मात् त्यागसांनिध्ययोगात् त्यागनैकट्यसंबन्धात् नाददे ॥ भारतीयपक्षे—असौ कुन्ती राज्ञः पाण्डोः स्वान्तमन्तर्जहार । कौ क्षितौ शल्या शल्यमिव शल्या आत्मीयरूपशीलेनान्यासां कमनीयकामिनीनां शल्योत्पादकत्वात् । यतो रूपशीलेन चार्वी । अथवा कुशलभावः कौशली तया । एतेन वेणुवीणादीनां चतुःषष्टि-कलानां परिज्ञानलक्षणं दक्षत्वं प्रदर्शितम् । रूपशीलेन च चार्वी मनोहरा या दीनोऽग-विष्ठोऽङ्को लक्षणं यस्यास्तादृशी सती आगसामपराधानाम् निध्ययोगात् समूहासंबन्धाद् दीनेष्वर्थिषु लोभवादान् न आददे ॥ श्लेषः ॥ शालिनीवृत्तम् ॥

सौन्दर्यवर्येऽप्यवरोधवर्गे स्थिते विशेषेण स तामियेष ।
विहाय चूतस्य समस्तमङ्गं पुष्पोद्गमं चुम्बति हि द्विरेफः ॥ ३३ ॥

सौन्दर्येति ॥ स राजा सौन्दर्यवर्ये लावण्यप्रधाने अवरोधवर्गे स्थितेऽपि सति विशेषेण रूपशीलादिव्यवच्छेदिगुणेन तां राज्ञीमियेष । युक्तमेतत् । द्विरेफो भ्रमरः चूतस्याम्रस्य समस्तमङ्गं शाखाबुध्नादि विहाय पुष्पोद्गमं मञ्जरीमकरन्दं चुम्बति . आस्वादयति ॥ अर्था-न्तरन्यासः ॥ उपजातिवृत्तम् ॥

इति रतिमनयानुरुध्यमानो हृदि शरणोत्तममङ्गलं नमस्यन् ।
व्यसनरहितराजराज्यभारः स्वमुपचिकाय यशोधनंजयेन ॥ ३४ ॥

इति श्रीधनंजयविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधाने काव्ये
दशरथपाण्डुराजवर्णनं द्वितीयः सर्गः समाप्तः ॥

इतीति ॥ इत्यमुना प्रकारेण अनया पट्टराज्ञ्या रतिं सुरतोत्सवम् अनुरुध्यमानः कामय-मानः शरणयोग्यत्वाच्छरणम् उत्तमैः सर्वज्ञैः प्रणीतत्वादुत्तमम् मलं पापं गालयतीति मङ्गलं धर्मम् हृदि नमस्यन् व्यसनै रहितो राजा यत्र तथोक्तो राज्यभारो यस्य स राजा जयेन अरितिरस्करणेन स्वमात्मीयम् यश एव धनं उपचिकाय । वृद्धिं नीतवान् ॥ अथवा धनंजयेन कविना स्वं यश उपचिकाय वृद्धिं प्रापितवान् ॥ पुष्पिताग्रावृत्तम् ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीच्छोटीलालात्मजश्रीबदरीनाथविरचितायां
द्विसंधानकाव्यटीकायां राजवर्णनो नाम द्वितीयः सर्गः ।

---

तृतीयः सर्गः ।

अथास्य राज्ञः प्रियधर्मपत्नी धर्मोऽस्ति वन्ध्यः किमितीव मत्वा ।
रजःकणं तत्र फलाय काले बबन्ध चूताग्रिममञ्जरीव ॥ १ ॥

अथेति ॥ अथ अस्य राज्ञः प्रिया धर्मार्थे पत्नी 'किं धर्मो वन्ध्योऽस्ति' इति इव

मत्वा तत्र काले तारुण्यभरप्राप्तिसमये रजःकणमार्तवलवम् फलाय संतानाय, आम्राग्रमञ्जरी वसन्तकाले फलोत्पत्त्यै परागकणमिव, बबन्ध ॥ उपमा ॥ सर्गेऽस्मिन्वृत्तमुपजातिः ॥

इन्द्रो विभूत्या स बृहस्पतिर्वा बुद्ध्या सुतः स्यादिति वंशवृद्धाः।
सिद्धायमन्त्रेण निरुप्तवन्तश्चरुं स दिष्ट्या ववृधे च पौरः ॥ २ ॥

इन्द्र इति ॥ विभूत्या संपदा इन्द्रतुल्यः, अथवा बुद्ध्या बृहस्पतिः, सुतः पुत्रः स्यादिति हेतोः वंशस्थवृद्धाः सिद्धाय परमेष्ठिने मन्त्रेण बीजाक्षरादिलक्षणेन अथवा सिद्धो निष्पन्नः अयः शुभावहावधिर्येन तेन मन्त्रेण चरुमिष्टदेवतावलिविशेषम् निरुप्तवन्तो निश्चयेन दत्तवन्तः ॥ स पौरो नागरो जनः दिष्ट्या महोत्सवेन ववृधे ॥ समुच्चयः ॥

बोधातिरेकाय सरस्वतीव लक्ष्मीरिवानेकविधार्थहेतोः।
गर्भं महिष्याधित भूमिभर्तुः पुण्यस्य पुष्पोद्गम एष सर्वः ॥ ३ ॥

बोधेति ॥ महिषी पट्टराज्ञी भूमिभर्तुरवनीशस्य बोधातिरेकाय ज्ञानाधिक्याय सरस्वतीव नानाप्रकारद्रव्यनिमित्तं लक्ष्मीरिव, गर्भम् आधित धृतवती। युक्तमेतत्। एष सर्वः पुण्यस्य पुष्पोद्गमः अस्ति ॥ अर्थान्तरन्यासः ॥

दीप्तान्तरङ्गा शिखिनारणीव निधानगर्भेण भुवः स्थलीव।
सत्त्वेन तेन स्तिमितप्रकाशा जज्ञेऽलसोद्योगवतीव देवी ॥ ४ ॥

दीप्तेति ॥ तेन गर्भस्थितेन प्राणिना अलसा मन्दा सती देवी उद्यमयुक्तेव शिखिना वह्निना अरणीव दीप्तान्तरङ्गा इद्धान्तःकरणा, निधानगर्भेण निधियुक्तमध्येन भुवःस्थलीव स्थिरप्रकाशा जज्ञे ॥ उपमा ॥

आपाण्डुरं रागनिबद्धमङ्गमुत्साहबाहुल्यमुदात्तमोजः।
विश्वं जगद्वीप्सुरिवोदुवाह द्यौरभ्रलिप्त्यभ्युदितार्यमेव ॥ ५ ॥

आपेति ॥ सा देवी तथा विश्वं जगद् वीप्सुः व्याप्तुमिच्छुरिव ईषत्पाण्डुरम् अनुरागयुक्तम् अङ्गम् उत्साहस्य बाहुल्यं यत्र तादृशम् उदात्तमुत्कटम् ओजो धातूनां तेज उदुवाह बभार। यथा अभ्रैर्मेघैरीषल्लिप्ता अभ्रलिप्ती। 'क्तादल्पाख्यायाम्' इति ङीष्। अभ्युदित उद्गतः अर्यमा सूर्यो यस्यां तादृक् द्यौः ईषच्छ्वेतम्, लौहित्ययुक्तम्, उत्कृष्टा सा लक्ष्मीः शोभा यत्राहनि तस्योत्साहस्य सश्रीकदिनस्य बाहुल्यं यस्मात्तादृशम् अङ्गम् उदात्तमुल्बणम् ओजस्तेजश्च जगद् विश्वं वीप्सुरिव दधार ॥ श्लेषोपमा ॥

कुमारभृत्याकुशलः स तस्मिँल्लोकस्थितिं प्रत्यवधातुमैच्छत्।
अस्पृश्यमग्न्यादिभिरप्रधृष्यमन्येन तद्भ्रंश्यमविष्यमाहुः ॥ ६ ॥

कुमारेति ॥ तस्मिन्नापाण्डुरादिधरणकाले स राजा कुमाराणां भृत्यायां कुशलः स राजा लोकव्यवहारं प्रति अवधानीकर्तुम् ऐच्छत् यस्मात्तस्मात् लोकवृद्धाः तस्य राज्ञो

वंशे भवम् अग्न्यादिभिरष्टाभिर्देवव्यसनैः अस्पृश्यम् अन्येन अरिजातेन अप्रधृष्यमजेयम् न विषेण वध्यं च आहुः ॥

जाने हि मृत्स्नाभ्यवहारमात्रं मातुः प्रकाश्य च्छलमन्तरात्मा ।
समुद्रवेलाजलसिक्तसीमां गर्भस्थितः स ग्रसते स्म भूमिम् ॥ ७ ॥

जान इति ॥ स गर्भस्थ सत्वः अन्तरात्मा अव्यक्तरूपः सन्, मातुः मृत्स्नाभक्षणमात्रं छलं प्रकाश्य समुद्रस्य वेलाजलेन सिक्ता सीमा यस्यास्तां भूमिं ग्रसते स्म इति स्फुटमहं जाने ॥ उत्प्रेक्षालंकारः ॥

अव्यक्तभावोऽयमलब्धदेहस्तथाधितिष्ठन्नपि गर्भभूमिम् ।
कोऽप्यङ्कुरो बीजमिवानुभावात्स्वजन्महेतुं कुलमुद्बभार ॥ ८ ॥

अव्यक्तेति ॥ अप्रकटपरिणामः अलब्धशरीरः गर्भाशयमधितिष्ठन्नप्ययं सत्वः माहात्म्यात् आत्मोत्पत्तिकारणम् अन्वयम्, गुप्तसत्ताकः अलब्धदेहः मध्यावनीमधितिष्ठन् सन् अनिर्वचनीयोऽपि प्रथमोद्भिन्नसूचिकः स्वजन्महेतुं बीजमिव दध्रे ॥ उपमा ॥

सर्वज्ञमभ्यर्च्य महामहेन व्यधत्त तस्याः क्रियया महत्या ।
यथोचितं पौंसवनादि कर्म धर्मोपधाशुद्धविधिः पुरोधाः ॥ ९ ॥

सर्वज्ञेति ॥ 'आरभ्य संक्रान्तिदिनं हि यावन्मासाष्टमस्यावधिमुत्सवेन । पुत्रेप्सया धर्मविधिर्विधीयते तत्सूरयः पौंसवनं वदन्ति ॥ केचिच्च मासे किल पञ्चमेऽपि पूर्णोऽथ गर्भः कथमष्टमावधि । तयेति धर्मोद्विविधा हि संपत्संपूर्णमायुर्न रुजा भवेयुः ॥' इत्युक्तं पौंसवनादि कर्म महोत्सवेन सर्वज्ञं समर्च्य महत्या क्रियया धर्मपरीक्षा शुद्धविधिः पुरोहितो व्यधत्त ॥

स्वप्नेन सोमं निशि वीक्ष्य बालमादाय सारोप्य किल स्वमङ्कम् ।
लब्धोऽतिसौम्यस्तनयः प्रजानां मयेति दिष्ट्याभ्यववर्धदालीः ॥ १० ॥

स्वप्नेनेति ॥ मया निशि स्वप्नेन बालं सोमं वीक्ष्य च आदाय किल अनायासेन स्वमङ्कमारोप्य प्रजानामतिसौम्यस्तनयो लब्ध इति सा दिष्ट्या परमोत्सवेन आलीः सखीरभ्यवर्धत् आनन्दयांचक्रे ॥

ग्रहेषु तेषूच्चगतेषु तस्मिन्नक्षत्रयोगे सुषुवे कुमारम् ।
अवग्रहो यैरभवन्न भूमेर्येनापि न क्षत्त्रमुदीर्णमन्यत् ॥ ११ ॥

ग्रहेष्विति ॥ यैर्ग्रहैर्भूमेः अवग्रहः प्रतिबन्धो नाभवत्, येन नक्षत्रयोगेन अन्यत् क्षत्रं न उदीर्णं समुत्पन्नम्, तेषु ग्रहेषूच्चगतेषु सत्सु तस्मिन्नक्षत्रयोगसमाहारे सति कुमारं सुषुवे ॥ समुच्चयः ॥

तस्मिन्सुते तत्क्षणजातमात्रे रत्नप्रदीपाः प्रभया विमुक्ताः।
नित्यं नरालम्बितभोगभागा नागा इवोच्चैः सविषादमस्थुः ॥ १२ ॥

तस्मिन्निति ॥ तस्मिन् सुते तत्समयजातमात्रे सति रत्नप्रदीपा प्रभया विमुक्ताः, नित्यं नरे आलम्बितो भोगभागो यैस्ते नागा इव, उच्चैः सविषादं यथा स्यात्तथा अस्थुः ॥ उत्प्रेक्षा ॥

नालं न्यधित्सद्भुवि यत्र नाभ्यं पदे पदे तत्र निधिं निचाय्य।
रोमाञ्चितः कञ्चुकमन्यदेकं स कञ्चुकी पर्यधितेव हृष्टः ॥ १३ ॥

नालमिति ॥ स कञ्चुकी यत्र भुवि नाभिभवं नालं न्यधित्सत् तत्र पदे पदे निधिं निचाय्य हृष्टः सन् रोमाञ्चितः सन्नन्यदेकं कञ्चुकं पर्यधितेव ॥ उत्प्रेक्षा ॥

दिशः प्रसेदुर्विमलं नभोऽभूत्सौवं न्यपप्तत्कुसुमं नभस्तः।
विरिद्धमिद्धं दिवि दुन्दुभीनां किं भागधेये सति दुर्लभं वा ॥ १४ ॥

दिश इति ॥ दिशः प्रसन्ना अभूवन्, नभो निर्मलमभूत्, आकाशतो दिविजं कुसुमं नितरां पपात, दिवि दुन्दुभीनां विरिद्धं ध्वनितम् इद्धं तारमभूत्, अथवा भागधेये भाग्ये सति (प्राणिनाम्) किं दुर्लभं स्यात् ॥ अर्थान्तरन्यासः ॥

आशीतिका वर्षवराः पुरंध्यः पञ्चाशदुत्तीर्णदशा निशान्ते।
कुब्जाश्च पुत्रोत्सवमोहमन्त्रैरनर्तिषुः स्तोभमिवाभिनीताः ॥ १५ ॥

आशीतीति ॥ अशीतिं भूता आशीतिकाः। 'तमधीष्टो भृतो भूतो—' इति ठञ् ॥ वर्षैरधिका अन्तःपुररक्षणनियुक्ता नपुंसकरूपा महत्तराः पञ्चाशद् वर्षाणि उत्तीर्णा दशा वयो यासां तादृशः पुरंध्यः कामिन्यः कुब्जाश्च अनुग्रपृष्ठवंशाः पुत्रोत्सवेनैव मोहमन्त्रैः स्तोभमावेशम् अभिनीताः प्रापिता इव नृत्यं चक्रुः ॥ उत्प्रेक्षा ॥

निवेदयद्भ्यः सुतजन्म राजा स राज्यचिह्नं सुतराज्यभास्वम्।
हित्वैतदेकं धृतवान्न किंचिद्देयं हि तुष्टैरपि नान्यदीयम् ॥ १६ ॥

निवेदेति ॥ स राजा सुतजन्म निवेदयद्भ्यः एकं यौवराज्योपयोग्यं राज्यचिह्नं हित्वा न किंचिद्धृतवान्। हि यतः तुष्टैरपि अन्यदीयं न देयम् ॥ अर्थान्तरन्यासः ॥

अन्तःपुरे राजनि राजधान्यां देशेऽप्यसंमाय दिशामधीशान्।
व्याप्यासनक्षोभकृदुत्सवोऽयमद्यापि विश्राम्यति न प्रजासु ॥ १७ ॥

अन्तेति ॥ अयम् आसनस्योपवेशनस्य क्षोभं संचलनं करोति स उत्सवः दिशामधीशान्व्याप्य अवरोधे राजनि राजधान्यां देशेऽप्यसंमाय अद्यापि प्रजासु न विश्राम्यति ॥ समुच्चयः ॥

समं द्विषन्तः शुकसारिकाभिर्विपाशिता वल्गु शिशुं शशंसुः।
निर्मोक्षमाणं सह धैनुकेन गृहे गृहे वात्सकमभ्यमुञ्चत्॥ १८॥

सममिति॥ शुकसारिकाभिः समं विपाशिता द्विषन्तो वल्गु यथा स्यात्तथा शिशुं शंसुः। निर्मोक्षमाणं आत्मानं मोक्तुमिच्छन्तं वत्ससमूहं धेनुसमूहेन सह गृहे गृहे अमुञ्चत्॥ समुच्चयः॥

पुरोहितावर्तितजातकर्मा नीरञ्जितं रत्नमिवाकरस्थम्।
पुत्रः प्रकाशोऽयमभूत्क्रिया हि द्रव्यं निसृष्टद्युति संस्करोति॥ १९॥

पुरोहीति॥ पुरोहितेनावर्तितं जातकर्म यस्य स अयं पुत्रः, नीरञ्जितमाकरस्थं रत्नव, प्रकाशः तेजस्वी अभूत्। हि यतः क्रिया निसृष्टद्युति अविनष्टकान्ति द्रव्यं संस्कति॥ अर्थान्तरन्यासः॥

पूर्वं परं ज्योतिरुपार्च्य दैवं स्थेयान्प्रकृत्या विशदो गरीयान्।
मनोभिरामोऽयमजातशत्रुरित्यर्थयुक्तं जुहुवे नृपेण॥ २०॥

पूर्वमिति॥ नृपेण दशरथेन, परमुत्कृष्टम्, दैवं ज्योतिः पूर्वमुपार्च्य पूजयित्वा अयं प्रत्या स्थेयान् स्थिरः, गरीयान् गरिष्ठः, अजाताः शत्रवः शातयितारो यस्य। अपरातः। यद्वा यमजातशत्रुः यमजं मरणमतन्ति शत्रवो यस्य, यमाय यावज्जीवव्रताय जाताः क्तशत्राः शत्रवो यस्येति वा, मनोभिश्चित्तेन विशदः स्वच्छाशयः। 'ढ्र लोपे' इति दीस्तु संज्ञापूर्वकत्वान्न। तथा च भट्टिकाव्यस्थ ४ सर्गे 'जाक्षिमोऽनपराधेऽपि नरान्नक्तंदिवं यम्। कुतस्त्यं भीरु यत्तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे॥' इति ३९ पद्यव्याख्याने भीरु यत्र 'संज्ञापूर्वकत्वात्संबुद्धिगुणो न' इति, 'क्रियाशब्दत्वादमुष्यत्वाच्च ऊङुत इत्यूङ्भावः' त्यप्यत्रैव सर्गे २१ पद्यव्याख्याने जयमङ्गला। मनः अभि लक्षीकृत्य अभेः कर्मप्रवनीयत्वेन मन इत्यत्र द्वितीया वा। रामः इति अर्थयुक्तं यथा स्यात्तथा जुहुवे आहूतः॥ रतीयपक्षे—मनोभिरामः कमनीयः, मनोभिः आमः सार्द्र इति वा, अजातशत्रुः धिष्ठिरः॥ श्लेषः॥

दिनानि लब्ध्वा ववृधे शशीव कुब्जानवष्टभ्य विचक्रमे च।
किंचिद्बभाषे सवयोभिरल्पं यात्रां जनस्योपदिशन्निवासीत्॥ २१॥

दिनानीति॥ [पुत्रः] जनस्य लोकस्य यात्रां स्थितिमुपदिशन्निवासीत्, दिनानि प्राप्य शीव ववृधे, कुब्जानामाश्रयेण विचचाल, मित्रैः सह किंचिदुक्तवांश्च॥ समुच्चयः॥

कपोलयोर्मूर्धनि पादयोस्तं निमीलिताक्षं नृपतिश्चुचुम्ब।
स्वस्य प्रियायाश्च सुतेऽवतीर्णमास्वादयन्स्नेहमिवैकरूपम्॥ २२॥

कपोलेति॥ स्वस्य प्रियायाश्च एकरूपं सुतेऽवतीर्णं स्नेहमास्वादयन्निव नृपतिः निमीलिताक्षं यथा स्यात्तथा तं कपोलादिस्थाने चुचुम्ब॥ उत्प्रेक्षा॥

स प्राज्ञमाहाकुलशूरसङ्गं चकार पोतुः प्रथमं नरेन्द्रः ।
पृक्तं नवं भाजनमत्र येन तद्गन्धरूपं हि भवत्यवश्यम् ॥ २३ ॥

स प्राज्ञेति ॥ स नरेन्द्रः पोतुः पुत्रस्य प्रथमं प्राज्ञैर्महाकुलसंभूतैः शूरैः सङ्गं चकार । हि यतो येन वस्तुना नवं भाजनं पृक्तं भवति तद्गन्धरूपमेवात्र लोकेऽवश्यं भवति ॥ उक्तं च—'नवान्यमत्राणि शुभोऽशुभो वा वासोऽपि लग्नोऽनयदात्मभावम् । यान्येव तानीतरथा विधातुं शक्नोति नूनं न चतुर्मुखोऽपि ॥' अर्थान्तरन्यासः ॥

लिपिं स संख्यामपि वृत्तचौलः समाप्य वृत्तोपनयः क्रमेण ।
ब्रह्माचरन्षोडशवर्षवद्धमादत्त विद्याः कृतवृद्धसेवः ॥ २४ ॥

लिपिं स इति ॥ समुच्चयः ॥

आन्वीक्षिकीं शिष्टजनाद्यतिभ्यस्त्रयीं च वार्तामधिकारकृद्भ्यः ।
वक्तुः प्रयोक्तुश्च स दण्डनीतिं विदां मतः साधु विदांचकार ॥ २५ ॥

आन्वीक्षिकीमिति ॥ शिष्टजनादान्वीक्षिकीम्, मुनिभ्यस्त्रयीम्, अधिकारनियुक्तेभ्यो वार्ताम्, वक्तुः प्रयोक्तुश्च दण्डनीतिम्, विदां मतः स साधु यथा स्यात्तथा विदांचकार ॥ समुच्चयः ॥

कृत्वा सपर्यां कुलदेवताभ्यो विधाय गोदानविधिं सुतस्य ।
सवृत्तविद्याभिजनानुरूपं स दारकर्मावनिपश्चकार ॥ २६ ॥

कृत्वेति ॥ अवनिपः स कुलदेवताभ्यः सपर्यां कृत्वा सुतस्य गोदानविधिं विधाय समानेन वृत्तेनाचरणेन, विद्यया व्याकरणतर्कादिलक्षणया, अभिजनेन कुलेन अनुरूपं योग्यं दारकर्म विवाहं चकार ॥ समुच्चयः ॥

सज्जानकीनाशमतेरपेता नवा वधूः प्रेम निदर्श्य यूनः ।
विलासिका चित्तमसौ जहार किं कोऽपि तादृग्विषयेऽस्त्यसक्तः ॥ २७ ॥

सज्जेति ॥ नाशोऽदर्शनम् । वियोग इति यावत् । तस्य मतेरपेता । न वियोगविषयेत्यर्थः । नवा तरुणी विलासो नेत्रजो विकारोऽस्यास्ति सा विलासिका असौ जानकी वधूः सत्समीचीनम् 'यत्रावकाशलेशोऽस्ति नोपचारविचारयोः । तज्ज्ञानं प्रेम चाशेषदुःखभियोगिभोगिनोः ॥' इत्युक्तलक्षणं प्रेम निदर्श्य यूनस्तरुणस्य रामस्य चित्तं हृदयं जहार, किं कोऽपि तादृक् रामसदृशो विषये इष्टस्रग्वनिताचन्दनादावसक्तोऽस्ति ॥ भारतीयपक्षे—सज्जा प्रगुणा यद्वा सतः सत्पुरुषाज्जाता कुलीना कीनाशस्य यमस्य मतिरिव मतिः कीनाशमतिः क्रूरेत्यर्थः । यद्वा 'कीनाशः कृपणो लुब्धो दीनो गृध्नुश्च मर्दनः' इत्युक्तेः कीनाशा दीना मतिः कीनाशमतिस्तस्या अपेता विलासिका विलासिनी यूनो युधिष्ठिरस्य चित्तं न जहारेति विशेषः । श्लेषार्थान्तरन्यासः ॥

भीमः क्रमाद्धर्महरः किरीटी प्रांशुर्विशालः ककुदुन्नतांसः ।
अभूद्वृषस्कन्धधरो महेच्छः स वर्तितो वर्तिकयेव धात्रा ॥ २८ ॥

भीम इति ॥ भीमो भयानको भीमसेनश्च । किरीटी मुकुटवान् अर्जुनश्च । क्रमात् परिपाट्या आनन्तर्येण च । प्रांशुः उच्चैस्तरः। विशालो विस्तीर्णः । ककुद् वृषस्कन्धोर्ध्वग्रन्थिरिवोन्नतावंसौ यस्य । वृषस्य वृषभस्य धर्मस्य वेव स्कन्धधरा ग्रीवा यस्य । महतीच्छा यस्य, यद्वा मह उत्सवे इच्छा यस्य, यद्वा महे अच्छोऽविकलहृदयः । वर्तिका चित्रलेखनी । वर्तितश्चित्रितः ॥ उत्प्रेक्षा ॥

ततः सुमित्रोदयहेतुभूतामद्र्युन्नतिं प्राप्तमसूत सूनुम् ।
योऽपप्रथत्सन्नकुलोदितारिः श्रीलक्ष्मणाख्यां सहदेवचर्यः ॥ २९ ॥

तत इति ॥ ततः रामोत्पत्त्यनन्तरम्, सुमित्रा राज्ञी उदयहेतुभूतां विभवकारणभूताम्, अद्र्युन्नतिम् अद्रेः पर्वतस्य संबन्धिनीम् उन्नतिम् पार्वतीमिवोन्नतिं वा प्राप्तं सूनुम् पुत्रम् असूत जनितवती । सन्ना हता कुले उदिता अरयो येन सः,सन्नकुलोदितारिः देवानामिव चर्यया गत्या सहवर्तमानः सहदेवचर्यः यः श्रीलक्ष्मणाख्यां 'लक्ष्मण' इति नाम अपप्रथत् प्रकटितवान् ॥ भारतीयपक्षे—ततः युधिष्ठिरभीमार्जुनोत्पत्त्यनन्तरम् । सुमित्रोदयहेतुभूता शोभनमित्राणामुदयहेतुभूता, माद्री राज्ञी उन्नतिं प्राप्तं सूनुमसूत । यः सहदेवेन चर्या गमनं यस्य स सहदेवचर्यः तादृशः सन् दितारिः दिताः खण्डिता अरयो येन तादृशः सन् श्रीलक्ष्मणा श्रिया लक्ष्म्या लक्ष्मभिर्लक्षणैश्च नकुल इत्याख्याम् अपप्रथत् ॥ श्लेषालंकारः ॥

राज्ञस्तथा सुप्रजसः कुलस्य सर्वस्य सोऽतीव जनस्य जातः ।
शत्रुघ्ननामाभ्युदयैकहेतुः पुत्रं पुनातं(नं) हि कुलं निराहुः ॥ ३० ॥

राज्ञ इति ॥ यथा रामलक्ष्मणौ पुत्रौ जातौ, तथा राज्ञो दशरथस्य सुप्रजसः कामिन्याः स शत्रुघ्ननामा पुत्रो जातः, यः सर्वस्य कुलस्य जनस्य अतीव अभ्युदयैकहेतुः । हि यतः कुलं पुनातं(नं) पुत्रं निराहुः ॥ उक्तं च—'पुष्णाति धर्मं हि कुलक्रमेण समागतं यः कृपया प्रपूतम् । कुलं पुनातं(नं) जनकस्य कीर्त्या पुत्रं पवित्रं प्रवदन्ति शिष्टाः ॥' भारतीयपक्षे—शत्रुघ्नं नाम यस्य स नकुलः सर्वस्यातीवाभ्युदयैकहेतुर्जात इत्यन्वयः ॥ अर्थान्तरन्यासः ॥

सर्वः कुमारः सुकुमारमूर्तिः सोष्णीषमूर्धोन्नतिरौर्णिकीभ्रूः ।
आलिङ्गितश्रीकरकंकणाङ्कमार्गादिवावर्तितकण्ठरेखः ॥ ३१ ॥

सर्व इति ॥ सुकुमारा मूर्तिर्यस्य स, उष्णीषेण ब्रह्मद्वारस्थोच्चप्रदेशग्रन्थिलक्षणविशेषेण सहिता मूर्ध्न उन्नतिर्यस्य सः, ऊर्णायां भ्रुवोरन्तरावर्त्ते नियुक्ते भ्रुवौ यस्य । 'तत्र नियुक्तः' इति ठकि 'वृद्धिनिमित्तस्य—' इति पुंवद्भावनिषेधः । आलिङ्गितायाः श्रिया लक्ष्म्याः शोभायाः करकंकणस्य चिह्नवतो मार्गादिव आवर्तिता कण्ठरेखा यस्य स सर्वः

कुमारः कथंचित् पितुर्गौरवं ललङ्घे इति तृतीयश्लोकस्थक्रियया संबन्धः ॥ उत्प्रेक्षा ॥

ऊर्जस्वलः पर्वतभित्तिवक्षा निगूढजानुद्वयलम्बबाहुः।
गम्भीरनाभिः स बृहन्नितम्बः श्रीगोपुरस्तम्भनिभायतोरुः ॥ ३२ ॥

ऊर्जस्वल इति ॥ निगूढं जानुद्वयं यस्य तादृशः। लम्बौ बाहू यस्य। श्रीगोपुरस्तम्भेन निभे आयते ऊरू यस्य सः ॥ उपमा ॥

चतुर्दशद्वन्द्वसमानदेहः सर्वेषु शास्त्रेषु कृतावतारः।
गुणाधिकः प्रश्रयभङ्गभीरुः पितुः कथंचिद्गुरुतां ललङ्घे ॥ ३३ ॥

चतुर्देति ॥ भ्रू-लोचन-नासा-कपोल-कर्ण-ओष्ठ-स्कन्ध-बाहु-पाणि-स्तन-पार्श्व-ऊरु-जङ्घा-पादानां चतुर्दशानां द्वन्द्वेन समानो देहो यस्य ॥ अन्त्यदीपकम् ॥

तत्याज पुत्रो विनयं न कश्चिज्जहौ पिता नानुनयं कदाचित्।
यतः पितापुत्रमनन्यदाशं कस्यापि नाभूदपरुद्धवृत्तम् ॥ ३४ ॥

तत्याजेति ॥ यतः पितापुत्रं ताततनयम् कस्यापि अन्योन्यम् न अन्यस्मिन्नाशा यस्य तादृशं सत्। 'अषष्ठ्यतृतीयास्थस्य—' इति दुगागमः। अपरुद्धवृत्तं लौकिकव्यवहारनिन्द्याचरणं नाभूत्। तस्मात् कश्चित्पुत्रः स्वपितरि विनयं न तत्याज। तथा पिता स्वपुत्रेषु कदाचित् अनुनयं प्रसादं न जहौ। निश्चयालंकारः ॥

तं द्रोणसंशब्दनमादधानं गुरुं प्रणम्यादित चापविद्याम्।
राजन्यकं तां विजहौ विरुद्धां ग्राह्यं च हेयं च भवेद्गुरुभ्यः ॥ ३५ ॥

तमिति ॥ राजन्यानां समूहः द्रोणसंशब्दनं मेघध्वनिं द्रोणसंज्ञां चाददानं तं गुरुं पितरमाचार्यं च प्रणम्य चापविद्यां धनुर्विद्यामादित, विरुद्धामसम्यग्विद्यां तां चापविद्यां विजहौ, यतो गुरुभ्यस्तदुपदेशात्सम्यग्ग्राह्यम्, असम्यग्घेयं भवेदेव ॥ श्लेषः ॥

पदप्रयोगे निपुणं विनामे संधौ विसर्गे च कृतावधानम्।
सर्वेषु शास्त्रेषु जितश्रमं तच्चापेऽपि न व्याकरणं मुमोच ॥ ३६ ॥

पदेति ॥ पदानां सुप्तिङन्तानां वैशाखलीढप्रत्यालीढलक्षणोपलक्षितानां च प्रयोगे रचनायां विन्यासे च, निपुणं दक्षम्, विनामे षत्वणत्वयोः शरनम्रीकरणे च, संधौ प्रस्तवर्णैकत्रीकरणे शरसंधाने च, विसर्गे प्रकटीक्रियतेऽकार(?)संश्लिष्टार्थो येन तत्र शरत्यागे च, कृतावधानं विहितोद्यमम्, सर्वेषु शास्त्रेषु कृत्तद्धितसमासैकशेषादिषु राजव्यधापत्रच्छेदादिचित्रेषु च, जितश्रमं विहिताभ्यासम्, तद्राजयन्कं चापेऽपि धनुर्विद्यायामपि व्याकरणं तत्साम्यं न मुमोच त्यक्तवान् ॥ श्लेषः ॥

उत्प्रेक्षणे लक्ष्यविधौ च दक्षं धर्मे नदीर्णं पटु शब्दभेदे।
निष्णातमुच्चैरचनासु चैतच्चापेऽपि तत्याज न काव्यकर्म ॥ ३७ ॥

उत्प्रेक्षेति ॥ उत्प्रेक्षणे उत्प्रेक्षालंकारे दृष्टमुष्टयोरवलोकने च, लक्ष्यविधौ अर्थनिरूपणायां वेधव्यधायां च, दक्षम्, धर्मे अष्टादशस्थलव्यावर्णनलक्षणे धर्मार्थकामरूपे त्रिवर्गे वा धनुर्गुणे च, नदीर्णं प्रवीणम्, शब्दभेदे तत्तद्देशनियतप्रयोक्तव्यशब्दविभागे शब्दमेव लक्ष्यीकृत्य शरमोक्षणे च, पटु कुशलम्, उच्चै रचनासु खड्गचक्रलाङ्गलमुरजादिबन्धरचनासु दण्डस्वस्तिकाहितुरगचक्रव्यूहादिषु च निष्णातं तीक्ष्णधिषणम्, एतद्राजन्यकं चापेऽपि काव्यकर्म न तत्याज ॥ श्लेषः ॥

आमण्डलीभूतशरासनस्य ज्याघोषवित्रासितदिग्गजस्य ।
त्रैलोक्यमालीढपदस्य मध्यमापत्य लीनं तदमंस्त रुष्टम् ॥ ३८ ॥

आमण्डेति ॥ रुष्टं कुपितम्, तद्राजन्यकं कर्तृ त्रैलोक्यं भुवनत्रयम् आ समन्तान्मण्डलीभूतं कुण्डलीभूतं शरासनं यस्य तादृशस्य ज्याया घोषेण वित्रासिता दिग्गजा येन तादृशस्य आलीढस्थानविशेषस्य मध्यम् आपत्य आगत्य लीनं द्रवभावेन परिणतम् अमंस्त ॥ उत्प्रेक्षा ॥

एवं चूडाताडितपादं परभूपा भक्त्यैकैकेयेयमुपेयुः शरणं यम् ।
सोभीतोऽयं तत्र समन्ताद्भरतोऽभूत्पुत्रः सर्वोपायविधानैर्जितशत्रुः ॥ ३९ ॥

एवमिति ॥ एवं रामलक्ष्मणशत्रुघ्नोत्पत्तिप्रकारेण सः, अयं प्रत्यक्षदृष्टः, अभीतो निर्भयः, यद्वा अयं शुभावहविधिम् अभि समन्तादितः प्राप्तः, सर्वेषामुपायानां सामदानादीनां विधानैः समन्तात् जितशत्रुः भरतः तन्नामा पुत्रः तत्र दशरथे राजनि अभूदजनि, यं कैकेयेयं कैकेय्या अपत्यं चूडाताडितपादं मुकुटाग्रमणिचुम्बितचरणं यथा स्यात्तथा भक्त्यै सेवायै शरणं परभूपाः शत्रव उपेयुः ॥ भारतीयपक्षे—तत्र पाण्डुनृपे सर्वः पुत्रो भरतः तद्वंश्यः अपायविधानैः नीतिशास्त्रीयमार्गविपरीतक्रियाभिः समन्ताज्जितशत्रुरभूत्, यम् अयेयम् यातुमशक्यम् एकैके असहायाः सन्तः भक्त्या इति विशेषः श्लेषः ॥ मत्तमयूरं वृत्तम् ॥

श्रिया विलोलो भरतो न जातः सुतो विनीतः सकलो बभूव ।
भज्येत राज्यं ह्यविनीतपुत्रं घुणाहतं काष्ठमिव क्षणेन ॥ ४० ॥

श्रियेति ॥ भरतो नाम सुतः श्रिया लक्ष्म्या विलोलश्चञ्चलो न जातः किंतु विनीतो नम्रः सकलः कलाभिर्गणितपठितवेणुवीणादिभिः सहितश्च बभूव ॥ भारतीयपक्षे—सकलः सुतः श्रिया लक्ष्म्या आविलः युक्तः सन् लोभरतो लुब्धो न जातः इति विशेषः ॥ श्लेषार्थान्तरन्यासः ॥

तस्मिन्काले लीलया धार्तराष्ट्रास्ते कौरव्याभासमानस्वरूपाः ।
आलोकान्तक्रान्तकीर्तिप्रतापा न्याय्यस्थित्यापारपारा इवास्थुः ॥ ४१ ॥

तस्मिन्निति ॥ लीलया गतिविशेषेण धार्तराष्ट्रा हंसोपमाः यद्वा लीलया हेलामात्रेणापि धृतं राष्ट्रं पशुधान्यहिरण्यादिसंपदा राजते तत् यैस्ते धृतराष्ट्राः ततः स्वार्थिकोऽण्,

रव्याभासमानस्वरूपा रविरिवाभासमानं स्वरूपं येषां तादृशा आलोकान्तं क्रान्तौ कीर्तिप्रतापौ येषां तादृशास्ते रामादयः कौ पृथिव्यां तस्मिन्काले न्याय्यस्थित्या अपारपाराः समुद्रा इव अस्थुः ॥ भारतीयपक्षे—ते धार्तराष्ट्रा धृतराष्ट्रस्य पाण्डुज्येष्ठभ्रातुरपत्यानि कौरव्या लीलया भासमानस्वरूपा दीप्यमानमूर्तय इति विशेषः ॥ श्लेषालंकारः ॥ शालिनी वृत्तम् ॥

सर्वस्वादुर्योधनेनार्जयित्वा दत्त्वा पित्रे येन संपत्फलानाम् ।
पृक्तास्तेन ज्यायसा भ्रातरस्ते जग्मुर्लोकालम्बनस्तम्भमूर्तिम् ॥ ४२ ॥

सर्वेति ॥ येन योधनेन सर्वस्वादुः सर्वेषां स्वपरवंशोद्भवानां साधुवृत्तीनां स्वादुः । विश्वरसिकेत्यर्थः । फलानां संपद् अर्जयित्वा उपार्ज्य पित्रे दत्ता, तेन ज्यायसा ज्येष्ठेन रामेण पृक्ता युक्ता भ्रातरस्ते लक्ष्मणादयः लोकस्यालम्बनाय स्तम्भ इव मूर्तिं जग्मुः ॥ भारतीयपक्षे—येन दुर्योधनेन सर्वस्वा सर्वेषां स्वा आत्मीया फलानां संपत् अर्जयित्वा पित्रे धृतराष्ट्राय दत्ता इति विशेषः ॥ श्लेषोत्प्रेक्षा ॥

इति विनमयन्नुच्चैस्तब्धान्नताननतिवर्धय-
न्स परिणमयन्पृथ्वीं पुत्रैर्वसून्युपहारयन् ।
सुखमगमयत्कालं हर्म्ये स्मरन्परमेष्ठिनं
नहि सुतवतां नामासाध्यं धनंजयमिच्छताम् ॥ ४३ ॥

इति श्रीधनंजयविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधाने काव्ये राघवपाण्डवकौरवोत्पत्तिवर्णनस्तृतीयः सर्गः समाप्तः ।

इतीति ॥ स राजा दशरथः पाण्डुश्च, इति उक्तप्रकारेण पुत्रैः उच्चैस्तब्धान्रिपून् विनमयन् विशेषेण नम्रीकारयन्, नतान् अतिवर्धयन्, पृथ्वीं परिणमयन् हस्तेकारयन्, वसूनि द्रव्याणि उपहारयन् पुष्टिं प्रापयन्, परमेष्ठिनं स्मरन् स्मरणविषयं नयन्, कालं समयं हर्म्ये सुखं यथा स्यात्तथा अगमयत् । हि यतः धनं जयं चेच्छतां सुतवताम् असाध्यं नाम नास्ति ॥ अर्थान्तरन्यासः । हरिणीवृत्तम् ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीच्छोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां पुत्रोत्पत्तिवर्णनो नाम तृतीयः सर्गः ।

---

## चतुर्थः सर्गः ।

अथ जातु न यौवनोदये सहवासाय ममायमस्मरत् ।
इति जातरुषेव भूपतेर्जरसागृह्यत केशवल्लरी ॥ १ ॥

अथेति ॥ अयं राजा युवावस्थायां सहवासाय कदापि मम माम् । 'अधीगर्थ—' इति षष्ठी । नास्मरदिति जातरोषया इव जरया केशवल्लरी अगृह्यत ॥ उत्प्रेक्षा । सर्गेऽस्मिन्वैतालीयं वृत्तम् ॥

प्रथमस्तनयोऽभिषिच्यतामिति सापत्न्यभयादिवाजपत् ।
पलितं तमुपेत्य कर्णयोर्निजगुप्तिप्रशमो हि वार्धिमा ॥ २ ॥

प्रथमेति ॥ पलितम् तं राजानमुपेत्य कर्णयोः प्रथमस्तनयोऽभिषिच्यतामिति शत्रुत्वभयादिव अजपत् । हि यतः निजौ गुप्तिप्रशमौ यस्य तादृशो वार्धिमा वार्धक्यम् ॥ अर्थान्तरन्यासः ॥

विनिरूप्य स दर्पणे जरां निभृतं मौलिमुपोपवाजयन् ।
इति निर्विविदे विशांपतिर्विरतिं याति हि संसृतेर्बुधः ॥ ३ ॥

विनीति ॥ स विशांपतिर्निभृतं संकुचितं मौलिम् उपोपवाजयन् विधुन्वन् । 'वो विधूनने जुक्' इति णौ जुगागमः ॥ सन् दर्पणे आदर्शे जराम् अवलोक्य निर्विविदे निर्विण्णो बभूव । हि यतः बुधः संसृतेर्विरतिं याति ॥ अर्थान्तरन्यासः ॥

किमभुक्तमनुष्ठितं जनैर्यदपूर्वं प्रतिपालयन्त्यमी ।
ननु भुक्तसमैव वेदना सुखनामा विषयेषु भाविषु ॥ ४ ॥

किमिति ॥ अमी जना यदपूर्वमदृष्टं प्रतिपालयन्ति प्रतीक्षन्ते । तत् किं अभुक्तमननुभूतं जनैरनुष्ठितम् । अपि तु भुक्तमेव ॥ ननु भाविनं वैषयिकं भोगं प्रतीक्षन्ते इति चेत्, नैष दोषः । ननु च भाविषु विषयेषु, सुखमेव नाम यस्य तादृशी, वेदना विद्यते परिज्ञायते मनोव्यापारेणेन्द्रियव्यापारोद्भवं सुखमनया सा अनुभवनमित्यर्थः । भुक्तसमा भुक्तेन रमणीयेन स्रक्चन्दनादिविषयलक्षणेन समा अनुभवसमानकालिकैव ॥ शीतबहुले शिशिरे तृणाग्निसंयोगजसुखानुकारित्वाद्विषयाणामापद्रम्यत्वमवसानवैरस्यमिति भावः ॥

त्यजतो न जहाति योऽखिलान्विषयांस्तद्विषयैकमानसः ।
स जहातु दुरन्तभावनामजहद्वृत्तिमिमां कथं जनः ॥ ५ ॥

त्यजेति ॥ यस्त्यागं कुर्वतोऽप्यखिलान्विषयान् तेषु विषयेषु एकमसाधारणं मानसं यस्य तादृशः सन् न जहाति स जन इमां दुरन्तेषु रागादिषु भावनाम् अजहती वृत्तिर्वर्तनं यस्यास्तां कथं जहातु । अपि तु न ॥

क्षणभङ्गुरमङ्गमङ्गिनां न गता यौवनिका निवर्तते ।
विभवास्तृणवारिचञ्चला निचया मर्मरपत्त्रसंनिभाः ॥ ६ ॥

क्षणेति ॥ यौवनिका तरुणं वयः । तृणवारिवच्चञ्चलाः । मर्मरपत्त्रं शुष्कपर्णम् । निचया माद्यन्मित्रकलत्रपुत्रादयः ॥ उपमा ॥

द्विषि मित्त्रमतिं हितप्रिये रिपुबुद्धिं जनयन्ति जन्तवः ।
विपरीततया तनूभृतामिह तत्रापि दवीयसी मतिः ॥ ७ ॥

द्विषीति ॥ जन्तवः द्विषि अनन्तसंसारभ्रमणहेतुत्वादेषणात्रयरूपे शत्रौ मित्त्रबुद्धिं सहाय-

बुद्धिम्, हितप्रिये भवोद्भवानवरतानन्तदुःखपरम्पराविनाशहेतुत्वादनन्तसुखविधातृत्वादात्मकार्ये धर्मलक्षणे प्रतिकूलमतिं विपरीततया जनयन्ति । यतो देहभृताम् इह लोके परलोके च तत्र मित्रशत्रुज्ञाने दूरतमा मतिः ॥ अर्थान्तरन्यासः ॥

क्व नृपो भरतोऽमरार्चितो भुवनं येन बभूव भारतम् ।
क्षणिकाः सकलाः समागमाः कृतमेकं हि विवर्तते परम् ॥ ८ ॥

क्वेति ॥ हि निश्चयेन कृतं विहितं परं केवलम् एकं विवर्तते विपरिणमति ॥

हिममुष्णहतस्य यत्सुखं शिशिराभ्यर्दितचेतसोऽनलः ।
क्षणदुःखनिषेधकारणं न सुखं नित्यमुशन्ति योगिनः ॥ ९ ॥

हिममिति ॥ योगिनः क्षणदुःखनिषेधकारणं सुखं नित्यं न उशन्ति ॥

यदपायि पयः सुतेन यद्विसुताभिः ससृजेऽश्रु मातृभिः ।
मधुरं लवणं च किं द्वयं न पयःक्षारपयोधितोऽधिकम् ॥ १० ॥

यदेति ॥ यत् सुतेन पयः क्षीरम् अपायि, यद् वन्ध्याभिर्मातृभिरश्रु विसृष्टम्, तद् द्वयं मधुरं लवणं च किं क्षीरक्षारसमुद्राभ्यामधिकं न । अपि त्वधिकमेव । मोहमाहात्म्यम् ॥

विगणय्य तदेवमंहसो विरिरंसन्नभिषेक्तुमग्रिमम् ।
इति तं व्यनयत्सुतं सतामृणनिश्चित्ततया स्वनिर्वृतिः ॥ ११ ॥

विगणेति ॥ राजा एवमुक्तप्रकारेण तत्पूर्वोक्तं विगणय्य विचार्य अंहसः पापात् विरामं विधातुमिच्छन् ज्येष्ठं तं सुतम् अभिषेक्तुं राजपट्टे अभिषेकं कर्तुम् इति वक्ष्यमाणरीत्या व्यनयत् शिक्षितवान् । यतः सताम् ऋणान्निष्क्रान्तं चित्तं यस्य तादृक्तया स्वनिर्वृतिर्भवन्ति ॥ अर्थान्तरन्यासः ॥

युगवद्धमिमं भरं भुवस्त्वमिहैको नृपपुंगवः परम् ।
धवलो वहसे ततोऽधुना न ममाज्ञामवमन्तुमर्हसि ॥ १२ ॥

युगेति ॥ यस्मात्कारणात् इमं प्रत्यक्षभूतं मद्धृतं युगवद्धं भुवः भरं भारम् इह भूमण्डले त्वमेव परं केवलम् एकोऽसहायः नृपपुंगवः नरेन्द्राग्रणीः धवलः शुभ्रः निष्कलङ्कः सन् वहसे वक्ष्यसे ततः कारणाद् अधुना ममाज्ञाम् अवमन्तुं नार्हसि ॥

विजयाय जय स्वमादितो निजकर्मप्रकृतिं ततो रिपुम् ।
गमिनः परलोकसाधनं तव मेऽपि स्थितिरीदृशी मता ॥ १३ ॥

विजयेति ॥ गमिनो गन्तुमिच्छतस्तव मम च ईदृशी स्थितिः परलोकसाधनं शत्रुलोकसाधनं पारलौकिकसाधनं मता । कीदृशी । त्वम् आदितः प्रथमतः विजयाय जयनिमित्तं स्वमात्मानं जय प्रशमय । अहमपि जयामि । ततस्त्वं निजकर्म अहोरात्रवि-

भागक्रियाम् । ततः प्रकृतिम् अमात्यादिसप्तकम् । अहं तु निजकर्मप्रकृतिम् आत्मीयकर्मस्वभावम् । ततो रिपुं कामादिषट्कं त्वम् । अहं तु मोहनीयकर्मापि । जय जयामीति क्रियाया यथायोग्यमन्वयः ॥ श्लेषः ॥

विहिताखिलसत्त्वरक्षणं धृतसत्यस्थिति वीतमत्सरम् ।
त्वमितोऽहमिवाभयैकवागसिधाराव्रतधर्ममाचर ॥ १४ ॥

विहीति ॥ इतः अद्यप्रभृति, अभयैकवाग् अभयैकवचनः त्वम् असिधारैव व्रतं यत्र तादृशधर्मम् । अहं तु असिधारावत्कर्तुं धर्तुं चाशक्यं सर्वदर्शनसंमतब्रह्मचर्यरूपव्रतस्य जीवदयारूपधर्मस्य च समाहारम् । विहिताखिलसत्वरक्षणम् । त्वं कृतसकलप्राणिरक्षणम्, अहं तु विहितम् अखिलानाम् एकेन्द्रियादिपञ्चेन्द्रियपर्यन्तजीवानां रक्षणं यस्मिन् तादृक् । धृतसत्यस्थिति । त्वं धृता सत्येन स्थितिर्यत्र, अहं तु धृता सत्येऽनलीकवचने स्थितिर्यत्र तादृक् च । वीतमत्सरम् । त्वं विशेषेण इतः प्राप्तो वीरव्रतनिष्पत्त्यै मत्सरोऽहंकारो यत्र तादृक्, अहं तु विशेषेण इतो गतः मत्सर आत्मंमन्यता यत्र तादृक् च । यथा स्यात्तथा । त्वम् आचर यथाहमाचरिष्यामि ॥ श्लेषोपमा ॥

विविधानि वसूनि वाहनं बहु देशो दिशतीति वर्णितः ।
स यथोक्तिमिमामुपप्लवैर्न विहास्यत्यभिरक्ष्यतां तथा ॥ १५ ॥

विवीति ॥ नानाप्रकाराणि द्रव्याणि वाहनं च मत्तमातङ्गतुरंगमादि बहु दिशति ददाति इति निरुक्त्या देशो वर्णितः । यथा येन प्रकारेण इमां निरुक्तिं स देश उपद्रवैर्न विहास्यति । तेन प्रकारेण त्वया अभिरक्ष्यताम् ॥ स्वरूपान्वाख्यानम् ॥

उपसान्त्वय कृत्यमात्मनस्तमकृत्यं नय वृद्धिमृद्धिभिः ।
उभयं परकीयमात्मसात्कुरु नीतेः प्रथमोऽयमुद्यमः ॥ १६ ॥

उपेति ॥ कृत्यं परैर्भेत्तुं शक्यम् । 'कृती छेदने' इत्यतः 'ऋदुपधात्—' इति क्यप् । आत्मीयं प्रशमय, अभेद्यम् ऋद्धिभिर्वृद्धिं नय, परकीयम् उभयं भेद्याभेद्यमात्मवशगं कुरु । अयं नीतेः प्रथम उद्यमः ॥ स्वभावाख्यानम् ॥

विधिना खलु दीयतेऽखिलं न नृपो दत्त इति स मा भवत् ।
विधिरेष सतां यमोऽसतामिति भूयाज्जनतासु ते कथा ॥ १७ ॥

विधिनेति ॥ अखिलं विधिना दीयते, नृपो न दत्ते इति ते कथा मास्म भवत् । एष राजा सतां विधिः असतां यम इति ते कथा जनसमूहे भूयात् ॥ स्वभावान्वाख्यानम् ॥

वसुनोपचितेन संभवेदिह धर्मेण परत्र तु त्रयम् ।
उभयत्र न तन्मनोभुवा भुवि येन त्रयमत्र तत्क्रियाः ॥ १८ ॥

वसुनेति ॥ इह लोके अर्थेन पुष्टिं नीतेन त्रयं धर्मार्थकामाख्यं संभवेत्, परलोके तु ध-

र्मेण पुष्टिगतेन धर्मार्थकामरूपं त्रयं संभवेत्, मनोभुवा कामेन तत् त्रयम् उभयत्र न । तस्मादत्र एषु येन कृतेन भुवि त्रयं भवेत् तत् क्रियाः (त्वम्) ॥ स्वभावान्वाख्यानम् ॥

अभिवृद्धिमियर्ति विप्रियैर्नय वैरं प्रशमं ततः प्रियैः ।
समुदेति हि शस्यमातपे न तरुच्छायहतं विवर्धते ॥ १९ ॥

अभीति ॥ यतः विप्रियैः दण्डादिभिः वैरम् अभिवृद्धिम् इयर्ति याति ततः प्रियैः सामादिभिः वैरं प्रशमं नय । हि यत आतपे शस्यं समुदेति, तरूणां छायया हतम् । 'छायाबाहुल्ये' इति क्लीबतां एकस्मिन्नपि निबिडछायासत्वे बहुत्वारोपः । शस्यं न विवर्धते ॥ सामादयश्च 'साम प्रेमपरं वाक्यं दानं वित्तस्य चार्पणम् । भेदो रिपुजनाकृष्टिर्दण्डः श्रीप्राणसंहृतिः ॥' इत्युक्तलक्षणा ज्ञेयाः ॥ अर्थान्तरन्यासः ॥

न निजो न परोऽस्ति कस्यचिद्गुणतः स्वः परवांश्च जायते ।
तदिदं सकलं भुवस्तलं प्रणयेनात्मवशं त्वमानय ॥ २० ॥

न निज इति ॥ गुणतः संधिविग्रहयानासनद्वैधीभावसंश्रयात् षाड्गुण्यात् आत्मीयः परकीयः, परकीय आत्मीयो जायते । तस्मात् इदं सकलं भुवस्तलं प्रणयेन प्रेम्णा आत्मवश्यं त्वम् आनय ॥ साममाहात्म्यं दर्शितम् ॥ स्वभावान्वाख्यानम् ॥

इदमित्यनुशिष्य मेदिनीमुपलभ्यां प्रथमेन सूनुना ।
विदधे विरिरंसुरेनसो गृहमेधी हि सुतावधिर्मतः ॥ २१ ॥

इदेति ॥ एनसः पापात् विरिरंसुः विराममिच्छू राजा इदं पूर्वोक्तम् इत्यमुना प्रकारेण (सुतं) शिक्षयित्वा, मेदिनीं क्षितिं प्रथमेन सूनुना उपलभ्यां प्राप्याम् विदधे चक्रे । हि यतः गृहमेधा अस्यास्तीति गृहमेधी गृहस्थः सुतावधिः समर्थसुतोऽवधिर्यस्य तादृग् एव मतः ॥ अर्थान्तरन्यासः ॥

पणवाः प्रणिनेदुराहता ननृतुर्वारविलासिनीजनाः ।
नटगाथकसूतसूनवः पटवः पेठुरुपेत्य मङ्गलम् ॥ २२ ॥

पणवा इति ॥ पटहा आहताः सन्तो नेदुः, वेश्याजना उपेत्य ननृतुः, पटवः नटा नर्तनाचार्या गाथका गायनाचार्याः सूतानां भट्टाचार्याणां सूनव उपेत्य मङ्गलं पेठुः ॥ समुच्चयः ॥

सपताकमुदात्तनायकं कृतनानारसभावविभ्रमम् ।
प्रतिरङ्गनिविष्टपात्रकं नगरं नाट्यमिवाद्भुततराम् ॥ २३ ॥

सपतेति ॥ नगरं पत्तनम्, सपताकं सध्वजम्, उदात्तनायकं महेच्छाधिपम्, कृतनानारसभावविभ्रमकृतो गन्धरसानां भावो यत्र तादृशा विभ्रमा मार्गा यत्र तादृशम्, प्रतिरङ्गनिविष्टपात्रकं प्रतिप्राङ्गणस्थापितमङ्गलसद्रव्यपरिपूर्णस्थालकं च सत् । सपताकं

सहोत्क्षिप्ताङ्गुलिविन्यासेन वर्तमानहस्तम्, उदात्तनायकं सत्यगानवन्नायकम्, कृतनानारसभावविभ्रमं कृता नाना रसाः शृङ्गारादयः भावाश्चेतोविकाराः विभ्रमाः कुटिलभ्रूभङ्गतयाधवलोकनानि यत्र तादृक्, प्रतिरङ्गनिविष्टपात्रकं प्रतिनृत्यस्थानप्रविष्टनर्तक्यादि नाट्यमिव । अद्युतत्तराम् ॥ श्लेषोपमा ॥

श्रवणेषु मृदङ्गनिस्वनाज्जनतोवाच परस्परं वचः ।
ललनाश्च कपोलघट्टनान्निरविक्षन्विनिमीलितेक्षणम् ॥ २४ ॥

श्रवेति ॥ जनता मृदङ्गनिस्वनात्परस्परं कर्णयोर्वच उवाच ललनाः कपोलघट्टनाद्विनिमीलितेक्षणं यथा स्यात्तथा निरविक्षन् प्राविक्षंश्च ॥ समुच्चयः ॥

भुवि पुष्पमपूरि गुल्फकं पटवासोऽपि वितस्तरे दिशः ।
वियतोऽपि तलं वितेनिरे पुरि कालागुरुधूमयष्टयः ॥ २५ ॥

भुवीति ॥ पुरि भुवि पृथिव्यां पुष्पं गुल्फकम् अपूरि, पटवासो दिशो वितस्तरे, कालागुरुधूमयष्टयः वियतस्तलं वितेनिरे ॥ समुच्चयः ॥

अधिरुह्य जनेन पश्यता गृहचैत्यद्रुमशालगोपुरम् ।
परितोऽनवकाशकारणान्नगरीवोपरि तस्थुषी पुरः ॥ २६ ॥

अधीति ॥ अनवकाशकारणात् परितः गृहचैत्यद्रुमशालगोपुरम् मन्दिरदैवकुलवृक्षप्राकारतोरणद्वारम् अधिरुह्य पश्यता जनेन पुर उपरि नगरी स्थितवतीव । बभूव इति शेषः ॥ उत्प्रेक्षा ॥

अभिषेकजलप्लवेन सा वसुधा दीर्घमुदश्वसीत्तदा ।
नवसंगमघर्मवारिणा स्नपिताङ्गाभिनवा वधूरिव ॥ २७ ॥

अभीति ॥ तदा सा वसुधा अभिषेकजलप्लवेन राज्याभिषेकवारिणा नवसंगमघर्मवारिणा नूतनसंयोगस्वेदजलेन स्नपिताङ्गा अभिषिक्तशरीरा अभिनवा संभवद्यौवनभरा वधूरिव दीर्घं यथा स्यात्तथा उदश्वसीत् ॥ उपमा ॥

कमला च दलान्तरस्रवज्जलबिन्दूज्ज्वललम्बमौक्तिकम् ।
कमलातपवारणं तदा शशिशुभ्रं बिभरांबभूव तत् ॥ २८ ॥

कमलेति ॥ तदा कमला लक्ष्मीः दलान्तरस्रवज्जलबिन्दूज्ज्वललम्बमौक्तिकं पत्राणामन्तरालतः स्रवन्तो जलबिन्दव इवोज्ज्वलानि लम्बानि मौक्तिकानि यस्य तादृशम्, शशिशुभ्रम् इन्दुधवलं तत् कमलातपवारणं बिभरांबभूव ॥ स्वभावान्वाख्यानम् ॥

हरिविष्टरमध्यमास्थितः प्रचलच्चामरचारुसंहतिः ।
स जिगाय समुद्रवीचिभिः खलु वेलाचलमाहतं युवा ॥ २९ ॥

हरीति ॥ हरिविष्टरमध्यं सिंहासनमध्यम् आस्थितः, प्रचलच्चामरचारुसंहतिः प्रचलन्ती चामराणां चार्वी मनोज्ञा संहतिः श्रेणिर्यस्य स युवा समुद्रवीचिभिः जलधिकल्लोलैः आहतं ताडितं वेलाचलं खलु निश्चयेन जिगाय जितवान् ॥

उपकर्ण्य तथा नरेश्वरं पितरि प्रागपि कोपधूमिते ।
हृदये द्विपतां समुत्थितः प्रलयज्वाल इवानलोऽधिकः ॥ ३० ॥

उपेति ॥ पितरि सति प्राक् कोपधूमिते द्विपतां हृदये तथा अभिषिक्तं नूत्नं नरेश्वरं श्रुत्वा । प्रलये ज्वाला यस्य स इव । अधिकः प्रचुरः अनलः अग्निः समुत्थितः उत्पन्नः ॥ उपमा ॥

स नवाजिषु लब्धविक्रमः कृतरूढिर्नगजेषु दन्तिषु ।
निजघान तथापि विद्विषं सहसापत्तिचयेन वर्जितः ॥ ३१ ॥

स नवेति ॥ नवाजिषु नूत्नसङ्ग्रामेषु लब्धपराक्रमः, नगजेषु गिरिसमुद्भूतेषु कृतरूढिः कृतारोहणः आपत्तिचयेन आपत्समूहेन वर्जितः स सहसा हठादेव विद्विषं निजघान । तथापि पदेन विरोधः सूच्यते । स च वाजिषु अश्वेषु न लब्धविक्रमः दन्तिषु गजेषु न कृतरूढिः दन्तिपदेन मरवद्वीपोद्भवानां दन्तरहितानां ग्रहणव्युदासः, पत्तिचयेन पदातिसमूहेन वर्जितः तथापि शत्रुं निजघानेति व्याख्यया । परिहारस्तूक्तः । यद्वा एतेन पराक्रमातिशयोक्तिः खरदूषणादिवधस्यासहायेनैव कृतत्वात् ॥ श्लेषविरोधौ ॥

अजरोऽवनिवृत्तचेष्टितस्ततपङ्कोद्भवविष्टरागतः ।
स पितामहतां च सङ्गतो विधिरप्येकमुखत्वमागमत् ॥ ३२ ॥

अजेति ॥ अजरः न जरा यस्य सोऽजरस्तरुणः कुमारः, अवनिवृत्तचेष्टितः अवनौ क्षितौ वृत्तं प्रवृत्तं चेष्टितमाज्ञा यस्य तादृशः, ततपङ्कोद्भवविष्टरागतः तते विस्तीर्णे पङ्कोद्भवे दुर्यशसि विष्टानां प्रविष्टानां रागं प्रीतिं तस्यति क्षयं नयतीति । क्विप् । धातुत्वान्न दीर्घः । विस्तीर्णदुर्यशःप्रविष्टरागविनाशकः, स पितामहतां ब्रह्मतां संगत इति विधिरपि ब्रह्मापि एकमुखत्वमागमत् । इति च विरोधः तस्य वृद्धत्वाच्चतुर्मुखत्वाच्च । ब्रह्मा तु अजरः नित्यत्वाज्जगज्ज्येष्ठत्वात्तपोतिशयप्राप्तत्वाद्वा न जीर्यतीत्यजरः, विस्तीर्णपङ्कजविष्टरप्राप्तः, महतां पिता । परिहारे तु स पिता पालकः, विधिर्जगन्मर्यादाव्यवस्थापकत्वात्, महतां सतां सङ्गतः संसर्गात् एकमुखत्वं सत्यवक्तृत्वाद्यागमत् ॥ विरोधः ॥

तमुदीक्ष्य नवोदयस्थितं परितापोऽर्कमिवाभवत्तदा ।
बहुलोभरतस्य भूभुजो निजमातुर्धृतराष्ट्रजन्मनः ॥ ३३ ॥

तमिति ॥ तदा नवोदयस्थितमर्कमिव तं राममुदीक्ष्य भरतस्य तत्संबन्धिनः धृतस्य राष्ट्रस्य हिरण्यादिविभूतेर्जन्मोद्दिश्य निजमातुः कैकेय्या भूभुजो दशरथनृपमुद्दिश्य बहुलः परितापोऽभवत् ॥ भारतीयपक्षे—बहुलोभरतस्य अत्यन्तलुब्धकस्य धृतराष्ट्रजन्मनो दुर्यो-

धनस्य निजमातुः निजस्य आत्मन आत्मीयस्य वा मातुर्निश्चायकस्येति विशेषः ॥ श्लेषः ॥

न विषादितया यदागमत्फलसिद्धिं सुलभामसौ तदा ।
प्रतिपद्य भुवःपतिं वरं कृतकाक्षं रमणं त्वयाचत ॥ ३४ ॥

न वीति ॥ यदा असौ कैकेयी विषादितया विषादेन सुलभां फलसिद्धिं न अगमत्, तदा कृतकाक्षं कृतं प्राप्तं कं जलं ययोस्ते अक्षिणी यस्य साश्रुपातं तादृशं रमणं वल्लभं भुवःपतिं भूपतिं फलसिद्धिं प्रतिपद्य वरम् अयाचत ॥ भारतीयपक्षे—असौ दुर्योधनः कृतकाक्षं कृतकाः कृत्रिमा अक्षाः पाशका यत्र तादृशं रमणं सारिद्यूतविषयकं वरं वरप्रदानमयाचतेति विशेषः ॥

सकलत्रमपेक्ष्य सत्कुलं किल कैकेयमकार्यकारिका ।
ननुवेत्यनिरूप्य कैतवं मतिमक्षैकजयेऽकरोत्प्रभुः ॥ ३५ ॥

सकलेति ॥ स प्रभुर्दशरथः सत्कुलं निर्लाञ्छनान्वयम्, कलत्रं कैकेयीम्, कैकेयं भरतं च किल परमार्थतः, अपेक्ष्य अवधार्य, अकार्यकारिका अकार्यकारणा इति कैतवं कुटिलस्वभावं वा अनिरूप्य अविचार्य, ननु अहो, अक्षैकजये इन्द्रियैकपराभवे मतिं बुद्धिम् अकरोत् ॥ रामं संबोध्य कैकेयीवचनात्स्वप्रतिज्ञाभङ्गभयात् भरताय राज्यं दत्त्वा संसारसागरोत्तरणैकतरीं दीक्षां चकारेति तात्पर्यम् ॥ भारतीये—प्रभुर्युधिष्ठिरः ननु अहो का इयमेकासाधारणा अकार्यकारिका अकार्यजनिका इति कैतवं द्यूतव्यवहारम्, अनिरूप्य अपरिज्ञाय सकलत्रं स्वपरवर्गीयपालकम्, सच्छ्रेष्ठम् कुलम् अपेक्ष्य, अक्षैकजये पाशैकजये मतिं बुद्धिम् अकरोत् ॥

स परेण तदाजितां महीं लघु मुक्त्वा सहसादरोदरैः ।
स्वगुरुस्थितिभङ्गभीरुकः प्रययौ भ्रातृबलेन काननम् ॥ ३६ ॥

स इति ॥ तदा स्वगुरुस्थितिभङ्गभीरुकः आत्मीयजनकप्रतिज्ञाभङ्गभीरुः, सादरः सोद्यमः, स रामः, परेण शत्रुणा अजितां महीम्, अदरैर्निर्भयैर्भटैः, सह लघु शीघ्रं मुक्त्वा परित्यज्य भ्रातृबलेन लक्ष्मणैकसहायेन काननं वनं प्रययौ गन्तुमारब्धवान् ॥ भारतीये—स्वगुरुस्थितिभङ्गभीरुकः आत्मीयमहाप्रतिज्ञाभङ्गभीरुः । परेण दुर्योधनेन दरोदरैः पाशकैः सहसा शीघ्रं जितां महीं लघु मुक्त्वा भ्रातृबलेन भीमार्जुननकुलसहदेवसहायेन ॥

स निवर्त्य समन्वितान्नृपांस्तलवर्गान्सचिवान्पुरोधसः ।
स्थितवान्पथि सीतयाच्युतो गहनेद्रौपदिकानुजान्वितः ॥ ३७ ॥

स निवेति ॥ स रामः समन्वितान् अनुगन्तुमागतान् नृपान् राज्ञः, तलवर्गान् तलवरनियोगितुरगसाधनिकादीन्, सचिवानमात्यान्, पुरोधसः पुरोहितान्, पथि मार्गे निवर्त्य पश्चात्प्रस्थाप्य पदिकानुजान्वितः पद्भ्यामेव चरता अनुजेन अन्वितः सन् सीतया जान-

क्या अच्युतोऽपरित्यक्तः सन् गहने अद्रौ स्थितवान् ॥ भारतीये—स युधिष्ठिरः सीतया क्षित्या च्युतः परित्यक्तः, द्रौपदिकानुजान्वितः द्रौपदिकया अनुजैश्चान्वितः गहने कान्तारे ॥

अपि यस्य जगाम मुद्रया सकलो वारिनिधिः समुद्रताम् ।
हृदि पश्यत संसृतेः स्थितिं स नरेन्द्रोऽपि पदातितां गतः ॥३८॥

अपीति ॥ मुद्रया साहित्यं सरित्पतित्वं च समुद्रता ॥ श्लेषः ॥

अपि चीरिकया द्विषोऽभवन्ननु चामीकरदाश्च्युतौजसः ।
कुसुमैरपि यस्य पीडना शयने शार्करमध्यशेत सः ॥ ३९ ॥

अपि चीति ॥ ननु अहो यस्य चीरिकया लेखनेन अपि द्विषश्च्युतौजसः नष्टबला भूत्वा चामीकरदा स्वर्णदा अभवन् । तथा यस्य शयने शय्यायां कुसुमैः पुष्पैरपि पीडना पीडा अभवत् । स शार्करं शर्करावन्तं देशम् अध्यशेत ॥

घनसारसुगन्ध्ययाचितं हृदयज्ञैश्चषकेऽम्बु पायितः ।
स विमृग्य वनेष्वनापिवानटनीखातसमुच्छ्रितं पपौ ॥ ४० ॥

घनसारेति ॥ हृदयज्ञैर्भृत्यैः चषके पानपात्रे घनसारसुगन्धि कर्पूरवासितम् अयाचितम् अप्रार्थितम् अम्बु जलं यः पायितः स वनेषु विमृग्य अन्विष्य अनापिवानलब्धवान् सन् अटनीखातसमुच्छ्रितं धनुरग्रप्रदेशोल्लिखितनिर्गतं जलं पपौ ॥

कुलजं शमिनं बहुश्रुतं स्थिरसत्त्वं ध्रुवयुद्धमूर्जितम् ।
यदि तादृशमप्यपैति तन्न खलु श्रीः श्रिय एव तादृशी ॥ ४१ ॥

कुलजमिति ॥ यदि तादृशं पूर्वार्धोक्तविशेषणयुक्तमपि खलु निश्चयेन श्रीरपैति परित्यजति तत् तर्हि श्रियो लक्ष्म्या एव तादृशी गुणवन्तं श्रयतीति श्रीरिति निरुक्तिदर्शिता श्रीः शोभा न ॥

क्रमशोऽतिजगाम नर्मदां स दुरन्तां जलधीरितोद्यमाम् ।
अवधीरणयातिलङ्घिनीं स्खलितप्रायगतिं प्रियामिव ॥ ४२ ॥

क्रमश इति ॥ स रामो युधिष्ठिरश्च । नर्मदां तन्नामकनदीम् । 'उपचारः स्त्रीपुंसयोर्मनोजन्मनिबन्धनः । स एवात्र परिज्ञेयो नर्मसंज्ञः प्रयोक्तृभिः ॥' इत्युक्तलक्षणं नर्म ददाति तादृशं च, दुरन्ताम् अलभ्यमध्यां, दुर्लक्ष्याशयां च, जलधीरितोद्यमां जलधये समुद्रगमनाय ईरित उद्यमो यया समुद्रगां जडधिया ईरित उद्यमो यया स्त्रियो हि जडधियः । जडेन धिया ईरित उद्यमो यस्याम् । सुधियस्तु मातृवत्परदारेषु वर्तन्ते । अवधीरणया हेलया अवज्ञया च अतिलङ्घिनीं अतिलङ्घनयोग्याम् । 'कृत्यल्युटः' इत्यत्र 'कृल्ल्युटः' इत्युपन्यासात् । अतिदूरगमनशीलाम्, स्खलितप्रायगतिं स्खलितप्राया पतनप्राया गतिर्यस्यास्तां मन्दमन्दगमनां च, प्रियां प्रीतिविषयां भार्यां च ॥ श्लेषोपमा ॥

अनुकूलफलासु भूभुजा पथि शोकापनुदासु विश्रमम् ।
व्यपदिश्य दरीष्ववस्थितं तनयानां वसतिष्विव क्षणम् ॥ ४३ ॥

अनुकूलेति ॥ भूभुजा पथि, अनुकूलफलासु प्रतिततटाम्रादिफलासु अनायासलभ्यफलासु च, चेतोग्लानिच्छित्सु, दरीषु, तनयानां पुत्राणां पुत्रीणां वा वासमन्दिरेष्विव विश्रममुद्दिश्यावस्थितम् ॥ उत्प्रेक्षा ॥

नृपतिं तमवेक्ष्य तापसाः कृपयार्द्रे हृदयेऽश्रु तत्यजुः ।
भुवि कः किल कर्कशाशयो महतामुत्सहते विपत्तिषु ॥ ४४ ॥

नृपतिमिति ॥ कर्कशाशयो निष्ठुरचेताः, महतां विपत्तिषूत्सहते ॥ अर्थान्तरन्यासः ॥

सरितः सरितो नगान्नगानवतीर्णः स बहूपकारकः ।
विषयान्विषयानुपेक्षितां वशवर्तीव गतो न्यशामयत् ॥ ४५ ॥

सरित इति ॥ वशवर्ती योगी इव विषयान्स्रग्वनिताचन्दनादीनुपेक्षते इत्येवं शीलतां गतः प्राप्तः सन् बहूनामुपकारकोऽपि स तास्तांस्तांस्तानवतीर्णः सन् न्यशामयत् । ददर्श ॥ उपमा ॥

निगमान्निनदैः शिखण्डिनां सुभगान्धेनुकहुंकृतैरपि ।
स ददर्श वनस्य गोचरान्कृकवाकूत्पतनक्षमान्नृपः ॥ ४६ ॥

निगमानिति ॥ स नृपः मयूराणां निनदैः शब्दैः तथा धेनुसमूहहुंकृतैश्च सुभगान्मनोहरान् निगमान् भक्तग्रामान् तथा कृकवाकूनां कुक्कुटानामुत्पतनक्षमान् वनविषयान् ददर्श ॥ समुच्चयः ॥

स विषाणविधूतरोधसं सहसापस्किरमाणमैक्षत ।
शिरसि स्थितपङ्कमिच्छया प्रधनस्येव भटं गवां पतिम् ॥ ४७ ॥

स वीति ॥ स रामो युधिष्ठिरश्च, विषाणविधूतरोधसं शृङ्गोत्क्षिप्ततटम् । शिरसि स्थितपङ्कं वर्तमानकर्दमम्, सहसा शीघ्रं प्रधनस्य योधनस्येच्छया अपस्किरमाणं अग्रचरणखुराभ्यां भूमिमुल्लिखन्तम्, गवां पतिं वृषम् । हस्तिदन्तप्रहारपलायितावरकम्, स्थितानेकमारणजन्यम्, योधनस्येच्छया हठात् 'यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः । अक्षयांल्लभते लोकान्यदि क्लीबं न भाषते ॥' इत्युक्तेर्हर्षेण जीविकार्थे वा शत्रूरो विलिखन्तम् । भटपक्षे चतुष्पाच्छकुनित्वाभावात्सुडागमश्चिन्त्यः । भटं शूरमिव ऐक्षत ॥ श्लेषोपमा ॥

तृणकौतुककंकणोचितां विलुलोके स विवृत्य गोपिकाम् ।
स्तनभारनतां प्रजापतेः श्रमस्थानगतं विचिन्तयन् ॥ ४८ ॥

तृणेति ॥ स तृणकौतुककंकणोचितां कुचभारनतां गोपिकां विवृत्य प्रजापतेः अ-स्थानगतं अयोग्यपदवीमायातं श्रमं विचिन्तयन् विलुलोके ॥

अमुनाभिशपन्धनं रुदन्नभिधावन्पृथुकोऽभिसादयन् ।
बुबुधे पथि शस्यमापतन्नववर्णीव दुरीहितं तपः ॥ ४९ ॥

अमुनेति ॥ धनम् अभिशपन् आक्रोशयन्, रुदन्, अभिधावन् इतस्ततः प्रपलाय-मानः, अभिसादयन् अभ्याशयन्, शस्यं धान्यम्, आपतन्नागच्छन्, पृथुको बालकः । दुरीहितं दुश्चेष्टितं तप आपतन्नागच्छन् (उक्तविशेषणविशिष्टोऽपि) नववर्णी नूतनमु-निरिव । अमुना बुबुधे ज्ञातः ॥ उत्प्रेक्षा ॥

इदमेवमनादिगोचरं चिरमुच्चैरितरेतराश्रयम् ।
विषयं वनमप्यनेकशः स सुखं दुःखमिवात्यगान्नृपः ॥ ५० ॥

इदेति ॥ स नृपो रामो युधिष्ठिरो वा अनादिगोचरं न आदेर्गोचरो विषयो यस्य तत् इदम् । 'नपुंसकमनपुंसकेन' इत्येकशेषः । उच्चैरतिशयेन, इतरेतराश्रयम् इतरेतर आश्रयो यस्मिन् यथा स्यात्तथा, अनेकशो बहून् वारान् विषयं देशम्, वनमरण्यम् । सुखं दुःखम् इव । चिरं बहुतरकालम् अत्यगात् । वनानन्तरं विषयम्, विषयानन्तरं वनम् एवमतिक्रामति स्म ॥ उपमा ॥

पथि सोऽवरजोऽग्रजं वचः स्फुटमित्यादित वीक्ष्य तादृशम् ।
विदिशं विशता विशां दिशं त्यजता सत्यमलंकृतं त्वया ॥ ५१ ॥

पथीति ॥ सोऽवरजो लक्ष्मणः, भीमादिश्च । तादृशं देशवनाद्युल्लङ्घयन्तम्, अग्रजं रामं युधिष्ठिरं च । वीक्ष्य, पथि मार्गे, त्वया विशां देशानां संबन्धिनीं विदिशं दिशं वि-शता प्रविशता (राज्यम्) त्यजता सता सत्यम् अलंकृतम् इति वचो वाक्यं स्फुटम् आदित उक्तवान् गृहीतवान् वा ॥

स्वकुलं समलंकृतं गुणैरुपनीताश्च महापदं जनाः ।
अनुजा विनयेन भूषिता न पराभूतिरितोऽस्ति काचन ॥ ५२ ॥

स्वकुलमिति ॥ (त्वया) गुणैरौदार्यादिभिः, स्वकुलं समलंकृतं विभूषितम्, जनाश्च पित्रादयः (प्रतिज्ञापूरणात्) महापदं महापदवीम् उपनीताः प्रापिताः । अनुजा भ्रातरः पश्चाद्भाविनश्च विनयेन भूषिताः (पश्चाद्भाविनोऽपि पित्रादिप्रतिज्ञामेवमेव विनयेन करिष्यन्तीति) शोभां प्रापिताः । इत एभ्यः परा व्यतिरिक्ता काचन भूतिर्विभूतिर्न अस्ति ॥ भारतीये—गुणैः सत्यसंधत्वादिभिः स्वकुलं समलं सलाञ्छनं कृतम् । जनाश्च महापदं महाविपत्तिम्, उपनीताः । विनयेन दुर्नयेन अनुजा भूपिता भुव्युषिताः । इतः (अन्या) काचन पराभूतिरभिभवः न अस्ति ॥ श्लेषः ॥

यदिराजतयाविना नृपाः कृतराज्या इव सानुभावनाः ।
यशसा च युतास्तदेतया बहुचिन्ताहतया किमु श्रिया ॥ ९३ ॥

यदीति ॥ यदि नृपा राजतया राजभावेन विना (अपि) 'कृतराज्या इव' सानुभावनाः समाहात्म्याः च पुनः यशसा युता भवेयुः । तदा बहुचिन्ताहतया बह्व्या चिन्तया आहतया एतया श्रिया किमु ॥ पक्षान्तरे—यत् यस्मात्कारणात्, सानुभावनाः पर्वतनितम्बस्थितिकाः सन्तः, इराजतया इराया भूमेः अजः क्षेपो यस्य तत्वेन पृथिवीपरित्यागेन अविना युक्ताः नृपाः कृतराज्या इव यशसा युता भवेयुः । तत्तस्मात्कारणात् बहूनां चिन्तया आहतया एतया श्रिया अहो किम् ॥ श्लेषः ॥

चमरा व्यजनेन वीजयन्ति द्विरदास्ते दधते च नित्यसेवाम् ।
शबराः शिबिरेषु बद्धगेयाः किमु राज्येन गतेन वा स्थितेन ॥९४॥

चमरा इति ॥ शिबिरेषु निवेशेषु चमराश्चमर्यो व्यजनेन वीजयन्ति, ते रेवातीरसमुद्भवा द्विरदा दधते धरन्ति, शबराः पुलिन्दाः बद्धगेया विरचितगानाः सन्तो नित्यसेवां धरन्ति, एषु विषयेषु सत्सु राज्येन गतेन स्थितेन वा किम् । यद्वा स्थितेनेव गतेनापि राज्येन सर्वे उपस्कारा भवन्तीति नास्माकं खेदः ॥ यथा स्थितराज्येन चामरधरादयः संभवन्ति, तथा न गतेन ॥ आक्षेपः ॥ वृत्तमिदं वैतालीयभेदः ॥

त्वामभ्युपैतु पुनरभ्युदयाय दीप्तिरौत्सुक्यमागतवतीव रविं दिनादौ ।
ध्वान्तं विसर्पति तवानुदयान्नय त्वं कालेऽभिवृद्धिमभिमानधनंजयं च ॥९५॥

इति श्रीधनंजयविरचिते धनंजयाङ्के राघवपाण्डवीयापरपर्याये द्विसंधानकाव्ये रामपाण्डवारण्यवर्णनो नाम चतुर्थः सर्गः समाप्तः ।

त्वामिति ॥ हे राजन्, त्वां भवन्तं पुनः औत्सुक्यं आगतवती दीप्तिः प्रतापलक्षणा अभ्युदयाय विभवाय । दिनस्यादौ अभ्युदयाय उदयाय दीप्तिः प्रकाशो रविमिव । अभ्युपैतु । तव अनुदयाद् ध्वान्तं अनीतिलक्षणं तमस्तमश्च विसर्पति । तस्मात्त्वं काले अभिमानमात्रधनं जयं च अभिमानं धनं जयं च अभिवृद्धिं नय ॥ वसन्ततिलकावृत्तम् ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीछोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां वनगमनो नाम चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

ततो वनं देशमनेकमेव पुण्याश्रमं तीर्थमतीत्य राजा ।
गूढः प्रदीप्त्यारविराटभूमिं स्फीतांसकोदण्डकलक्षितांसः ॥ १ ॥

तत इति ॥ ततो वनप्रवेशानन्तरं स्फीतांसकः पीनोन्नतस्कन्धः प्रदीप्त्या क्षात्रतेजसा रविरिव स राजा रामः अनेकमेव नानाप्रकारमेव पुण्यानां पवित्राणामाश्रमं पवित्र-

माश्रमं वा, वनं कान्तारं देशं विषयं तीर्थं च अतीत्य अतिक्रम्य गूढः संवृतः सन् दण्डकलक्षितां दण्डकसंज्ञां भूमिम् आट गतवान् ॥ भारतीयपक्षे—प्रदीप्तया प्रतापेन गूढः संवृतः कोदण्डकलक्षितांसः धनुर्लक्षितस्कन्धः स स्फीतां विख्यातां विराटभूमिम् आर ॥ श्लेषः ॥ सर्गेऽस्मिन्वृत्तमुपजातिः ॥

विहाय चापव्यवहारमुग्रं यथानियोगं प्रयतोजितात्मा ।
निरूप्य तस्यां सकुलायभूमिं योगीव कंचित्समयं निनाय ॥ २ ॥

विहायेति ॥ स राजा तस्यां भूमौ उग्रं तीव्रम् अपव्यवहारं विहाय कुलाय भ्रातृदेशे न भूमिं निरूप्य निवेद्य यद्वा कुलायाय नीडाय भूमिं निर्णीय, यथानियोगं यथापितृनिदेशं यथाप्रतिज्ञं च प्रयतो यतात्मा जितात्मा जितेन्द्रियः सन् योगीव कंचित्समयं निनाय ॥ योगिपक्षे—यथानियोगं यथाशास्त्रम् ॥ भारतीयपक्षे—अजितात्मा अजितेन्द्रियो द्यूतव्यसनोपहतः ॥ श्लेषः ॥

विरामभूमिः कमनीयतायाः कृष्णोदयानां विनिवासहेतुः ।
समाययौ कामनिवेशमूर्तिस्तत्राभिमुख्यं किल कीचकस्य ॥ ३ ॥

विरामेति ॥ कमनीयताया मनोहरताया विरामभूमिर्विश्रामभूमिर्दयानां करुणानां विनिवासहेतुः स्थितिकारणं कामनिवेशमूर्तिः कंदर्पस्थितिशरीरः कृष्णो लक्ष्मणस्तत्र भूमौ कीचकस्य वेणोराभिमुख्यं समाययौ ॥ भारतीयपक्षे—कृष्णा द्रौपदी उदयानां विनिवासहेतुः कीचकस्य तदाख्यनृपस्य ॥ श्लेषः ॥

विलासभावेन विलम्बमानं निस्त्रिंशमत्राहृतसूर्यहासम् ।
असौ निजग्राहमहोद्धतिस्तं पुण्यैकरूपेण वशं हि सर्वम् ॥ ४ ॥

विलासेति ॥ निजग्राहमहोद्धतिर्निजेन ग्राहेण महोद्धतिर्यस्यासौ लक्ष्मणो विलासभावेन वीनां पक्षिणां लासः क्रीडा यत्र तस्य भावेन गगनसमुदायेन विलम्बमानं सूर्यहासं तदाख्यं तं प्रसिद्धं निस्त्रिंशं खड्गम् अत्रावसरे आहृत ॥ पुण्यैकरूपेण सर्वं वशमात्माधीनं यतो जायते ॥ भारतीयपक्षे—महोद्धतिर्महे उत्सवे उद्धतिर्यस्या असौ द्रौपदी निस्त्रिंशं निर्दयम्, आहृतसूर्यहासम् आहृतो लुप्तः सूर्यस्य हासो दीप्तिर्येन तं तिरस्कृतरविप्रतापं तं कीचकनृपं विलासभावेन कटाक्षपातेन विलम्बमानं विशेषेण लम्बमानं क्रीडां कर्तुं त्वरयन्तं निजग्राह ज्ञातवती ॥ अर्थान्तरन्यासः ॥

इच्छातिभङ्गेन नरन्तुकामं तं तेन निघ्नन्नियमेन सक्तम् ।
स्वस्थं परं ज्योतिरसौ चकार नश्यन्ति वास्थानकृतप्रयासाः ॥ ५ ॥

इच्छेति ॥ परं ज्योतीरूपोऽसौ लक्ष्मणः इच्छातिभङ्गेन 'मूलावशेषमिदं वंशजालमनेन खड्गेन छिनद्मि' इति वाञ्छातिभञ्जनेन तं वंशजालं तेन खड्गेन निघ्नन् संछिन्दन् सन् नियमेन व्रतेन सक्तं संबद्धं नरं शूर्पणखापुत्रं शम्बुकुमारं कामं स्वस्थं स्वर्गस्थं चकार ॥

वा यतः—अस्थानकृतप्रयासा नश्यन्त्येव ॥ भारतीयपक्षे—असौ द्रौपदी इच्छातिभङ्गेन 'तावदिमां संभोक्ष्यामि पश्चाद्विरंस्यामि' इति वाञ्छाया भञ्जनभयेन रन्तुकामं निघ्नं परदारायत्तं नियमे व्रते न सक्तं तं कीचकं तेन विलासभावेन स्वस्थं स्वस्थचित्तं न चकार ॥ श्लेषार्थान्तरन्यासौ ॥

सुरासुरातिक्रमविक्रमस्य दशास्यनामोद्वहतः स्वसारम् ।
सुतापयोगादभवत्सुदुःखा कामेषुभग्नेषु कुतः सुखं वा ॥ ६ ॥

सुरेति ॥ सुरासुरातिक्रमविक्रमस्य देवदानवोल्लङ्घिप्रतापस्य दशास्यनाम दशाननाम उद्वहतो दधतो रावणस्य स्वसा शूर्पणखा सुतापयोगात् पुत्रवियोगादरमत्यर्थं सुदुःखा भवत् ॥ यतः कामेष्वभिलषितेषु भग्नेषु सुखं कुतः ॥ भारतीयपक्षे—सुरासुरातिक्रमविक्रमस्य सु अतिशयेन राः 'रै शब्दे' इति धातुनिष्पन्नत्वात्प्रकरणाच्च प्रलापशब्दौ यस्याः सा सुरा तादृशी सुरा मदिरा तस्याः सकाशादतिक्रमो निरस्तो विक्रमो यस्य स्वसारं सुष्ठु असारं कीचकं तस्य सच्छिद्रत्वात् । नाम उद्वहतः अस्य दशा सुतापसंबन्धात् सुदुःखा अभवत् ॥ श्लेषार्थान्तरन्यासौ ॥

वैरन्तुकामं समुपेत्य रूपं तदीयमालोक्य च विभ्रमन्तम् ।
इयाय संमोहनमन्तरेऽस्मिन्विव्याध बाणैर्मकरध्वजोऽपि ॥ ७ ॥

वैरेति ॥ सा शूर्पणखा वैरं (सुतमारणेन) समुपेत्य तस्य लक्ष्मणस्येदं रूपं विभ्रमन्तं पर्यटन्तं तं लक्ष्मणं च आलोक्य कामं यथेष्टं संमोहनं वैचित्यमियाय । अत्रान्तरे मकरध्वजः कामो बाणैर्विव्याध ॥ भारतीयपक्षे—संमोहनं कर्तृ वै निश्चयेन रन्तुकामं समुपेत्य तदीयं द्रौपदीयं रूपमालोक्य विभ्रमन्तामितस्ततः पर्यटन्तं तं कीचकम् इयाय ॥ श्लेषः ॥

निश्वासमुष्णं वचनं निरुद्धं म्लानं मुखाब्जं हृदयं सकम्पम् ।
श्रमादिवाङ्गं पुलकप्रसङ्गं पदेपदेऽसौ बिभरांबभूव ॥ ८ ॥

निःश्वासेति ॥ असौ शूर्पणखा कीचकश्च (कामपीडातः) पदे पदे श्रमादिव उष्णं निःश्वासं निरुद्धं वचनं म्लानं मुखसरोजं सकम्पं हृदयं पुलकयुक्तमङ्गं बिभरांबभूव ॥ उत्प्रेक्षा ॥

श्वासानुबन्धात्परितापहेतोर्बाष्पानुपातान्मदनस्य पौष्पाः ।
शरा नु वाताग्निजलात्मकाः स्युरिति क्षणं चिन्तयति स कंचित् ९

श्वासेति ॥ असौ शूर्पणखा कीचकश्च मदनस्य पौष्पा अपि शरा नासावातानुषङ्गात् संतापहेतोरश्रुजप्रपतनात् कारणाद् अनिलानलजलात्मकाः स्युः इति कंचित्क्षणम् अचिन्तयत् ॥ स्वभावाख्यानम् ॥

विश्लेषणं वेत्ति न संधिकार्यं स विग्रहं नैव समस्तसंस्थाम् ।
प्रागेव वेवेक्ति न तद्धितार्थं शब्दागमे प्राथमिकोऽभवद्वा ॥ १० ॥

विश्लेषणमिति ॥ विश्लेषणं वियोजनं विसंधि च संधिकार्यं संयोजनं संहिताकार्यं च विग्रहं कलहं वृत्त्यर्थावबोधकवाक्यं च, समस्तसंस्थां सकलव्यवस्थां समस्तकारकक्रियादिस्थितिं च, तद्धितार्थे हितजनकं तत् तद्धितानामर्थं च ॥ स कामः प्राथमिकच्छात्र इव जातः ॥ श्लेषोपमा ॥

स रोपणान्पञ्च मयि प्रयुज्य शेषं जनं हन्ति तु चापयष्ट्या ।
संतापको नो घटको मनोभूरयस्कृतो बाल इवेति दध्यौ ॥ ११ ॥

सरोपेति ॥ स कामः, लोहकारबालक इव संतापक एव न तु घटक इति शूर्पणखा कीचकश्च दध्यौ ॥ श्लेषोपमा ॥

तस्याविशेषेण कृताभिलाषात्तापेन गण्डूषविमुक्तमम्भः ।
शुचौ करेणोरिव दारणेन मूषागतं ताम्रमिवोष्णमासीत् ॥ १२ ॥

तस्येति ॥ तस्याः शूर्पणखाया विशेषतः शुचौ ग्रीष्मे करेणोर्हस्तिन्या इव गण्डूषविमुक्तमम्भः मूषागतं ताम्रमिव उष्णम् आसीत् ॥ भा[illegible] पक्षे—तस्य कीचकस्य अविशेषतः ॥ श्लेषोपमा ॥

तस्यावतंसोत्पलपत्रमैत्रीं गतैः [illegible]शान्तरात्मा ।
नाजीगणन्मानमसौ कुलं [illegible]राणां [illegible]रः हि कुतो विवेकः ॥ १३ ॥

तस्येति ॥ असौ शूर्पणखा तस्या[illegible] अवतंसोत्पलपत्रमैत्रीं कर्णभूषणकमलदलसादृश्यं गतैः प्राप्तैः कटाक्षैः स्वाभाविकनेत्रविकारैः वि[illegible]शान्तरात्मा विह्वलान्तरा सती मानं कुलं वा न अजीगणत् ॥ हि यतः कामातुराणां विवेकः कुतः ॥ भारतीयपक्षे—असौ कीचकः तस्याः द्रौपद्या वतंसेत्यत्र 'अवाप्योरुपसर्गयोः' इत्यकारलोपः) ॥ श्लेषार्थान्तरन्यासौ ॥

तत्रैव चेतोनयनेन्द्रियेषु स्थितेषु दूतेष्विव लोभितेषु ।
जातेषु चान्तःप्रकृतिक्षतेषु देहावशेषेण कथंचिदस्थात् ॥ १४ ॥

तत्रैवेति ॥ चेतोनयनेन्द्रियेषु तत्रैव लक्ष्मण एव लोभितेषु दूतेषु इव स्थितेषु सत्सु च पुनः अन्तःप्रकृतिक्षतेषु अन्तरङ्गस्वभावनाशेषु अन्तः प्रकृतौ क्षतेषु जातेषु देहावशेषेण शरीरावशेषतः कथंचित् महता कष्टेन (शूर्पणखा) अस्थात् ॥ भारतीयपक्षे—तत्रैव द्रौपद्यामेव (कीचकः) ॥ श्लेषः ॥

ततश्च काङ्क्षं स्मरमोहहेतुं बलाद्ग्रहीतुं सविशीर्णचेताः ।
तान्तादयुक्तस्थितिरेत्य सान्तं नाशे हि जन्तुं मतिरप्यपैति ॥ १५ ॥

तत इति ॥ ततः सविशीर्णचेताः विदीर्णचेतसा सहिता, तान्ता क्षीणा । सान्तं सायाः शोभाया अङ्गलावण्यस्य अन्तं विनाशम्, एत्य प्राप्य अपयुक्तस्थितिरन्यायमार्गप्र-

वृत्तिः शूर्पणखा स्मरहेतुभूतं कामवैचित्यकारणं लक्ष्मणम् बलाद्ग्रहीतुं चकाङ्क्ष ॥ हि यतः नाशे नाशकाले जन्तुं प्राणिनं मतिर्बुद्धिरपि अपैति त्यजति ॥ भारतीयपक्षे—विशीर्णचेताः तापयुक्तस्थितिः स कीचकः तां द्रौपदीम् ॥ श्लेषार्थान्तरन्यासः ॥

आकारमादाय विनीतवेषं शृङ्गारमारोप्य यथाभिजातम् ।
कथंचिदभ्येत्य कृतावगूढं प्रचक्रमे वक्तुमिति प्रसन्नम् ॥ १६ ॥

आकेति ॥ यथाभिजातमवसरोचितं कृतावगूढं किंचिल्लोचने चरणौ च बहिःकृत-शरीरावरणं यथा स्यात्तथा प्रसन्नं यथा स्यात्तथा ॥

जानामि किंचित्त्रपया न वक्तुं विवक्षितं सूचयति व्यवस्था ।
सत्यां कियत्यामपि संवृतौ हि दुःखं सुखं वा निगदन्ति चेष्टाः १७

जानामीति ॥ कियत्यामपि संवृतौ सत्यां चेष्टा दुःखं सुखं वा निगदन्ति ॥ अर्थान्तरन्यासः ॥

श्रव्याणि वाचालतयैव तन्व्या त्वया मयोक्तानि मनीषितानि ।
गवाक्षजालीकृतचेतसो मे स्मरस्य बाणैः शरणं भव त्वम् ॥ १८ ॥

श्रव्याणीति ॥ तन्व्या मया शूर्पणखया मनीषितानि अभीप्सितानि यानि वाचालतयैव उक्तानि तानि त्वया लक्ष्मणेन श्रव्याणि । स्मरस्य बाणैः गवाक्षजालीकृतचेतसः छिद्रीकृतान्तःकरणस्य मे शरणं त्वं भव ॥ भारतीयपक्षे—यानि मया कीचकेन मनीषितानि वाचालतयोक्तानि तानि तन्व्या त्वया द्रौपद्या श्रव्याणि ॥ श्लेषः ॥

शार्ङ्गं पिनाकं धनुरिन्द्रचापं दिव्यं वहन्तोऽपि न जेतुमीशाः ।
शरासनं पौष्पमयं दधानस्त्रैलोक्यमालीढगतं करोति ॥ १९ ॥

शार्ङ्गमिति ॥ दिव्यं शार्ङ्गं पिनाकं धनुरिन्द्रचापं वहन्तो दधतोऽपि हरिहरसुरेन्द्रास्त्रैलोक्यं जेतुं न ईशाः समर्थाः ॥ अयं स्मरः पौष्पं शरासनं धनुर्दधानस्त्रैलोक्यं त्रिभुवनमालीढगतमालीढाख्यस्थानकविशेषमध्यवर्ति करोति ॥

त्वां जीविकाकृत्य निदेशमिच्छुं प्रतीच्छ मां भक्तियुजं दयात्मा ।
तवास्मि दासीवशवर्तिनी मे त्वयि स्थितं जीवितमित्यवेहि ॥ २० ॥

त्वामिति ॥ हे लक्ष्मण, दयात्मा दयालुस्त्वं त्वां भवन्तं जीविकाकृत्य जीविकामिव कृत्वा निदेशमादेशमिच्छुमिच्छन्तीं भक्तियुजं सेवापरां मां शूर्पणखां प्रतीच्छ स्वीकुरु । अहं तव भवतो वशवर्तिनी आज्ञाविधायिनी दासी चेटी अस्मि । मे मम जीवितं जीवनं त्वयि स्थितमित्यवेहि ॥ भारतीये—त्वां द्रौपदीम् । इच्छुमिच्छन्तम् । भक्तियुजं सेवापरम् । दासी इवेत्यध्याहार्यम् ॥ श्लेषः ॥

संभाषणेनापि न मे विषादं विषादभावेन जिहीर्षसि त्वम् ।
नाभाषणं कल्पतरोस्तवापि फलान्तरायाय हि कल्पयन्ति ॥ २१ ॥

संभाषणेनेति ॥ त्वं लक्ष्मणो द्रौपदी च, विषादभावेन क्रूरपरिणामेन, मे मम शूर्पणखायाः कीचकस्य च, विषादं मनोग्लानिम्, संभाषणेन अपि न जिहीर्षसि हर्तुमिच्छसि। हि यतः कल्पतरोः तव आभाषणम् अपि फलान्तरायाय फलविघ्नाय न कल्पयन्ति ॥ अर्थान्तरन्यासः ॥

कथां तदीयां स निशम्य भीमः प्रभाव्यसौमित्र्यभिधानरूढः।
राजाग्रजादर्शितकार्यसिद्धिरन्तर्मदोऽन्तःकुपितः करीव ॥ २२ ॥

कथामिति ॥ स सौमित्र्यभिधानरूढः सौमित्रिनामाङ्कितो लक्ष्मणसंज्ञः राजा भीमो भयानकः, अग्रजादर्शितकार्यसिद्धिः अग्रजस्य रामस्य आदर्शिता कार्यसिद्धिर्येन तादृक्च सन् तदीयां शूर्पणखीयां कथां निशम्य श्रुत्वा प्रभाव्य पर्यालोच्य सौमित्र्यभिधानरूढः शोभनमित्रवत्ताभिधाने रूढः, राजाग्रजादर्शितकार्यसिद्धिः राज्ञोऽग्रजो राजपदयोग्यः आदर्शिता कार्यसिद्धिर्येन प्रकटितशत्रुजयप्राप्तिः भीमो रौद्रः, अन्तर्मदः करी इव अन्तः कुपितः ॥ भारतीये—असौ खड्गे मित्र्यभिधानरूढः मित्रमस्यास्तीति मित्रि अभिधानं रूढं यस्य स प्रभावी समाहात्म्यः, राजाग्रजादर्शितकार्यासिद्धिः राज्ञो युधिष्ठिरस्य अग्रजा भाविनी आदर्शिता कार्यसिद्धिर्येन स भीमो वृकोदरः तदीयां कीचकीयाम् ॥ श्लेषोपमा ॥

अभ्येत्य निर्भर्त्स्य जगाद वाचं स्त्रीत्वं परागच्छ न वध्यवृत्तिः।
प्रेङ्खोलिताङ्गं रसनाकरेण मृत्योर्द्विजान्दोलनमिच्छसीव ॥ २३ ॥

अभ्येत्येति ॥ स लक्ष्मणः अभ्येत्य संमुखीभूय निर्भर्त्स्य वाचं जगाद। (किमिति।) त्वं परा अन्यदीया स्त्री गच्छ याहि। वध्यवृत्तिर्मारणयोग्या न। रसनाकरेण जिह्वाहस्तेन प्रेङ्खोलिताङ्गं दोलायितशरीरं मृत्योर्यमस्य द्विजान्दोलनं दन्तोत्पाटनम् इव इच्छसि ॥ भारतीये—स भीमः। हे पर शत्रो, त्वं स्त्रीत्वम् आगच्छ। येन वध्यवृत्तिः न स्यात् ॥ श्लेषोत्प्रेक्षा ॥

स्वजीविते निर्विजसे यदि त्वं विशानलं वा गिल कालकूटम्।
तेनाहतेयं महिलेति मे मा कृथा जनोदाहरणं दुरन्तम् ॥ २४ ॥

स्वेति ॥ त्वं यदि स्वजीविते, निर्विजसे निर्विण्णतां गच्छसि, तदा अनलमग्निं विश प्रविश, वाथवा कालकूटं विषं, गिल खाद, 'तेन लक्ष्मणेन भीमेन वा, इयं महिला स्त्री आहता इति दुरन्तं दुर्निवारं, जनोदाहरणं लोकदृष्टान्तं मे मम मा कृथाः ॥ स्वरूपाख्यानम् ॥

आशङ्कसे चेत्परिभावमर्यस्तवास्ति यद्यानय तं बलिष्ठम्।
अतो मुखेनाहितवान्पदं स्यान्महारथः साहसिकः स एव ॥ २५ ॥

आशङ्कस इति ॥ चेत् त्वं परिभावम् आशङ्कसे मन्यसे। यदि तव अर्यः स्वामी अस्ति

तदा बलिष्ठं तम् आनय । अतः कारणात् मुखेन वदनेन यः पदं पदवीम्, आहितवान् आरोपितवान् स एव साहसिको महारथश्च किं स्यात् । यद्वा स एव महारथः साहसिको धैर्यवान् स्यात् ॥ अर्थान्तरन्यासः ॥

महीं समूहन्तमिवाक्षिपन्तं ब्रध्नं प्रतापाग्निमिवोद्गिरन्तम् ।
ब्रुवाणमाक्षिप्य गिरं तथासौ निर्घातपातोपहतं जगर्ज ॥ २६ ॥

महीमिति ॥ असौ शूर्पणखा कीचकश्च, महीं पृथ्वीं समूहन्तं गिलन्तम् इव, ब्रध्नं सूर्यम् आक्षिपन्तमालिखन्तम् इव, प्रतापाग्निं 'प्रतापो यस्य वार्तापि राज्ञां स्याद्भयकारिणी' इत्युक्तलक्षणप्रतापाग्निं वीरविपक्षभयोत्पादनवार्तादहनम् उद्गिरन्तम् इव, गिरं वाणीं ब्रुवाणं भाषमाणम् तथा (लक्ष्मणं वृकोदरं च) लक्ष्मणभीमोक्तिक्रमेण निर्घातपातोपहतं विद्युल्लतापातसमर्दितम् यथा स्यात्तथा जगर्ज ॥ उत्प्रेक्षा ॥

काष्ठा गिलन्तीव भुवं वियच्च भित्त्वा व्रजन्तीव मनो जनानाम् ।
विदारयन्तीव वचांस्यवोचत् सामान्यवृत्तिः समहानियोगात् ॥२७॥

काष्ठा इति ॥ अमान्यवृत्ति निन्दिताचरणा सा शूर्पणखा समहानियोगात् समं युगपत् हान्योः शम्बुकुमारमरण लक्ष्मणसंभोगाभावरूपयोर्योगात्संबन्धात् काष्ठा दिशो गिलन्ती इव, भुवं पृथ्वीं वियद्गगनं च भित्त्वा व्रजन्ती इव, जनानां मनो विदारयन्ती इव, वचांसि अवोचत् ॥ भारतीये—सामान्यवृत्तिः सामतोऽन्यस्मिन्दण्डे वृत्तिर्वर्तनं यस्य दण्डयोग्यः सः कीचकः महानियोगात् गुरुतरनिबन्धात् काष्ठा गिलन्ति इव, भुवं वियच्च भित्त्वा व्रजन्ति इव, जनानां मनो विदारयन्ति इव वचांसि अवोचत् ॥ श्लेषोत्प्रेक्षा ॥

नापत्यघातं प्रतियुज्य वाचा बहुप्रलापिन्नपयासि जीवन् ।
भवानभिज्ञः खरदूषणस्य नाद्यापि युद्धेषु पराक्रमस्य ॥ २८ ॥

नापत्येति ॥ हे वाचा बहुप्रलापिन् लक्ष्मण, अपत्यघातं शम्बुकुमारवधं प्रतियुज्य विधाय जीवन् सन् न अपयासि अपसरसि । भवान् अद्यापि पराक्रमस्य पराञ्शत्रूनाक्रमतः खरदूषणस्य खरदूषणयोः युद्धेषु न अभिज्ञः । यद्वा युद्धेषु खरदूषणस्य तत्संबन्धिनः पराक्रमस्य बलस्य ॥ भारतीये—आगत्य आगत्य घातं वधं प्रतियुज्य उद्दिश्य वाचा बहुप्रलापिन्, त्वं जीवन् न अपयासि । खरदूषणस्य खरं तीव्रं दूषणं यस्माद्यस्मिन् वा तादृशो युद्धेषु पराक्रमस्य न अभिज्ञः ॥ श्लेषः ॥

वैरायते मे मतिरस्ति शक्तिरागच्छ संपादय संपरायम् ।
वेत्सि प्रतापं रिपुवंशदावं कथं न मत्तो दशकंधरोत्थम् ॥ २९ ॥

वैरेति ॥ हे लक्ष्मण, मे मम मतिर्बुद्धिः, वैरायते वैरं करोति । यदि शक्तिर्बलमस्ति तदा आगच्छ संपरायं युद्धं संपादय । मत्त उन्मत्तस्त्वं रिपुवंशदावं विपक्षान्वयदावानलम्, दशकंधरोत्थं रावणीयं प्रतापं पौरुषं कथं न वेत्सि ॥ भारतीये—हे भीम, ते तव वैराय मे

मम मतिर्बुद्धिः शक्तिर्बलं च अस्ति। तस्मात्त्वम् आगच्छ युद्धं संपादय। त्वं रिपुवंशदावं रिपोर्वंशं यतः खण्डयतो जनान् अवति रक्षति तं धरोत्थं धराया उत्था उत्थतिर्यस्मात्तम्, दशकं 'सत्यं शौचं तथा शौर्यं स्थैर्यं शौण्डीर्यधीरते। क्षमा गम्भीरता चैव नैष्ठुर्यं चापि मन्त्रिता॥ एतैरवयवैर्युक्तो जिगीषुः पृथिवीपतिः॥' इत्युक्तलक्षणा दश अवयवा यस्य तम्, मत्तो मत्सकाशात्, प्रतापं कथं न वेत्सि॥ श्लेषः॥

इतीरयित्वाहितकम्पवेगं दष्टाधरं स्फारितरक्तनेत्रम्।
भ्रूभङ्गजिह्मं कृतसिंहनादं जग्राह कायं भरतान्वयस्य॥ ३०॥

इतीति॥ असौ शूर्पणखा, कीचकश्च, इत्येवं प्रकारेण, ईरयित्वा अभिधाय, आहितकम्पवेगमारोपितकम्पजवम्, दष्टाधरं चर्वितोष्ठम्, स्फारितरक्तनेत्रम् प्रसारितलोहितलोचनम्, भ्रूभङ्गजिह्मं भ्रूभङ्गमन्दम्, कृतसिंहनादं विस्तीर्णसिंहनादम्, यथा स्यात्तथा भरतान्वयस्य भरतानुजस्य लक्ष्मणस्य, सोमवंश्यस्य भीमस्य च, कायं जग्राह॥

चकम्पिरे किंपुरुषा भयेन दिशां विनेशुर्नगजा गजाश्च।
मर्मप्रहारैः परुषैर्वचोभिस्तयोरभूत्तत्र महान्विमर्दः॥ ३१॥

चकम्पिर इति॥ तत्र दण्डकारण्ये तयोर्लक्ष्मणशूर्पणखयोः, मर्मप्रहारैर्मर्मच्छिद्भिः, परुषैः कठोरैः, वचोभिः महान् विमर्दो युद्धम् अभूत्। तदा किंपुरुषा देवविशेषाः, चकम्पिरे, दिशां गजा नगजा पर्वतजाश्च विनेशुः यद्वा पुरुषा एव किं चकम्पिरे अपि तु किंपुरुषा अपि। नगजा एव गजा किं विनेशुः। अपि तु दिशां गजाः॥ भारतीये—तत्र विराटभूमौ तयोर्भीमकीचकयोः। तदा पुरुषा युधिष्ठिरादयः किं चकम्पिरे। अपि तु न। दिशां नगजाश्च गजाः। किं विनेशुः। अपि तु न॥ श्लेषः॥

असंस्तुतं प्राप्य ततो निकारं भीमेन तेनोपहतात्मवृत्तिः।
देशादयासीन्नियमेन कर्तुं क्षणादसौ विग्रहपीडितानि॥ ३२॥

असंस्तुतमिति॥ भीमेन भयानकेन, तेन लक्ष्मणेन, उपहतात्मवृत्तिः भग्नस्वरूपा, असौ शूर्पणखा ततो लक्ष्मणतः असंस्तुतमपरिचितं निकारं पराभवं प्राप्य नियमेन अवश्यम् विग्रहपीडितानि युद्धमर्दनानि कर्तुं क्षणादन्तर्मुहूर्तात् देशाद्दण्डकारण्यतः, अयासीत् अपगता॥ भारतीये—तेन भीमेन वृकोदरेण, असौ कीचकः। ततो भीमतः। विग्रहपीडितानि तपश्चर्यया शरीरकदर्थनानि। देशाद्विराटभूमितः॥

तथावधूतोऽपकृतिं गतोऽपि जित्वा रुषं संयममेत्य राजा।
स वैरसंदेहमयं विहाय न्यायानुवृत्तिं पदवीं प्रपेदे॥ ३३॥

तथेति॥ सोऽयं राजा लक्ष्मणः, तथा तेन प्रकारेण वधूतो नारीतः शूर्पणखायाः सकाशात् अपकृतिमपकारं गतोऽपि सन् रुषं जित्वा संयमम् एत्य वैरसंदेहं विहाय न्यायानुवृत्तिं नीत्यनुयायिनीं पदवीं मार्गं प्रपेदे॥ भारतीये—अपकृतिं गतोऽपि स राजा की-

चकः अवधूतो जटाजूटधारी सन्, देहमयं शरीरहेतुं रसं दुग्धदधिघृतादि वै निश्चयेन विहाय ॥ श्लेषः ॥

स्वजानि कार्याणि निरूप्य हत्यां बलीयसस्तस्य च कौरवेण।
जिहीर्षता मानधनं बलेन संप्रेरितेनाभ्युदितं खरेण ॥ ३४ ॥

स्वजानीति ॥ बलीयसस्तस्य शम्बुकुमारस्य हत्यां वधे सति कौ क्षितौ स्वजानि कार्याणि आत्मीयानि कृत्यानि रवेण निनादेन निरूप्य निवेद्य कौ क्षितौ रवेण निनादेन मानधनं जिहीर्षता खरेण दूषणज्येष्ठभ्रात्रा रक्षसा संप्रेरितेन बलेन अभि समन्तत उदितं प्रसृतम्। यद्वा बलीयसस्तस्य लक्ष्मणस्य मानधनम् ॥ भारतीये—बलीयसस्तस्य कीचकस्य हत्यां हनने। बलीयसः तस्य वृकोदरस्य वा। मानधनं जिहीर्षता, खरेण तीव्रेण कौरवेण दुर्योधनेन ॥ श्लेषः ॥

आवारितो मध्यगतैः प्रबन्धैराहन्यमानोऽपि कृतावलेपः।
शब्दायमानः कलहायमानस्तूर्योत्करो दुर्जनमन्वियाय ॥ ३५ ॥

आवारीति ॥ मध्यगतैः उदरस्थितैः, मध्यस्थपुरुषैश्च। प्रबन्धैर्वध्रीभिश्चर्मरज्जुभिः, निबन्धैश्च। आवारितो नियन्त्रितः, निषिद्धश्च। आहन्यमानः ताड्यमानः अपि कृतावलेपः कृततैलादिलेपः, विहिताहंकारश्च सन् शब्दायमानः ध्वनिं कुर्वाणः, यथेच्छशब्दप्रयोगं कुर्वंश्च। कलहायमानः कलहोद्योगं कुर्वाणः। युद्धकालेषु तूर्यै रागविशेषेण वीरताधिक्यं जायते इति प्रसिद्धिः ॥ तूर्योत्करो वाद्यसमूहः, अन्वियाय अनुकृतवान् ॥

उन्मग्नशङ्खं श्रमफेनयुक्तमावर्तशुद्धं शफराजिलोलम्।
आश्वीयमुल्लङ्घनशीलमुच्चचक्राम कल्लोल इवाम्बुराशेः ॥ ३६ ॥

उन्मग्नेति ॥ उन्मग्नशङ्खं उन्मग्नाः प्रव्यक्ताः शङ्खाश्चक्षुःसमीपप्रदेशा यस्य तादृक्, उच्छलितकम्बुश्च। श्रमफेनयुक्तं श्रमोत्पन्नफेनपिण्डयुक्तम्, श्रमवत्फेनयुतश्च। आवर्तशुद्धम् आवर्तैर्ध्रुवशुभमानधैर्यैः शुद्धं समीचीनम्, अम्भोभ्रमशुद्धश्च। शफराजिलोलं खुरपङ्क्तिचञ्चलम्, मीनगणचञ्चलश्च। उल्लङ्घनशीलम् उत्प्लवनधर्माढ्यम्, उत्प्लवनधर्मा च। उद्यत् ऊर्ध्वं गच्छत्, गच्छंश्च। आश्वीयमश्वसमूहः। अम्बुराशेः कल्लोल इव चक्राम चचाल ॥

स्नेहाद्वहन्ती क्षणमुत्कटाक्षा वेश्येव शल्यं हृदये दधाना।
उच्चाल्यमानातुरगैः परैश्च स्थानाद्विरोधेन चचाल रथ्या ॥ ३७ ॥

स्नेहादिति ॥ स्नेहात् तैलादितः, प्रीतेश्च। वहन्ती प्रवर्तमाना। उत्कटाक्षा निष्ठुरचक्रभ्रमणकाष्ठा, उत्क्षिप्तलोचना च। हृदये मध्ये, मनसि च। शल्यं तोमरादिशस्त्रं धुरं वा, कौटिल्यं च। दधाना धरन्ती। परैर्जातिसंपन्नैः, तुरगैरश्वैः, आतुरैश्चपलगतिभिः

परैर्धूर्तैः । उच्चाल्यमाना प्रेर्यमाणा । रथ्या रथसमूहः वेश्या इव । विरोधेन वैरेण, कलहव्याजेन च । स्थानात्प्रदेशात् । क्षणं मुहूर्तम् । चचाल चलितवती ॥ श्लेषोपमा ॥

उदात्तवंशं बहुधातुरङ्गैरूढं समुत्कङ्कटकप्रधानम् ।
युयुत्सु गच्छत्प्रकटोत्थदानं तद्धास्तिकं कावचिकं च रेजे ॥ ३८ ॥

उदात्तेति ॥ उदात्तवंशम् उच्चपृष्ठवंशम्, उदारान्वयं च । बहुधातुरङ्गैर्बहूनां धातूनां गैरिकादीनां रङ्गैः रूढं विभक्तम्, बहुधा बहुप्रकारेण तुरङ्गैरश्वैः ऊढं धृतं च । समुत्कं समुत्कण्ठितं कटकप्रधानं कटके स्कन्धावारे प्रधानम्, समुत् सानन्दं कङ्कटकप्रधानं संनाहसनाथं च । प्रकटोत्थदानं प्रकर्षेण कटाभ्यां कपोलाभ्याम् उत्थमुत्थितं दानं मदो यस्य तादृक्, प्रव्यक्तनैसर्गिकत्यागं च । युयुत्सु योद्धुमिच्छत् । गच्छत् चलत् तत् हास्तिकं हस्तिसमूहः, कावचिकं कवचिसमूहश्च । रेजे भाति स्म ॥ श्लेषः ॥

शार्ङ्गाणि चापानि समुत्क्षिपन्तस्ते कञ्चुकं कार्दमिकं प्रविष्टाः ।
धनुर्भृतोऽभ्युद्धतनीलशृङ्गाः कृष्णाः पशूनां समजा इवाभुः ॥ ३९ ॥

शार्ङ्गाणीति ॥ शार्ङ्गचापानां शृङ्गम्, कार्दमिककञ्चुकस्य कृष्णवर्ण उपमानम् ॥

नृणामसीनां वसुनन्दकानां पार्श्वोपरोधं स्फुरतां प्रवाहाः ।
स्विन्दारुणानां विरराजिरेऽमी द्रुता इव त्रापुषजातुषौघाः ॥ ४० ॥

नृणामिति ॥ नृणां पुरुषाणां पार्श्वोपरोधम् उभयपार्श्वमुपरुध्य स्फुरतां शोभमानानाम्, स्विन्दारुणानां श्वेतशोणानाम् असीनां खड्गानां वसुनन्दकानां हस्तस्फुराणां अमी प्रवाहा द्रुता द्रवीभूताः त्रापुषजातुषौघाः त्रपुजतुविकारप्रवाहा इव विरराजिरे शुशुभिरे । असित्रपुणोः श्वैत्यम्, वसुनन्दकजतुनोः शोणतेति सादृश्यम् ॥

भूर्जद्रुमस्येव विहायसश्चेत्त्वचश्च्युताः स्युर्विधुता मरुद्भिः ।
तथा भवेयुः पथि वैजयन्त्यः कालस्य जिह्वा इव वा ललन्त्यः ॥ ४१ ॥

भूर्जेति ॥ चेद्यदि मरुद्भिर्वातैर्विधुताः कम्पिताः च्युताः पतिताः विहायसो गगनस्य भूर्जद्रुमस्य इव त्वचः, यथा स्युः । तथा पथि मार्गे ललन्त्यश्चलन्त्यः, वैजयन्त्यः पताकाः कालस्य यमस्य जिह्वा इव वा भवेयुः ॥ उत्प्रेक्षा ॥

प्रभा विमानं समुपेत्य यातां कौक्षेयकैस्तिग्मकरैः स्फुरद्भिः ।
केषांचिदभ्रोदरमुत्पतन्त्या लीलोन्नतालम्भि तडिल्लतायाः ॥ ४२ ॥

प्रभेति ॥ विमानं विशिष्टसत्कारं स्वस्वस्वामितः समुपेत्य प्राप्य प्रभा दीप्तीः यातां प्राप्तवताम् केषांचिद् भटानाम्, तिग्मकरैस्तीक्ष्णकिरणैः, स्फुरद्भिः झलकायमानैः कौक्षेयकैः खड्गैः कर्तृभिः अभ्रोदरं जलधरमध्यम् उत्पतन्त्या ऊर्ध्वं गच्छन्त्याः तडिल्लताया विद्युल्लताया उन्नता उच्चा लीला शोभा अलम्भि प्राप्ता ॥ लुप्तोपमा ॥

सिन्दूररेणुः करिकर्णतालैरुद्धूयमानो दिशि विप्रकीर्णः ।
रुद्धार्यमाभ्याधित तापसानां संध्यासमाधौ नियमैकबुद्धिम् ॥ ४३ ॥

सिन्दूरेति ॥ करिकर्णतालैर्गजश्रोत्रव्यजनैरुद्धूयमान उत्क्षिप्यमानो दिशि दिक्षु विप्रकीर्णः प्रसृतो रुद्धार्यमा आच्छादितसूर्यः सिन्दूररेणुः सिन्दूरधूली तापसानां व्रतिनां संध्यासमाधौ संध्याकर्मणि नियमैकबुद्धिमनुष्ठानैकमतिमभ्याधित कारितवान् ॥ भ्रान्तिः ॥

अभूत्प्रकाशं विपिनं प्रचारैः कूलंकषाणां न्यपतंस्तटानि ।
निपीतनीरप्रतिदित्सयेव द्विपा मदाम्भो ववृषुः सरःसु ॥ ४४ ॥

अभूदिति ॥ विपिनं वनं प्रचारैश्चरणघट्टनाभिः प्रकाशं निबिडान्धकाररहितम् अभूत् संजातम् । कूलंकषाणां नदीनाम् तटानि न्यपतन् । द्विपा गजा निपीतनीरप्रतिदित्सया निपीतस्य पीतकर्दमावशिष्टस्य नीरस्य प्रतिदातुमिच्छयेव मदाम्भो मदजलं सरःसु सरोवरेषु ववृषुः ॥ समुच्चयः ॥

सौदामिनीदामचितेव शस्त्रैरभ्राकुलेव द्विरदैर्दिगासीत् ।
समुद्रवेलेव चलैस्तुरङ्गैस्त्रैलोक्ययात्रेव जनैश्चलद्भिः ॥ ४५ ॥

सौदामिनीति ॥ दिग् शस्त्रैः सौदामिनीदामचिता तडिन्मालावगुण्ठितेव, द्विरदैर्गजैः अभ्राकुला मेघव्याप्तेव, चलैस्तुरङ्गैरश्वैः समुद्रवेलेव, चलद्भिर्जनैः त्रैलोक्ययात्रेव, आसीत् ॥ उत्प्रेक्षा ॥

वंशावतारं जगतीपतीनां ववन्दिरे वन्दिजना गुणांश्च ।
श्वेतातपत्राणि समुल्लसन्ति क्षीरार्णवस्योत्कलिकाः प्रजिग्युः ॥ ४६ ॥

वंशेति ॥ बन्दिजना जगतीपतीनां क्षितीश्वराणां वंशावतारं यथा स्यात्तथा गुणांश्च ववन्दिरे । समुल्लसन्ति श्वेतातपत्राणि शुभ्रच्छत्राणि क्षीरार्णवस्य उत्कलिकास्तरङ्गान् प्रजिग्युः ॥ समुच्चयः ॥

संक्रीडितं स्यन्दनचक्रजातं वने मयूरा विनिशम्य रम्यम् ।
घनारवोत्काः पतिता इवौघैः पिच्छातपत्रप्रकरा विरेजुः ॥ ४७ ॥

संक्रीडितमिति ॥ पिच्छातपत्रप्रकराः मायूरपिच्छजातच्छत्रसमूहाः वने स्यन्दनचक्रजातं रथस्य चक्राभ्यां जातं रम्यं मनोहरं संक्रीडितं चीत्कृतं विनिशम्य श्रुत्वा घनारवोत्का मेघगर्जनोत्कण्ठ ओघैः समूहैः पतिता मयूरा इव विरेजुः शोभन्ते स्म ॥ उत्प्रेक्षा ॥

शङ्खानकारावमयी पतीनां दिशां श्रुतिः सैन्यमयी च दृष्टिः ।
रजोमयी कामविमानभूमिः शङ्कात्मसंहारमयी बभूव ॥ ४८ ॥

शङ्केति ॥ दिशां पतीनां दिक्पालानां श्रुतिः श्रोत्रं शङ्खानकारावमयी शङ्खपटहध्वनि-

मयी दृष्टिश्च सैन्यमयी कामविमानभूमिः गगनम् रजोमयी धूलीप्रचुरा शङ्का आत्मसंहारमयी बभूव ॥ समुच्चयः ॥

इत्यद्रिकुञ्जान्सरितः सरांसि स्वपच्छयूच्छ्वासचलं वनं च ।
विप्लावयन्ती तमियाय देशमक्षौहिणी वारिधिमापगेव ॥ ४९ ॥

इतीति ॥ इत्युक्तप्रकारेण अक्षौहिणी अद्रिकुञ्जाञ्शैलकटकसमूहान्, सरितो नदीः सरांसि सरोवराणि स्वपच्छयूच्छ्वासचलं निद्राणाजगरघोणाविनिर्गतवातचञ्चलं वनं च विप्लावयन्ती सती तं देशं दण्डकारण्यं विराटदेशं च आपगा नदी वारिधिम् इव इयाय प्राप ॥

ततो गभीरश्चरितैरगाधैर्ज्वलन्निवान्तःकरणेन कुप्यन् ।
स्पृष्टानुमेयस्फुरितोदराग्निरुच्चैरुदन्वानिव दीप्यमानः ॥ ५० ॥
पतिर्मृगाणां गजबृंहितेन कल्पान्तमेघेन च सुप्रतीकः ।
यथा सुधांश्वभ्युदये च वार्धिः क्षोभं रिपूणां निनदेन गच्छन् ॥ ५१ ॥
स संजिहीर्षन्निव जीवलोकं यमेन कुर्वन्निव दृष्टियुद्धम् ।
वमन्निव क्रोधहुताशराशिं गिलन्निवाशाः स्थगयन्निवार्कम् ॥ ५२ ॥
आदित्सया मानधनस्य सैन्यमभ्यर्णमाकर्ण्य विकीर्णनादम् ।
द्विषः सदो दाशरथी रयेणाव्यापत्सहेनावरजेन भीमः ॥ ५३ ॥
(चतुर्भिः कुलकम्)

तत इत्यादि ॥ ततोऽक्षोहिणीप्राप्त्यनन्तरम् अगाधैर्गम्भीरैः चरितैराचरणैः अगाधो गम्भीरः । अन्तःकरणेन हृदयेन ज्वलन् दहन् इव, कुप्यन् कोपं गच्छन् उदन्वानुदधिः इव, स्पृष्टानुमेयस्फुरितोदराग्निः स्पृष्टेन स्पर्शेन अनुमेयः प्रमाणगोचरः स्फुरितो विजृम्भितः उदराग्निर्जठराग्निर्यस्य तादृक् सन् उच्चैरतिशयेन दीप्यमानः प्रज्वाल्यमानः । गजबृंहितेन करिचीत्कृतेन मृगाणां पतिः सिंह इव, कल्पान्तमेघेन प्रलयकालजलदेन सुप्रतीक ईशानाशागज इव, सुधांश्वभ्युदये चन्द्रोदये वार्धिः समुद्र इव, रिपूणां निनदेन ध्वनिना क्षोभं गच्छन्व्रजन् । जीवलोकं प्राणिवर्गं संजिहीर्षन् संहर्तुमिच्छन् इव । यमेन कृतान्तेन सह दृष्टियुद्धं विलोचनयुद्धं कुर्वन् विदधत् इव । क्रोधहुताशराशिं क्रोधानलावलीं वमन् उद्गिरन् इव । आशा दिशो गिलन् उदरमध्ये कुर्वन् इव । अर्कं सूर्यं स्थगयन् प्रच्छादयन् इव । स भीमो रौद्रो दाशरथी रामः सहेन समर्थेन अवरजेन कनिष्ठेन लक्ष्मणेन सह विकीर्णनादं विस्तीर्णध्वनि सैन्यं बलम् अभ्यर्णं निकटम् आकर्ण्य श्रुत्वा मानधनस्य गर्वधनस्य आदित्सया जिघृक्षया द्विषः शत्रोः सदः सभां रयेण वेगेन व्यापत् व्याप्तवान् ॥ भारतीये—स रथी भीमो वृकोदरः सदा सर्वदा व्यापत्सहेन विपत्सहिष्णुना अवरजेनार्जुनेन, अमानधनस्य प्रचुरगोधनस्य आदित्सया द्विषः शत्रून् उदाश उच्चैर्भक्षयामास ॥

शङ्खा निनेदुः पटहाश्चुकूजुर्गजा जगर्जुस्तुरगा जिहेषुः ।
वीरा ववल्गुः शकटा विरेसुरासीदकूपाररवः समन्तात् ॥ १४ ॥

शङ्खा इति ॥ अकूपाररवः समुद्रघोष इव ॥ समुच्चयः ॥

बभुः पुराणाः स्फुटिता भटानां व्रणा रणानन्दथुनिर्भरेण ।
स्वामिप्रसादानसहा निरोद्धुं देहाः स्वयं भेदमिवाभ्युपेयुः ॥ १५ ॥

बभुरिति ॥ भटानां योधानां पुराणाः पुरातना व्रणा अरूंषि रणानन्दथुनिर्भरेण संग्रामहर्षाधिक्येन स्फुटिताः सन्तो बभुः शोभन्ते स्म । स्वामिप्रसादान् प्रभुसत्कारान् निरोद्धुं कर्तुम् असहा असमर्था देहाः कायाः स्वयमात्मना भेदम् अभ्युपेयुरिव ॥ उत्प्रेक्षा ॥

सूता नृपाणां युधि नामधेयं वृत्तं निपेठुः कृतवृत्तबन्धम् ।
दग्धानि कर्पूररजांसि भूपाः स्ववर्मणोऽन्तश्चकरुः श्रमार्ताः ॥ १६ ॥

सूता इति ॥ सूता वन्दिजनाः युधि संग्रामे नामधेयं नाम्ना धेयं नामगर्वितं कृतवृत्तबन्धं कृतछन्दोविशेषरचनं वृत्तमाचरितं निपेठुः पठितवन्तः । श्रमार्ताः श्रमपीडिताः सङ्ग्रामायाससंतप्ताः भूपा राजानः स्ववर्मणः आत्मीयसंनहनस्य अन्तर्मध्ये दग्धानि चूर्णीकृतानि कर्पूररजांसि घनसाररेणून् चकरुर्विक्षिप्तवन्तः ॥ समुच्चयः ॥

विशुद्धवंशानि गुणानतानि प्रपीड्यमानान्यपि कार्मुकाणि ।
पर्यङ्कमारोप्य विलालितानि मित्राणि मत्वेव कृतं विनेमुः ॥ १७ ॥

विशुद्धवंशेति ॥ विशुद्धवंशानि अवक्रमस्कराणि पूतान्वयानि च । गुणानतानि मौर्वीनम्रीकृतानि शौर्यौदार्यादिनम्रीभूतानि च । प्रपीड्यमानानि ताडितानि, अपि कार्मुकाणि धनूंषि, कृतं करणीयं मत्वा पर्यङ्कं शय्याम् आरोप्य, विलालितानि मित्राणि सुहृद इव विनेमुः विनमन्ति स्म ॥ श्लेषः ॥

वश्यानि मुष्टेरगतानि भेदं धनूंषि नम्राणि विपत्क्षमाणि ।
स्वदेहलीनां स्थितिमत्यजन्ति नृणां कलत्राणि हितान्यतीयुः ॥ १८ ॥

वश्यानीति ॥ मुष्टेः करतलाङ्गुलिबन्धस्य, आज्ञायाश्चावश्यानि वशं गतानि । भेदं भङ्गं पृथक्त्वं च अगतानि अप्राप्तानि । नम्राणि । विपत्क्षमाणि आपत्समर्थानि । स्वदेहलीनामात्मशरीरसंश्लिष्टां स्वकीयमन्दिरकुतुपानां च । स्थितिमवस्थानं मर्यादां च । अत्यजन्ति । हितानि हितजनकानि । धनूंषि कार्मुकाणि नृणां पुरुषाणां कलत्राणि कुलकामिनीरतीयुरतिक्रान्तवन्ति ॥ श्लेषः ॥

स्वयं समानम्य शरासनानि स्तम्भं च हित्वा मधुरं ध्वनन्ति ।
प्रारेभिरेऽन्यान्विनतान्विधातुं परान्विनम्राः खलु नामयन्ति ॥ १९ ॥

स्वयमिति ॥ शरासनानि धनूंषि स्वयं समानम्य नम्रीभूय स्तम्भं स्तब्धतां हित्वा मधुरं यथा स्यात्तथा ध्वनन्ति नदन्ति सन्ति अन्यान् विनतान् विधातुं प्रारेभिरे । खलु यतः विनम्राः परान् नामयन्ति ॥ अर्थान्तरन्यासः ॥

ऋजुप्रकारेषु गुणेषु बाणाः शल्यं वहन्तो दधतो विपक्षान् ।
क्षणं न तस्थुश्चपलाः स्थिरेषु व्राताः खलानामिव सज्जनेषु ॥ ६० ॥

ऋज्विति ॥ बाणाः शल्यं दधतो विपक्षान् वहन्तः कुर्वन्तः चपला ऋजुप्रकारेषु स्थिरेषु गुणेषु मौर्वीषु सज्जनेषु खलानां व्राताः समूहा इव क्षणं न तस्थुः ॥ विशेषणयोगो यथासंभवम् ॥ उपमा ॥

समुद्गिरन्तो नु शफान्मुखेभ्यश्छायां त्यजन्तः किमु पश्चिमार्धम् ।
देहान्क्षिपन्तो नु दृशां पुरस्ताद्विश्वेऽपि तेऽश्वल्लिपुरश्ववर्याः ॥ ६१ ॥

देहानिति ॥ शफान्खुरान् मुखेभ्यः समुद्गिरन्तः किम्, छायां पश्चिमार्धे पश्चिमभागे त्यजन्तः किम्, दृशां पुरस्ताद्देहान् क्षिपन्तः किमिति वितर्कमानयन्तोऽश्ववर्या अश्वल्लिपुः आशुगतवन्तः ॥ उत्प्रेक्षा ॥

रुद्धं शिलोत्कीर्णमिवावतस्थे मुक्तं चलं चित्तमिवाभ्यधावत् ।
अश्वीयमावर्तितमावृतत्तत्कुलालचक्रभ्रमलाघवेन ॥ ६२ ॥

रुद्धमिति ॥ तत् लोकप्रसिद्धम् अश्वीयमश्वसमूहो रुद्धं सत् शिलायामुत्कीर्णमिवावतस्थे, मुक्तं सत् चञ्चलं चित्तमिवाभ्यधावत्, आवर्तितं सत् कुलालचक्रभ्रमलाघवेन आवृतत् बभ्राम ॥ उपमा ॥

रम्याः पदार्था इव मानसानि स्वान्तानि जीवानिव जन्तवोऽपि ।
देहानिवात्याचकृषुस्तुरंगाः स्कन्धान्तरन्यस्तयुगा रथौघान् ॥ ६३ ॥

रम्या इति ॥ स्कन्धान्तरे न्यस्तो युगो यैस्ते तुरंगा रथौघान् रम्याः पदार्था मानसानीव, स्वान्तानि जीवानिव, जन्तवो देहानिव, अत्याचकृषुः ॥ उपमा ॥

नामाददानैः परुषं परेषां निषादिभिः संख्यशिरस्यसंख्याः ।
प्रासाः पतन्तोऽत्यशुभन्विमुक्ता विन्ध्यस्य वंशा इव वातधूताः ॥ ६४ ॥

नामेति ॥ परेषां शत्रूणां परुषं कर्कशं यथा स्यात्तथा नाम आददानैर्निषादिभिरश्ववारैर्विमुक्ता असंख्या अगणनीया संख्यशिरसि सङ्ग्राममस्तके पतन्तः प्रासाः सेला यष्टयः, वातधूता विन्ध्यस्य वंशा इव, अत्यशुभन् ॥ उत्प्रेक्षा ॥

उत्कीर्णा इव कुलपर्वता गजानामाकारैर्मदजलनिर्झरं वहन्तः ।
धावन्ति प्रतिदिशमुन्नताः स्म नागाः क्रोधाग्निज्वलितदृशः सहेमकक्ष्याः ६५

उत्कीर्णा इति ॥ मदजलनिर्झरं मदमेव सलिलप्रस्रवणम् । मदेन तुल्यं सलिलोत्सं च, वहन्तो धारयन्त उन्नताः क्रोधाग्निज्वलितदृशः क्रोधरूपाग्निना ज्वलिता दृक् येषां ते क्रोधतुल्यमग्निज्वलितं दावानलज्वालेव दृग् येषां तादृशश्च, सहेमकक्ष्याः ससुवर्णगण्डाः सह हेम्नः कक्ष्यया मध्यदेशबन्धनोपयुक्तरज्ज्वा हर्म्यादिप्रकोष्ठेन च। भूभृतो हि भूभृन्मध्ये दुर्गहर्म्यादि रचयन्ति । नागा गजा गजानामाकारैः उत्कीर्णा उल्लिखिताः कुलपर्वता इव प्रतिदिशं धावन्ति ॥ उत्प्रेक्षा ॥ प्रहर्षिणी वृत्तम् ॥

सामजा मदवशान्मतिहीना वक्रमङ्कुशमृजुं युधि चक्रुः ।
प्रायशः परिजहाति जनोऽयं तीव्रमेव समुपेत्य शठत्वम् ॥ ६६ ॥

सामजा इति ॥ मदवशात् मतिहीना बुद्धिहीनाः सामजा गजा युधि वक्रमपि अङ्कुशं ऋजुं चक्रुः । अयं जनः प्रायशः बाहुल्येन शठत्वं समुपेत्य संप्राप्य तीव्रमेव नितान्तमेव परिजहाति ॥ अर्थान्तरन्यासः । स्वागतावृत्तम् ॥

मुखकृतकपटाः प्रमत्तचित्ताः परुषरुषश्चरणेषु सत्स्वखिन्नाः ।
गुरुकुलमतिचक्रमुः कुशिष्या हितमिव संयति संयतं गजेन्द्राः ॥६७॥

मुखेति ॥ मुखकृतकपटाः मुखे कृत आलानाय हस्तिनीमूत्रसार्द्रवस्त्रनिर्मितहस्तिन्युपन्यासरूपः कपटो येषाम्, मुखे गुरुमुखे कृतं कपटं कौटिल्यं यैस्तादृशश्च । प्रमत्तचित्ता उन्मादिचेतस्काः सप्रमादहृदयाश्च। परुषरुषः निष्ठुररोषाः । च पुना रणेषु सङ्ग्रामेषु कलहेषु च सत्सु अखिन्ना अश्रान्ताश्च । यद्वोपमानविशेषणेषु सत्सु शास्त्रसंमतेषु चरणेषु चारित्रोपदेशेषु परुषरुषः गजेन्द्राः कुशिष्या इव संयतं प्रयत्नायत्तं वचनचरणसंकेतं आत्मनिष्ठं च, हितम् अव्यभिचारि सुखकारि च, गुरुकुलं महामात्रसमूहं सूरिसंदोहं गुरुवंशं वा, संयति सङ्ग्रामे तपसि च अतिचक्रमुः । अतिक्रामन्ति स्म ॥ श्लेषः ॥ पुष्पिताग्रावृत्तम् ॥

उभयपार्श्वगतान्निशिताञ्शराञ्शयुसमेन करेण विपाटयन् ।
गजगणः शुशुभे व्रणगह्वरैः सपदि सौध इवामलजालकैः ॥ ६८ ॥

उभयेति ॥ गजगणो हास्तिकं शयुसमेन अजगरतुल्येन करेण शुण्डादण्डेन उभौ पार्श्वौ गतान् प्राप्तान् निशितान् तीक्ष्णान् शरान् विपाटयन् उत्पाटयन् सन् सपदि शीघ्रं व्रणगह्वरैः अरुश्छिद्रैः सौधः अमलजालकैर्निर्मलगवाक्षजालैरिव शुशुभे ॥ उपमा ॥ द्रुतविलम्बितं वृत्तम् ।

इति स पृतनां दृष्ट्वाविद्यामिव प्रतिबन्धिनीं
जलनिधिरिव क्षुभ्यँल्लक्ष्मीधरोऽनुगतोऽग्रजम् ।

धनुरपि दधत्रेपे जिष्णुः सहायविशङ्कया
न च भुजबलाद्वीरोऽन्यस्माद्धनंजयमिच्छति ॥ ६९ ॥

इति श्रीधनंजयविरचिते धनंजयाङ्के द्विसंधानकाव्ये राघवपाण्डवीयापरनाम्नि तुमुलवर्णनो नाम पञ्चमः सर्गः समाप्तः ।

इतीति ॥ अग्रजं रामं युधिष्ठिरं भीमं च, अनुगतः पश्चाद्गतः, लक्ष्मीधरो लक्ष्मणो लक्ष्मीवांश्च, जिष्णुः जयनशीलः अर्जुनश्च, इति प्राप्तां प्रतिबन्धिनीं प्रतिकूलां पृतनां सेनां अविद्यामिव दृष्ट्वा जलनिधिरिव क्षुभ्यन् सन् धनुर्दधदपि सहायविशङ्कया ससहायजयकलङ्केन त्रेपे लज्जितः । यतः वीरो भुजबलादन्यस्माद् धनं जयं च नेच्छति ॥ अर्थान्तरन्यासः ॥ हरिणी वृत्तम् ।

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीच्छोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां युद्धारम्भवर्णनो नाम पञ्चमः सर्गः ।

---

षष्ठः सर्गः ।

ततः प्रयुक्तभ्रुकुटिं स दुर्धरो निजोद्धतं विक्रमकालसाधनः ।
अरातिघाताय तमग्रजं व्रजन्नमर्षमुद्योग इवान्वगद्युतत् ॥ १ ॥

तत इति ॥ प्रयुक्ता भ्रुकुटिर्येन तं निजोद्धतआत्मगर्वगर्विष्ठम्, तमग्रजं रामं युधिष्ठिरं भीमं च अन्वग् अनुगामि यथा स्यात्तथा अरातीनां घाताय व्रजन् सन् दुर्धरो विक्रमकालः पौरुषसमय एव साधनं सैन्यं यस्य सलक्ष्मणोऽर्जुनश्च, अमर्षं क्रोधम् अन्वग्व्रजन्नुद्योग इव, अद्युतत् ॥ उपमा ॥ सर्गेऽस्मिन्वंशस्थवृत्तम् ॥

कृतातिपातावधिकौ समुद्धतौ हतावधी चापनयावलम्बिनौ ।
उभौ न्यरुद्धां निवहं विरोधिनां तमर्थकामाविव धर्मसंग्रहम् ॥ २ ॥

कृतेति ॥ कृतोऽतिपात उपप्लवो याभ्याम्, अधिकौ क्षात्रधर्मेण सर्वेभ्यः, आत्मतेजसा समुद्धतौ, हतोऽतिक्रान्तोऽवधिर्मर्यादा ययोः, चापनये धनुर्विद्यायामवलम्बोऽभिमानो ययोस्तादृशौ उभौ रामलक्ष्मणौ भीमार्जुनौ च तं विरोधिनां निवहं समूहम्, अपनयमनीतिमवलम्बमानौ अर्थकामौ धर्मसंग्रहमिव, न्यरुद्धाम् ॥ उपमा ॥

जयश्रियं दक्षिणमंसमंसलौ तनुं महावेगमहंयुतं मनः ।
शरासनं ज्यां नृपती भयं रिपुं समं समारोपयतः स्म संयति ॥ ३ ॥

जयेति ॥ अंसलौ पीनस्कन्धौ, नृपती रामलक्ष्मणौ भीमार्जुनौ च, दक्षिणमंसं जयश्रियम्, तनुं महावेगम्, मनः अहंयुतमहंकारम्, शरासनं ज्याम्, रिपुं भयम्, सममेककालम् संयति सङ्ग्रामे समारोपयतः स्मः ॥ गत्यर्थत्वेन द्विकर्मकता ॥ समुच्चयः ॥

तपःसमाधिष्विव तौ तपस्यतां प्रसह्य कर्णेष्विव दिक्षु दन्तिनाम्।
दिगीश्वराणां हृदयेष्विवायतं विकृष्य मौर्वीं विनिजघ्नतुस्तराम्॥ ४॥

तप इति॥ तौ मौर्वीं ज्याम्, आयतं कर्णान्तं विकृष्याकृष्य, तपस्यतां तपःसमाधिष्विव, दिग्दन्तिनां कर्णेष्विव, दिक्पालानां हृदयेष्विव, प्रसह्य विनिजघ्नतुस्तराम्॥ उत्प्रेक्षा॥

ज्ययोर्विरिद्धं विनिशम्य धन्विनां निपेतुरस्त्राणि करान्मनांसि च।
श्लथानि पूर्वाणि पराणि योषितां घनानि गूढान्यभवन्नभःसदाम्॥ ५॥

ज्ययोरिति॥ ज्ययोः विरिद्धं ध्वनिं विनिशम्य धन्विनां धनुर्धराणां करात् अस्त्राणि निपेतुः, च पुनः पूर्वाणि मनांसि श्लथानि, नभःसदां देवानां योषितामबलानां गूढान्यालिङ्गनानि पराण्यतिशयितानि घनानि दृढानि अभवन्॥ यद्वा पूर्वाणि घनानि अद्यापि प्रेमरसरसायनरसिकानि मनांसि गूढानि प्रच्छन्नाशयानि, पराणि श्लथानि प्रेमकलहकालशिथिलानि घनानि प्रेमरसरसायनरसिकानि अभवन्॥ अनेन ज्याध्वनेः स्वर्गव्यापित्वं स्त्रीणामतिभीरुता च ध्वन्यते॥ समुच्चयः॥

गुणेन लोकं निनदेन दिङ्मुखं रुषान्तवह्निं वपुषापि पूषणम्।
दृढेन चालीढपदेन मेदिनीं गणं रिपूणामविवेष्टतां शरैः॥ ६॥

गुणेनेति॥ तौ गुणेन शौर्यौदार्यादिलक्षणेन लोकं जगत्, निनदेन शब्देन दिगन्तरम्, रुषा रोषेण अन्तवह्निं प्रलयानलम्, वपुषा देहेन पूषणमादित्यम्, दृढेन आलीढेन दक्षिणजङ्घाप्रसारपूर्वकवामजङ्घासंकोचरूपस्थानकविशेषेण मेदिनीं महीम्, शरैः रिपूणां गणमविवेष्टतां वेष्टितवन्तौ॥ समुच्चयः॥

यशोवकाशस्य विधित्सया शरैर्दिशः परासारयतोरिवायतम्।
विकृष्यमाणं युगमेव गव्ययोः ससार पश्चान्न पदं रणे तयोः॥ ७॥

यशविति॥ यशोवकाशस विधित्सया दिशः शरैः परासारयतोरिव तयोः आयतं कर्णान्तं विकृष्यमाणं गव्ययोः प्रत्यञ्चयोर्युगमेव रणे पश्चात्ससार। नतु रणे तयोः पदं पश्चात्ससार॥ उत्प्रेक्षा॥

नृपौ रुषा पातयतां शिलीमुखान्समं सपत्ना हृदयान्यपातयन्।
विदूरमुच्चैःपदमध्यरुक्षतां भियाध्यरुक्षन्युधि वामलूरकम्॥ ८॥

नृपाविति॥ सपत्नाः नृपरोषपातितबाणसमकालमेव हृदयानि अपातयन्, तथा नृपौ विदूरमलक्ष्यामुच्चैःपदवीमारूढवन्तौ, सपत्ना युधि भिया वामलूरं छिद्रं प्रविविशुः॥ सहजा वक्रोक्तिः॥

इषून्विमर्देऽमुचतां शरासनं शरानसूनप्यमुचन्नरातयः।
अजस्रमश्रु व्यमुचत्प्रियाजनस्तथास्थिताः स्पर्द्धममी न तत्यजुः॥ ९॥

इषूनिति ॥ तौ यावत् शरानमुञ्चताम्, अरातयः शरासनं शरान् असूनप्यमुचन्, तत्प्रियाजनश्चाजस्रमश्रु व्यमुचत्, तथास्थिताः प्राणान्तिकावस्थां गता अप्यमी स्पर्द्धां न तत्यजुः ॥ वक्रोक्तिः ॥

विशेषसूत्रैरिव पत्त्रिभिस्तयोः पदातिरुत्सर्ग इवाहतोऽखिलः ।
पलायितोऽन्योन्यमवेक्ष्य निस्त्रपः सहाभिभूतस्त्रपते हि कस्य कः ॥ १० ॥

विशेषेति ॥ विशेषसूत्रैर्बाधकविधिभिरिव, तयोः पत्त्रिभिः, आहतस्ताडितो बाधितश्च, उत्सर्गः सामान्यविधिरिव, अखिलः पदातिः निस्त्रपः सन् अन्योन्यमवेक्ष्य पलायितः । हि यतः सहाभिभूतः कः कस्य त्रपते ॥ अर्थान्तरन्यासः ॥

स तिर्यगन्वक्पुरतश्च विद्विषां दरीषु गुल्मेषु ददर्श तौ गणः ।
असूनिवान्वेष्टुममुष्य चक्षुषोर्मनस्विनौ बभ्रमतुर्मनःस्वपि ॥ ११ ॥

स तिर्येति ॥ स विद्विषां गणः तिर्यक् पार्श्वभागे अन्वक् पश्चाद्भागे पुरतोऽग्रभागे दरीषु कंदरेषु गुल्मेषु झाटकेषु तौ ददर्श । मनस्विनौ तौ, अमुष्य गणस्य असूनन्वेष्टुमिव, अमुष्य चक्षुषोर्मनःसु च बभ्रमतुः ॥ उत्प्रेक्षा ॥

ययुर्विदेशं विदिशं जगाहिरे धुनीरगाधा विललङ्घिरे गिरीन् ।
धृताः समुद्रस्य विलोलवीचिभिर्भयेऽपि भृत्या न पराक्रमं जहुः ॥ १२ ॥

ययुरिति ॥ भृत्याः पदातयो विदेशं ययुः, विदिशं दिङ्मध्यं जगाहिरे, अगाधा धुनीर्नदीर्गिरींश्च विललङ्घिरे, समुद्रस्य विलोलवीचिभिश्चञ्चलतरङ्गैर्धृताः । एवं भयेऽपि पराक्रमं न जहुः । भयस्थानेऽपि समुद्रपतनादौ ग्लानिं न जग्मुः ॥ वक्रोक्तिः ॥

बिम्बानि भान्वोरिव बिभ्रतोस्तयोर्विशङ्कया केचन कंदरोदरम् ।
तमिस्रसंघा इव तेऽधिशिश्रियिरे क्व नष्टमार्गा न विशन्ति जन्तवः ॥ १३ ॥

बिम्बानीति ॥ भान्वोरिव बिम्बानि बिभ्रतोस्तयोर्विशङ्कया तमिस्रसंघा इव केचन भृत्याः कंदरोदरमधिशिश्रियिरे । नष्टमार्गा जन्तवः क्व न विशन्ति ॥ अर्थान्तरन्यासः ॥

इति प्रतापादवगाढयोस्तयो रणस्य मध्यं रिपवोऽनुकूलताम् ।
ह्रदस्य जग्मुः करिणोरिवोर्मयश्चलाः सहन्ते किमिवातिवर्तिनः ॥ १४ ॥

इति प्रेति ॥ रिपवः ऊर्मय इव रणस्य ह्रदस्येव मध्यम् अन्तः अवगाढयोः अधिष्ठितवतोः, तयोर्नृपयोः करिणोरिव प्रतापात्प्रभावात् अनुकूलताम् अनुलोमताम् अनुतटतां जग्मुः । चलाश्चञ्चला अतिवर्तिनोऽतिक्रमणशीलान् किमिव सहन्ते । अपि तु न ॥ अर्थान्तरन्यासः ॥

गतावशिष्टेषु बलेषु केष्वपि स्थितेषु पुञ्जैः सरसस्तपेऽम्बुषु ।
अकालमेघा इव तत्र नायकाः समन्ततः संनिहिता धनुर्भृताम् ॥ १५ ॥

गतेति ॥ गतावशिष्टेषु पलायितशिष्टेषु शुष्कशिष्टेषु केष्वपि कतिपयेष्वपि पुञ्जैः समुदायैः वलेषु सैन्येषु तपे ग्रीष्मे सरसोऽम्बुषु इव स्थितेषु सत्सु धनुर्भृतां नायकाः अकालमेघा इव समन्ततः सामस्त्येन संनिधिं प्राप्ताः ॥ उपमा ॥

पतत्रिनादेन भुजंगयोषितां पपात गर्भः किल तार्क्ष्यशङ्कया ।
नभश्चरा निश्चितमन्त्रसाधना वने भयेनास्यपगारमुद्यताः ॥ १६ ॥

पतत्रीति ॥ नागाङ्गनानां गर्भः शरध्वनिना नागान्तकशङ्कया पपात किल निश्चयेन । भयेन उद्यता नभश्चरा असीनपगूर्य असिभिरपगूर्य वा वने निश्चितं मन्त्रसाधनं यैस्तादृशा अभूवन् ॥ समुच्चयः ॥

समन्ततोऽप्युद्गतधूमकेतवः स्थितोर्ध्ववाला इव तत्रसुर्दिशः ।
निपेतुरुल्काः कलमाग्रपिङ्गला यमस्य लम्बाः कुटिला जटा इव ॥१७॥

समन्तेति ॥ उद्गतधूमकेतवो दिशः स्थितोर्ध्ववाला इव समन्ततः तत्रसुः । शालिमञ्जरीपिङ्गला उल्का लम्बाः कुटिला यमस्य जटा इव निपेतुः ॥ उत्प्रेक्षा ॥

प्रभिन्नकक्षीवति लोलवाजिनि स्थिते पुरः स्यन्दनभाजि राजके ।
मनश्चकम्पे वनसंनिवासिनां तयोः क्षणं जीवितसंशयं गतम् ॥ १८ ॥

प्रभिन्नेति ॥ प्रभिन्नाः कक्षीवन्तो गजा यस्य तस्मिन्, लोलाश्चञ्चला वाजिनो यस्य तस्मिन्, स्यन्दनं भजति तस्मिन्, तयो राजके राजसमूहे पुरः स्थिते सति वनसंनिवासिनां मनो जीवितसंशयं गतं सत् क्षणं चकम्पे ॥

इतस्ततः संविवरीषतां द्विषां सितातपत्राणि शितार्धचन्द्रकैः ।
तयोर्विलूनानि यशांसि संहतिं समागतानीव रणाङ्गणेऽपतन् ॥ १९ ॥

इतस्तेति ॥ इतस्ततः संविवरीषतां संवरीतुमिच्छतां द्विषां शत्रूणां सितातपत्राणि श्वेतच्छत्राणि तयोः शितार्धचन्द्रैस्तीक्ष्णवाणविशेषैर्विलूनानि छिन्नानि संहतिं समूहं समागतानि यशांसि इव रणाङ्गणे सङ्ग्रामभूमौ अपतन् ॥ उत्प्रेक्षा ॥

रथेषु तेषां जगतीभुजां ध्वजान्महीभुजौ चिच्छिदतुर्भुजानिव ।
तथा क्षुरप्रैरनयैः क्रियाफलं मदातिलोभाविव वाजिनां युगम् ॥ २० ॥

रथेष्विति ॥ महीभुजौ तेषां जगतीभुजां रथेषु ध्वजान् भुजानिव, तथा वाजिनामश्वानां युगम् क्षुरप्रैर्बाणविशेषैः, मदातिलोभौ क्रियाफलं कर्मफलम्, अनयैरनीतिभिरिव, चिच्छिदतुः ॥ संकरः ॥

शरेण चूडामणयः किरीटतो विपाटिता नायकतां विहाय ते ।
कुतोऽपि याता विदिता न भूभृतां पदच्युतानामियमीदृशी गतिः॥२१॥

शरेणेति ॥ [तयोः] शरेण भूभृतां किरीटतो विपाटिता उच्छलितास्ते चूडामणयः

नायकतां विहाय कुतोऽपि याता गताः, तथा न विदिता लोचनगोचरा न जाताः । पदच्युतानां स्थानभ्रष्टानाम् इयं प्रत्यक्षभूता ईदृशी गतिर्भवति ॥ अर्थान्तरन्यासः ॥

प्रसह्य ताभ्यां परलोकसाधनः शरैर्नृपाणां गुणवान्पराहतः ।
मदाभिमानाधिकवीर्यसंग्रहाद्वसुस्वराभ्यामिव धर्मसंचयः ॥ २२ ॥

प्रसह्येति ॥ अर्थकामाभ्यामिव ताभ्याम् 'ज्ञानं जनं कुलं जातिं बलमृद्धिं तपो वपुः । अष्टावाश्रित्य मानित्वं मदमाहुर्गतस्मयाः' इत्युक्तरूपस्य मदस्य, नान्यो मत्तुल्यगुणवानित्यभिमानस्य, अधिकपराक्रमस्य च संग्रहादङ्गीकारात् परलोकसाधनः शत्रुलोकसाधनः स्वर्गसाधनश्च, गुणवान् जीवावान् व्रतादिमांश्च, नृपाणां धर्मसंचयः चापसमूहः पुण्यसंचयश्च, प्रसह्य शरैः पराहतो निराकृतः ॥ उपमा ॥

स सागरावर्तधनुर्धरो नरोनभःसदां कामविमानसंहतिम् ।
अयत्नसंक्लृप्तगवाक्षपद्धतिं चकार शातैर्विशिखैर्विहायसि ॥ २३ ॥

स सागेति ॥ सागरावर्तधनुर्धरः सागरस्य समुद्रस्य सगरधनुषो वा आवर्ता इवावर्ता यस्य तं सागरावर्तं नाम वा धनुर्धरतिं स नरः शातैस्तीक्ष्णैः, शरैः विहायसि गगने, अयत्नसंक्लृप्ता स्वयंसिद्धैव वातायनश्रेणिर्यस्यास्तां नभःसदां देवानां कामविमानसंहतिं यथेष्टविमानसमूहं चकार । तद्युद्धदर्शनाय देवा अप्यायाताः ॥ भारतीयपक्षे— विहायसि विहानं विहः । कप्रत्ययान्तः । विहानि विशिष्टप्रवृत्त्योपलक्षितानि अयांसि लोहानि यत्रेति संगरे अनभःसदां मनुष्याणां काममत्यर्थं विगतो मानो यस्यास्तां संहतिम् अयत्नसंक्लृप्तगवाक्षपद्धतिम् अयत्नेन संक्लृप्ता विहिता गवां पशूनाम् अक्षपद्धतिरिन्द्रियवर्गो यस्यां ताम्, अयत्नेन अनायासेन संक्लृप्ता छिन्ना गवां वाणीनामक्षाणामिन्द्रियाणां पद्धतिर्वर्गो यस्या एतादृशीं चकार ॥ श्लेषः ॥

कणैर्गजास्तेन विलूनपुष्करा बभुः स्रवन्तः क्षतजानि धारया ।
बृहन्नितम्बा दवदाहनीलिता नगाः क्षरद्गैरिकनिर्झरा इव ॥ २४ ॥

कणैरिति ॥ तेन नृपयुगलेन कणैर्बाणैः विलूनपुष्कराश्छिन्नशुण्डाग्राः गजाः धारया क्षतजानि रुधिराणि स्रवन्तः सन्तः, बृहन्नितम्बाः स्थूलसानवः, दवदाहेन नीलिताः, क्षरन्तो गैरिकनिर्झरा येभ्यस्तादृशा नगाः पर्वता इव, बभुः ॥ उत्प्रेक्षा ॥

रथप्रयुक्तस्य हयस्य पश्चिमे शरैर्विलूने पदयोर्युगेऽमुना ।
पुरःपदोत्क्रान्तधुरस्य चामरैर्मृगाधिपस्येव सटैः क्रमोऽभवत् ॥ २५ ॥

रथेति ॥ रथे प्रयुक्तस्य पुरःपदैरग्रचरणैरुत्क्रान्ता धूर्येन तस्य हयस्य पश्चिमे पदयोर्युगले अमुना शरैर्विलूने सति चामरैः प्रकीर्णकैः, मृगाधिपस्य सिंहस्य सटैः केशरैरिव, क्रमोऽभवत् ॥ उत्प्रेक्षा ॥

हतैकपादं युधि तस्य रोपणैः क्षणे निषण्णं सुहृदीव कार्मुके ।
परत्र राजन्यकमेकपादकं तपस्यतीव स्म जिगीषया रिपोः ॥ २६ ॥

हतैकेति ॥ तस्य रोपणैर्बाणैर्हतैकपादं सत् क्षणं, सुहृदीव, कार्मुके निषण्णं राजन्यकमेकपादकं सत् परलोके रिपोर्जिगीषया तपस्यति स्मेव ॥ उत्प्रेक्षा ॥

स सूर्यहासं किमसिं किमर्गलां गदां नु पाशं नु परश्वधं धनुः ।
दधत्किमित्याकलितो न भीरुभिर्मतिः कुतो वा चलितेषु धातुषु ॥२७॥

स सूर्येति ॥ स किं सूर्यहासमसिम् किम् अर्गलाम् किं गदां किं पाशं किं परश्वधं किं धनुः दधत् इति भीरुभिर्न आकलितः । धातुषु चलितेषु मतिः कुतः ॥ अर्थान्तरन्यासः ॥

स शात्रवाणां हृदि शल्यमुद्धरन्स्वशस्त्रशल्येन जगाम बन्धुताम् ।
समुन्नता यत्कुपिताश्च कुर्वते न तत्प्रतीता ह्यपि दुर्जनाः प्रियम् ॥२८॥

स शात्रवेति ।। स स्वशस्त्रशल्येन शात्रवाणां हृदि शल्यमुद्धरन्नुत्पाटयन् सन् बन्धुतां जगाम । यत् कुपिता अपि समुन्नताः सत्पुरुषाः कुर्वते तत् प्रतीताः प्रसन्ना अपि दुर्जनाः प्रियं न कुर्वते ॥ अर्थान्तरन्यासः ॥

नृपा नृपत्वं न शराः शरात्मतां न कार्मुकं कार्मुकतां तुरंगमाः ।
तुरंगतां तिष्ठिधिरे न संयुगे विमुञ्चति ज्यायसि बाणसंहतिम् ॥ २९ ॥

नृपा इति ॥ ज्यायसि ज्येष्ठे भ्रातरि संयुगे बाणसंघातं विमुञ्चति सति ते सर्वे स्वधर्मं न प्राप्तवन्तः । नृपत्वं भूपत्वं क्षात्रधर्मश्च, शरात्मता बाणता प्राणिमारणं च, कार्मुकता धनुष्ट्वं कर्मवत्ता च, तुरंगता अश्वता शीघ्रगामिता च । अत्र पूर्वार्धे विरोधः, परार्धे परिहारः ॥ समुच्चयश्लेषौ ॥

गजेषु नष्टेष्वगजेष्वनायकं रथेषु भग्नेषु मनोरथेषु च ।
न शून्यचित्तं युधि राजपुत्रकं पुरातनं चित्रमिवाशुभद्भृशम् ॥ ३० ॥

गजेष्विति ।। राजपुत्रकं युधि पर्वतजेषु करिषु नष्टेषु रथेषु च पुनः मनोरथेषु भग्नेषु सत्सु अनायकमसहायं शून्यं चित्तं यस्य तादृशं सत् भृशम्, पुरातनं चित्रमिव, अशुभत् । विरोधाक्षेपौ ॥

प्रभावतो बाणचयस्य मोक्तरि प्रभावतोपे समरे स्थिते नृपाः ।
प्रभावतो हीनतया विवर्जिता प्रभावतो ही न तया रराजिरे ॥ ३१ ॥

(पादादियमकम्)

प्रभेति ॥ प्रभावतो दीप्तिमतः शरसंघस्य मोक्तरि अतोपे प्रभौ समरे स्थिते सति नृपाः

प्रभावतः प्रकृष्टभावयुक्तेन फलं दातुं समर्थेन प्रभावतः प्रतापेन विवर्जिताः सन्तः तया हीनतया कातरतया ही कष्टम् न राजिरे ॥ आदियमकम् ॥

गजा नियन्तॄन्करशीकरोत्करैर्विमुक्तसूत्कारमिषूपदारितान् ।
निशारशीतैरुदमीमिलन्नहो महीयसां प्रीतिररुंतुदेष्वपि ॥ ३२ ॥

गजा इति ॥ गजा इषुभिरुपदारितान् नियन्तॄन् निशारशीतैः हिमांशुशीतलैः करविमुक्तजललववृन्दैः विमुक्तसूत्कारं यथा स्यात्तथा उदजीवयन् । अहो महीयसां अरुंतुदेष्वपि प्रीतिः ॥

ज्वलत्यमुष्मिन्कुपिते महीपतावनेकबन्धानि विभावसाविव ।
प्रिये जनानां ननृतू रणे तथा वने कबन्धानि विभावसाविव ॥ ३३ ॥

(अन्त्यपादयमकम्)

ज्वलेति ॥ प्रजानाम् असाविव प्रिये विभौ अस्मिन्महीपतौ कुपिते वने विभावसाविव रणे ज्वलति सति अनेकबन्धानि नानाविधकरणानि कबन्धानि ननृतुः ॥ अन्तयमकम् ॥

तयोः पतन्त्यः शरपञ्जरान्तरं विरेजुरुत्खातपयष्टयः स्फुटम् ।
यमेन शुद्धामिषसंजिघत्सया तनूभृतां पर्श्व इवावतानिताः ॥ ३४ ॥

तयोरिति ॥ तयोः शरपञ्जरान्तरं बाणवीथिमध्यं पतन्त्यः उत्खातपयष्टयः किरणालोकयष्टयः, यमेन शुद्धामिषसंजिघत्सया केवलं मांसभक्षणवाञ्छया अवतानिताः प्रसारिताः पर्श्वः कुक्षिप्रदेशास्थीनि इव, स्फुटं यथा स्यात्तथा विरेजुः ॥ उत्प्रेक्षा ॥

शरैः समस्तः खरदूषणो रिपुः समं ततोऽभीतमहानराजितः ।
विशीर्णचेताः कृतयुद्धविक्रमः समन्ततोऽभीतमहा न राजितः ॥ ३५ ॥

शरैरिति ॥ ततो लोकप्रसिद्धात् अभीतमहानराजितः निर्भयमहापुरुषरामलक्ष्मणसङ्ग्रामात् समं युगपत् शरैर्बाणैः समस्तः संतर्जितः अतएव विशीर्णचेताः विह्वलचित्तः कृतयुद्धविक्रमः विहितसङ्ग्रामपराक्रमः अभीतमहा अभि समन्तादितं गतं महो यस्य सः सामस्त्येन नष्टतेजाः खरदूषणो रिपुः खरदूषणनामा शत्रुः समन्ततः सामस्त्येन न राजितः न शोभितः ॥ भारतीयपक्षे—अभीतमहानराजितः अभीतो भीमः महानरोऽर्जुनः तयोराजितः सङ्ग्रामतः संमुखागतार्जुनसङ्ग्रामतो वा शरैः ततो व्याप्तः समस्तः सकलः खरदूषणः तीव्रापराधो रिपुः कृतयुद्धविक्रमः विहितयुद्धविगतशक्तिः ॥ श्लेषः ॥

चिरस्य युद्ध्वा स पपात निष्क्रियः सहैव शुद्धान्तवधूजनाश्रुभिः ।
सुरासुराणां कुसुमाञ्जलिर्दिवस्तयोरपप्तन्मधुपायिभिः समम् ॥ ३६ ॥

चिरस्येति ॥ स रिपुः चिरस्य चिरकालं युद्ध्वा निष्क्रियः सन् शुद्धान्तवधूजनाश्रुभिः

अन्तःपुरकामिनीबाष्पैः सह पपात । [तदनु] दिव आकाशात् सुरासुराणां देवदानवानां कुसुमाञ्जलिः पुष्पाञ्जलिः मधुपायिभिर्भ्रमरैः समं सह तयोर्नरेन्द्रयोः [उपरि] अपतत् ॥ सहोक्तिः ॥

निपीय रक्तं सुरपुष्पवासितं सितं कपालं परिपूर्य सूनृताम् ।
नृतां प्रशंसन्त्यनयोर्ननर्त न नर्तवाचोर्युधि रक्षसां ततिः ॥ ३७ ॥

(शृङ्खलाबन्धोऽयम्)

निपीयेति ॥ रक्षसां ततिः युधि सुरपुष्पवासितं रक्तं सितं कपालं परिपूर्य निपीय सूनृतां सत्यप्रियाम् ऋतवाचोः सत्यवचनयोरनयो राजपुत्रयोर्नृतां मनुष्यतां प्रशंसन्ती सती न न ननर्त । ननर्तैव ॥ शृङ्खलायमकम् ॥

प्रसार्य पादावधिरोप्य बालकं विधाय वक्रेऽङ्गुलिषङ्गमङ्गना ।
प्रवेशयामास वसां महीक्षितां प्रकल्प्य पाथः पिशिताशिनां शनैः ॥३८॥

प्रसार्येति ॥ पिशिताशिनां राक्षसानाम् अङ्गना पादौ प्रसार्य बालकम् अधिरोप्य वक्रे [बालकस्य] अङ्गुलिषङ्गं विधाय महीक्षितां राज्ञां वसां मांसास्थिगतस्नेहं पाथोजलं प्रकल्प्य प्रवेशयामास बालं पाययामास ॥

समुत्पतन्तो दिवि रेणवोऽणवो विलूनमूलाः क्षतजेन तेन ते ।
अधःप्रदीप्तज्वलनाः सितासिता रणस्य धूमा इव रेजिरेऽजिरे ॥ ३९ ॥

समुदिति ॥ तेन क्षतजेन रक्तेन विलूनमूला नष्टमूला अणवो रेणवो दिव्याकाशे समुत्पतन्तः सन्तः, अधःप्रदीप्तज्वलना धूमा इव, सितासिताः रणस्य अजिरे अङ्गणे रेजिरे ॥ उत्प्रेक्षालंकारः ॥

शवाः शिवानां मुखतीयवह्निना रथेषु देहस्थितबाणदारुणा ।
विदह्यमाना विधिमाययुर्भटाः स्त्रियश्च ता बाष्पजलाञ्जलिं ददुः ॥४०॥

शवा इति ॥ शवा मृता भटा योधा शिवानां फेरवीणां मुखतीयवह्निना मुखोद्भवानलेन । 'मुखपार्श्वतसोर्लोपश्च' इति छटिलोपाभ्यां सिद्धम् । कर्त्रा देहस्थितबाणदारुणा कायप्रविष्टशरेन्धनेन करणेन रथेषु विदह्यमानाः सन्तः विधिं संस्कारम् आययुः । स्त्रियः कामिन्यः बाष्पजलाञ्जलिमश्रुजलाञ्जलिं ददुः ॥ समुच्चयः ॥

मतङ्गजानामधिरोहका हता मतं गजानां विवशा विसस्मरुः ।
तदीयपङ्क्त्या चपलायमानया परे विभिन्नाश्च पलायमानया ॥ ४१ ॥

मतङ्गेति ॥ मतङ्गजानां करिणामधिरोहका आधोरणाः हतास्ताडिताः विवशाः सन्तः गजानां मतं शिक्षां विसस्मरुः विस्मृतवन्तः । च पुनश्चपलायमानया चञ्चलायमानया पलायमानया धावन्त्या तदीयपङ्क्त्या गजश्रेण्या परे शत्रवः विभिन्नाः ॥ समुच्चयः ॥

बभौ महल्लोहितसंभृतं सरः प्रपीयमानं तटवर्तिभिः खगैः।
यमेन रक्तं विनिगीर्य देहिनामजीर्णमुद्गीर्णमिवातिपानतः॥ ४२ ॥

बभौ इति॥ लोहितसंभृतं रुधिरपूर्णं महत् सरः तटवर्तिभिः कूलस्थैः खगैः पक्षिभिः प्रपीयमानं सत्, यमेन देहिनां रक्तं विनिगीर्य विशेषतः पीत्वा अतिपानतः उद्गीर्णमजीर्णमिव, बभौ॥ उत्प्रेक्षा॥

गता हयेभ्योऽप्यसवोऽतिवेगतो गजा मुमूर्छुः शरवर्षतोऽगजाः।
रथा विभिन्नाः पतिता मनोरथा नरा गतास्ते न समानरागता॥ ४३ ॥

गता इति॥ शरवर्षतो बाणवृष्ट्या, हयेभ्योऽश्वेभ्योऽतिवेगतः शीघ्रमेव असवः प्राणा गताः। तथा अगजा पर्वतजा गजा मुमूर्छुः। रथा विभिन्नाः। मनोरथाः पतिता भ्रष्टाः। ते योधा नरा गताः पलायिताः। समानरागता मानेन सहितो रागो येषां तद्भावः न गता॥ समुच्चयः॥

तथा द्विपेन्द्रास्तुरगाः पदातयो महान्वया भूपतयः क्षणेन तत्।
गतं समस्तं समवर्तिनो मुखं च्युतं न चोद्यं स्थितमेव विस्मितम्॥४४॥

तथेति॥ तत् पूर्वोक्तं समस्तं बलं क्षणेन समवर्तिनो यमस्य मुखं गतम् मृतम्। यत् च्युतं नष्टं तत् न चोद्यम् नाश्चर्यम्। यत् स्थितं जीवितं तदेव विस्मितं विस्मयः॥

तथाहि भोगाः स्तनयित्नुसंनिभा गजाननाधूननचञ्चलाः श्रियः।
निनादिनाडिंधमकण्ठनाडिवच्चलाचलं न स्थिरमायुरङ्गिनाम्॥ ४५ ॥

तथाहीति॥ भोगा मेघसंनिभाः, श्रियः करिवदनप्रकम्पचञ्चलाः, चलाचलं निनादिनाडिंधमकण्ठनाडिवत् नालिकया फूत्कारवेलायां किंचिन्नादसत्वेन फूत्कारिस्वर्णकारकण्ठनाडिवत् न स्थिरम्, अङ्गिनां देहिनाम् आयुः न स्थिरम्॥

अशेषमाकीर्णमुपैति शून्यतां क्षणाद्वियुङ्क्ते समवेतमुच्चकैः।
यदेव रक्तं भजते विरक्ततामहो नु भावाः क्षणिकाः स्वभावतः॥४६॥

अशेषमिति॥ आकीर्णं संचितम्।अशेषं सकलं क्षणात् शून्यतामुपैति, उच्चकैः अतिशयेन समवेतं संबद्धं क्षणात् वियुङ्क्ते वियोगं भजते। यदेव रक्तं सानुरागं तत्क्षणात् विरक्ततां वैराग्यं भजते। अहो नु भावाः पदार्थाः स्वभावतः क्षणिकाः सन्ति॥

ततः स्फुटं पञ्चकमीक्षमाणौ तौ सिंहपोताविव विक्रमेण।
निर्जग्मतुर्युद्धमुखान्नरेन्द्रौ क्रोधाभिमानाविव मूर्तिमन्तौ॥ ४७ ॥

तत इति॥ ततोऽनन्तरं तौ नरेन्द्रौ रामलक्ष्मणौ भीमार्जुनौ च पञ्चकं रणम् ईक्षमाणौ सन्तौ युद्धमुखात् रणभूमितः विक्रमेण सिंहपोतौ इव, मूर्तिमन्तौ क्रोधाभिमानौ इव, निर्जग्मतुः निर्गतवन्तौ॥ उत्प्रेक्षा॥ वृत्तमुपजातिः॥

भयाद्यदेवोद्गतमङ्गनानां देवासुराणां प्रधनोत्सुकानाम् ।
तदेव हर्षस्य तयोर्जयेन रोमाञ्चमस्याप्युपकारि जातम् ॥ ४८ ॥

भयादिति ॥ यदेव रोमाञ्चं प्रधनोत्सुकानां रणोत्कानां देवासुराणां सुरदैत्यानामङ्गनानां कामिनीनां भयाज्जातम्, तदेव रोमाञ्चं तयोर्नरेन्द्रयोर्जयेन अस्य हर्षस्याप्युपकारि जातम् ॥ उपजातिः ॥

आशा मुक्ता बन्धनेनेव सर्वा दीर्घं तत्रोदश्वसीदेव भूमिः ।
युद्धे वृत्ते विश्रमं विश्वमागान्नो विश्रान्तः कंदरे सिंहनादः ॥ ४९ ॥

आशा इति ॥ युद्धे वृत्ते समाप्ते सति सर्वा आशा दिशो बन्धनेन मुक्ता इव जाताः, भूमिः तत्र रणभूमौ दीर्घं यथा स्यात्तथा उदश्वसीदेव, विश्वं जगत् विश्रममागात् विश्रान्तम्, कंदरे सिंहनादस्तु न विश्रान्तः ॥ शालिनी वृत्तम् ॥

वियति सिद्धगणोऽप्युपवीणयञ्जलधरान्तरदर्शितविग्रहः ।
त्रिभुवनं भ्रमति स्म यशस्तयोः किमु मुहुर्मुमुहुर्न च वैरिणः ॥ ५० ॥

वियतीति ॥ जलधरान्तरदर्शितविग्रहः मेघमध्यप्रकटितशरीरः सिद्धगणोऽपि वियति आकाशे तयोर्नरेन्द्रयोर्यश उपवीणयन् वीणया गायन् सन् त्रिभुवनं भ्रमति स्म च पुनर्वैरिणः किमु मुहुर्न मुमुहुः । अपि तु मुमुहुरेव ॥ द्रुतविलम्बितं वृत्तम् ॥

प्रतिनिनदमयासीद्देवतूर्यैर्दिगन्तश्चलदलिकुलनीला पुष्पवृष्टिः पपात ।
स्तुतिमकृत सरस्वत्यम्बरेऽदृश्यरूपा कुसुमसुरभिरुच्चैरुद्ववौ मातरिश्वा ॥ ५१ ॥

प्रतिनिनेति ॥ दिगन्तः देवतूर्यैः सुरवाद्यैः प्रतिनिनदं प्रतिध्वानम् अयासीत्, चलदलिकुलनीला भ्रमद्भ्रमरभरश्यामा पुष्पवृष्टिः पपात, अम्बरे गगने अदृश्यरूपा सरस्वती स्तुतिमकृत, कुसुमसुरभिः पुष्पगन्धी मातरिश्वा पवन उच्चैर्ववौ ॥ मालिनी वृत्तम् ॥

लोकातिरिक्तमनयोर्बलशौर्यवीर्यमालोक्य रूपमभिमानधनंजयं च ।
मोक्तुं नचैकमुभयोरशकज्जयश्रीर्भ्रान्ता स्वयंवरविवाहपतिंवरेव ॥ ५२ ॥

इति श्रीधनंजयविरचिते धनंजयाङ्के द्विसंधानकाव्ये राघवपाण्डवीयापरनाम्नि खरदूषणवधगोग्रहनिवर्तनं नाम षष्ठः सर्गः समाप्तः ।

लोकेति ॥ जयश्रीरनयोर्नरेन्द्रयोर्लोकातिरिक्तमलौकिकं बलशौर्यवीर्यमेतत्समाहारम् रूपम् अभिमानधनं जयं चालोक्य भ्रान्ता सती, स्वयंवरविवाहपतिंवरा इव, उभयोर्नरेन्द्रयोरेकमपि मोक्तुं त्यक्तुं नाशकत् ॥ वसन्ततिलका वृत्तम् ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीच्छोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां खरदूषणवधगोग्रहनिवर्तनं नाम षष्ठः सर्गः ।

---

सप्तमः सर्गः ।

अत्रान्तरे शरच्छन्नदिग्दशास्यः सपुष्पकः ।
चन्द्रहासकरः कालो बाणासनपरिग्रहः ॥ १ ॥
दीप्त्यारविन्दिनं लोकं विश्वं कुर्वन्निवाकुलम् ।
दुःखलब्धात्मसंभूतिं स्वसारं मानयन्मुहुः ॥ २ ॥
पद्मस्योदर्कसंतापं भेदं कुवलयस्य च ।
सानाथ्यं बन्धुजीवानां कर्तुकामः समागमत् ॥३॥ (त्रिभिर्विशेषकम्)

अत्रेत्यादि ॥ अत्रान्तरे खरदूषणवधानन्तरम् । शरच्छन्नदिक् शरैश्छन्ना दिशो येन सः। सपुष्पकः पुष्पकेण विमानेन सहितः । चन्द्रहासकरः चन्द्रहासनामकखड्गयुक्तकरः । कालः कालवर्णः । बाणासनं धनुरेव परिग्रहो यस्य । स दशास्यो रावणः । दीप्त्या तेजसा रविं सूर्यम्, (तस्याकुलत्वेन) दिनं दिवसम् (दिवसस्य सूर्यकृतत्वात्), विश्वं समस्तं लोकं जगत्, (दिनादिव्याकुलत्वेन) आकुलं कुर्वन् इव । दुःखलब्धात्मसंभूतिं दुःखेन लब्ध आत्मसंभूतिः शम्बुकुमाराख्यपुत्रो यया तां स्वसारं भगिनीं मुहुः मानयन् सन् । पद्मस्य रामस्य उदर्कसंतापमुत्तरकालकदुःखं कुवलयस्य भूमण्डलस्य भेदं बन्धुजीवानां बान्धवानां सानाथ्यं साहाय्यं कर्तुकामः समागच्छत् ॥ भारतीयपक्षे—अत्रान्तरे गोग्रहनिवृत्त्युत्तरं छन्नदिग्दशास्यः छन्नानि दिशो दश आस्यानि (अर्थाद्दशदिशः) येन सः । सपुष्पकः पुष्पकैः सहितः । चन्द्रहासकरः चन्द्रस्य हासं द्युतिं करोति सः । बाणासनपरिग्रहः । बाणासनौ वृक्षा एव परिग्रहो यस्य सः । शरत् कालः शरदृतुः । दीप्त्या घर्मेण विश्वं लोकम् आकुलं अरविन्दिनं कमलिनं कुर्वन् इव । दुःखलब्धात्मसंभूतिं कष्टप्राप्तात्मोत्पत्तिं स्वसारं स्व एव सारो यस्मिन्कर्मणि यथा स्यात्तथा मुहुः मानयन् जानन् । पद्मस्य पयोजस्य उदर्कसंतापम् उद्गतसूर्यसंतापम् कुवलयस्य कुमुदस्य भेदं विकाशम्, बन्धुजीवानां माध्याह्निकपुष्पाणां सानाथ्यं सस्वामिकत्वं कर्तुकामः समागमत् समाजगाम ॥ श्लेषः । सर्गेऽस्मिन्ननुष्टुप्छन्दः ॥

तथा तं वीक्ष्य वियति व्यभ्रे चेलुः सुरासुराः ।
स्थित्यतिक्रमभीतेन शस्त्रमिन्द्रेण संहृतम् ॥ ४ ॥

तथेति ॥ अत्र शक्रादीनां रावणदर्शनेन भयम्, शरद्दर्शनेन सोत्सवत्वम्, दर्शयति स्थित्यतिक्रमभीतेन स्थानत्यागभीतेन अवस्थानोल्लङ्घनभीरुणा इन्द्रेण शक्रेण शस्त्रं धनुः संहृतम् । शरदि शक्रधनुषो हरणात् ॥ श्लेषः ॥

उत्पलायतलोलाक्षः कामुकीभिरुपारतः ।
किंनराणां गणः क्रीडन्प्रसन्नपवने वने ॥ ५ ॥

उत्पलेति ॥ लोलाक्षः चकितलोचनः कामुकीभिः भार्याभिः सह उपारत उपद्रुतः । प्रस-

न्नपवने प्रसन्नो गुणत्रयसमन्वितः पवनो वातो यत्र तत्र वने क्रीडन् किंनराणां गण उत्पलायत रावणभयेनोड्डीनः ॥ शरदं दृष्ट्वा उत्पलायतलोलाक्षः कमलदीर्घचञ्चललोचनः प्रसन्नपवने वने कामुकीभिः सह क्रीडन् नराणां गणः किम् उपारतः । अपि तु नोपारतः ॥ श्लेषः ॥

साधुन्यायेयमत्युच्चैर्गतोद्धतगतिः स्थितः ।
इच्छुः प्रसादमेतस्य लोकः प्रणतिमीयिवान् ॥ ६ ॥

साध्विति ॥ साधुन्याये सत्पुरुषैः सुरचिते मार्गे साधुमार्गे वा, स्थितः, अत्युच्चैर्गतोद्धतगतिः अत्युच्चैरतिशयेन गता उद्धता उत्कटा गतिर्वर्तनं यस्य सोऽयं लोकः [अस्य रावणस्य] प्रसादमिच्छुः सन्नेतस्य रावणस्य प्रणतिं प्रणाममीयिवान् कृतवान् ॥ शरत्पक्षे—या धुन्या नद्या अत्युच्चैरतिशयेन उद्धतगतिरासीत् सा इयं गता । तथा प्रसादं पुष्पफलादिसंपत्तिमिच्छुः सन् स्थितः लोक एतस्य शरदः प्रणतिमीयिवान् ॥ प्रथमे पक्षे भूम्यादिक्षोभः, द्वितीये शरत्स्वभावकथनम् ॥ श्लेषः ॥

वीचिबाहुभिरालिङ्गंश्चिरदृष्टामिवावनिम् ।
पारावारश्चचालोच्चैरपारः पूरयन्दिशः ॥ ७ ॥

वीचीति ॥ रामायणपक्षे रावणदर्शनेन समुद्रक्षोभः । शरत्कालस्वभावकथनं च ॥

सहसा वल्लकीहस्ता विचेलुः सिद्धकोटयः ।
दिवि ज्योतिर्गणज्योतिस्तीव्रं जज्ञेऽतिविद्युति ॥ ८ ॥

सहसेति ॥ दिवि गगने तीव्रमपि ज्योतिर्गणज्योतिः नक्षत्रसमूहतेजः अतिविद्युति तेजोहीनं जज्ञे ॥ शरत्पक्षे—सहसा हास्यसंयुक्ताः । अतिविद्युति अतिक्रान्तविद्युति दिवि नक्षत्रगणतेजस्तीव्रमुग्रं जज्ञे ॥ श्लेषः ॥

विमुक्तं दूरमभ्रान्तैर्विमानैः ककुबन्तरम् ।
नभश्चरसमारूढैः कृतकानकशिञ्जितैः ॥ ९ ॥

विमुक्तमिति ॥ अभ्रान्तैः निःसंदेहैर्भ्रमणरहितैर्वा, नभश्चरसमारूढैः नभश्चरा देवाः समारूढा येषु तैः, कृतकानकशिञ्जितैः कृतानि कानकानां स्वर्णभूषणानां शिञ्जितानि येषु तैः, विमानैः, ककुबन्तरम् दिगन्तरम्, दूरं यथा स्यात्तथा विमुक्तम् ॥ शरत्पक्षे—विमानैः विगतं मानं परिगणनं येषां तैरसंख्यैः, कृतं केन जलेन आनकस्येव शिञ्जितं यत्र तैः, रसं जलम् आरूढैः सजलैः, अभ्रान्तैः पयोधरस्वरूपैः ककुबन्तरं दिगन्तरं नभो वियच्च दूरं यथा स्यात्तथा विमुक्तम् ॥ श्लेषः ॥

छोत्कारच्छातजठरैस्तृणकौतुककंकणैः ।
बन्धूकतिलकन्यासैर्नीलोत्पलवतंसकैः ॥ १० ॥

महाकुचभराकृष्टसंक्षिप्तान्तर्भुजान्तरैः।
क्षिपद्भिः केकरान्स्वस्मिन्नियन्तुमसहैरिव ॥ ११ ॥
सिञ्चद्भिरिव लावण्यरसवृष्ट्या दिगन्तरम्।
कैदारिकगतैर्दारैश्चकितं विनिचायितम् ॥ १२ ॥ (त्रिभिर्विशेषकम्)

छोत्कारेति ॥ छोत्कारस्येव छातं तनूकृतं जठरमुदरं येषां तैः, तृणस्य कौतुकेन कंकणानि येषां तैः। बन्धूकानां तिलके न्यासो येषां तैः, नीलोत्पलस्य वतंसः कर्णपूरो येषां तैः, महतोः कुचयोर्भरेण पूर्वमाकृष्टं पश्चात्संक्षिप्तमन्तर्भुजान्तरं येषां तैः, केकरान् कटाक्षान् स्वस्मिन् नियन्तुं निरोद्धुमसहैरशक्तैरिति क्षिपद्भिः, लावण्यरसस्य शरीरकान्तिविशेषनिर्यासस्य वृष्ट्या वर्षणेन दिगन्तरं सिञ्चद्भिरिव, केदारसमूहगतैः दारैः कलत्रैः विनिचायितमवलोकितम् चकितं यथा स्यात्तथा ॥ रावणप्रतापशरत्कालयोः स्वभावकथनम् ॥

बिशक्षीरचितां चञ्चुं व्याददद्भिः कथंचन।
सरःसु पक्षतिक्षेपैरटितं वाटराटकैः ॥ १३ ॥

बिशेति ॥ बिशस्य पद्मिनीकन्दस्य क्षीरेण दुग्धेन चितां व्याप्तां चञ्चूं व्याददद्भिरुद्धाटयद्भिः वाटराटकैः हंससमूहैः कर्तृभिः पक्षतिक्षेपैः पक्षमूलविधूननैः करणैः सरःसु तडागेषु कथंचन महता कष्टेन अटितं गतम् ॥ शरत्पक्षे रटितं शब्दितम् ॥ वर्षासु हि हंसा मानसे गच्छन्ति शरदि च प्रत्यागच्छन्ति ॥

कंजकिंजल्कगन्धान्धैः केकारवविषादिभिः।
नष्टं प्रापनिकैः क्वापि दुष्कलत्रकुलैरिव ॥ १४ ॥

कंजेति ॥ कंजकिंजल्कस्य पद्ममकरन्दस्य गन्धेन परिमलेन अन्धैः, केकारवे विषादो येषां तैः। न कर्मधारयादिति तु प्रायिकम्। प्रापनिकैर्मयूरैः दुष्टं कलत्रं येषु तैः कुलैरिव क्वापि नष्टम् चक्षुर्गोचरतातो भ्रष्टम् ॥ रावणभयेन दृष्टिपथे नायातम् ॥ शरत्पक्षे वर्षासु हि केकायन्ते न प्रान्ते इति केकाभावादलक्षितत्तां गतम् ॥

दन्तान्तरसमासक्तपुष्करा दिक्षु दन्तिनः।
घनबन्धननिर्मुक्ता जगर्जुर्दुर्जना इव ॥ १५ ॥

दन्तेति ॥ दन्तयोरन्तरे मध्ये समासक्तं पुष्करं शुण्डाग्रं यैस्ते घनबन्धनेन निविडबन्धनेन निर्मुक्ता दन्तिनो गजा दुर्जना इव दिक्षु जगर्जू रावणभयेन ॥ शरत्पक्षे—पुष्करमम्भोरुहम्। घनो मेघः ॥

निशम्याक्रान्तजगतः पाटवं तस्य दुःसहम्।
आसीदास्वनितस्यापि क्षोभोऽरण्ये तपस्यताम् ॥ १६ ॥

निशम्येति ॥ आक्रान्तं जगद्येन तस्य रावणस्य शरदश्च दुःखेन सोढुमर्हं पाटवं नि-

शम्य आकर्ण्य अरण्ये वने तपः कुर्वतां मुनीनाम् अपि आस्वनितस्य मनसः क्षोभश्चालनमासीत् ॥

विश्वेन वारिणा तस्मिन्द्योतमाने महीयसि ।
कलुषत्वं परित्यक्तं स्वच्छत्वमुपपादितम् ॥ १७ ॥

विश्वेनेति ॥ महीयसि गरिष्ठे तस्मिन् रावणे द्योतमाने प्रतपति सति विश्वेन सर्वेण अरिणा शत्रुणा कालुष्यं परित्यक्तं स्वच्छत्वं प्रसन्नता उपपादितम् ॥ शरत्पक्षे—तस्मिञ्शरदि वारिणा जलेन । स्वच्छत्वं निर्मलत्वम् ॥ श्लेषः ॥

वप्राणां रम्यतालक्ष्मीः सोत्पलाशालिसंपदाम् ।
तेन पक्वफलापाण्डुरानिन्ये लङ्घनक्रियाम् ॥ १८ ॥

वप्राणामिति ॥ तेन रावणेन सोत्पलाशालिसंपदाम् सोच्चब्रह्मवृक्षभ्रमरविभूतीनामुच्चपलाशवृक्षश्रेणिरूपसंपदा सहितानां वा वप्राणां मृच्चयानां पक्वैः फलैरापाण्डू रमणीयत्वशोभा लङ्घनक्रियामास्कन्दनक्रियामानिन्ये ॥ शरत्पक्षे—तेन शरत्कालेन शालिसंपदां शालय एव संपद्येषां तेषां वप्राणां केदाराणां सोत्पला उत्पलैः कमलैः सहिता पक्वफला पक्वानि फलानि यस्यां सा पाण्डुः ॥ श्लेषः ॥

किंशुकाकुलभूमीनां नगानां फलसंपदः ।
नामिताः परिपक्वाणां कृता रभसयामुना ॥ १९ ॥

किंशुकेति ॥ अमुना रावणेन रभसया औत्सुक्येन विमानवेगेन किंशुकाकुलभूमीनां किंशुकैः पलाशकुसुमैराकुला भूमिर्येषां तेषां परिपक्वाणां पाकपर्यायप्राप्तानां नगानां वृक्षाणां फलसंपदः नामिता नम्राः कृताः ॥ शरत्पक्षे—अमुना शरत्कालेन शुकाकुलभूमीनां शुकैः कीरैराकुला भूमिर्येषां तेषां परिपक्वाणां नगानां शालिवृक्षाणाम् आमिताः प्रचुराः फलसंपदो न कृताः किम् । अपि तु कृता एव ॥ श्लेषः ॥

तस्मिन्कालेऽनुजोपायात्प्रस्थितं प्रतिकेशवम् ।
विश्वविश्वंभरानाथमित्थमूचेऽग्रजं वचः ॥ २० ॥

तस्मिन्निति ॥ तस्मिन्काले अनुजा शूर्पणखा विश्वविश्वंभरानाथम् अग्रजं रावणम् उपायात् समागता इत्थं प्रस्थितं वनप्राप्तं केशवं प्रति लक्षीकृत्य वच ऊचे ॥ प्रतिकेशवं केशवाभिमुख्येन प्रस्थितमग्रजम् । इत्थं वक्ष्यमाणप्रकारेण उपायात् सामादिप्रयोगात् वच ऊचे इति वान्वयः ॥ भारतपक्षे—तस्मिञ्शरत्काले अनुजो भीमः प्रतिकेशवं प्रस्थितमग्रजं युधिष्ठिरम् अपायात् द्यूतेन सकलपृथ्वीहरणात् ॥ श्लेषः ॥

प्रतिकर्तुं परीभावं जरासंधाभियोगजम् ।
उद्यमोजातशत्रोस्ते समावहति मे रुचिम् ॥ २१ ॥

प्रतिकर्तुमिति ॥ जातशत्रोर्जातः शत्रुर्यस्य तस्य ते तव रावणस्य उद्यम उद्योगो

मे मम रुचिं जरायाः संधा यत्र तस्मादभियोगादाक्षेपाज्जातम् परीभावमवज्ञां प्रतिकर्तुं प्रतीकारं कर्तुं समावहति समादधाति ॥ भारतीयपक्षे—अजातशत्रोर्युधिष्ठिरस्य ते तव । जरासंधस्याभियोगात्पक्षपातिनो दुर्योधनाज्जातम् 'जरासंधगृह्यो दुर्योधनः' इति प्रसिद्धेः ॥

दुःखमोचनमिष्टस्य क्रियते हेतिधारिणा ।
वीरेण भीरुणा शूर शाखोद्धारेण बाहुना ॥ २२ ॥

दुःखेति ॥ हे शूर, इष्टस्य प्रियस्य दुःखस्य मोचनं वीरेण शूरेण कर्त्रा, हेतिं शस्त्रं धरतीत्येवंविशिष्टेन । भीरुणा कातरेण कर्त्रा, शाखोद्धारेण पूत्करणार्थं शाखाया उद्धारो येन तेन । बाहुना क्रियते विधीयते ॥

शरधाराभिवर्षेण वैरिविप्लवकारिणा ।
विधुरं ह्रियते बन्धो बाष्पाम्भोदुर्दिनेन वा ॥ २३ ॥

शरेति ॥ हे बन्धो वैरिणां विप्लवं करोतीत्येवंविधेन शरधाराभिवर्षेण बाणालिवृष्ट्या विधुरं भयं ह्रियते ॥ अथवा बाष्पाम्भो दुर्दिनेन अश्रुजलच्छादितदिवसेन विधुरं भयं अतिवियोगश्च ह्रियते ॥

राजसंदर्शने व्याधौ चिन्तायां रिपुपीडने ।
प्रतिक्रियासु सर्वासु निर्बन्धाद्बान्धवं विदुः ॥ २४ ॥

राजेति ॥ अत्र सर्वत्र निर्बन्धादङ्गीकाराद् बान्धवं (बुधाः) विदुः ॥ एतेन बान्धवशब्दस्य प्रवृत्तिनिमित्तं दर्शितम् ॥

स्थाने मातुलपुत्रस्य परिपात्यै तवोद्यमः ।
आपदीषल्लभाः कर्तुमुपकारा हि मानिनाम् ॥ २५ ॥

स्थाने इति ॥ [हे बन्धो,] मातुलपुत्रस्य खरदूषणस्य श्रीकृष्णस्य वा परिपात्यै परिपालनाय यत् तव उद्यमः स्यात् तत् स्थाने युक्तम् ॥ हि यतो मानिनाम् आपदि विपदि कर्तुम् उपकारा ईषल्लभा दुर्लभा भवन्ति ॥ अर्थान्तरन्यासः ॥

अस्ति नानाप्रकारोऽसौ कामं दुर्योधनो रिपुः ।
तत्तवैष बलं पक्षो ज्योत्स्नाभोगो विधोरिव ॥ २६ ॥

अस्तीति ॥ असौ रिपुः काममत्यर्थं नानाप्रकारो बहुविधोपायः, अत एव दुर्योधनो दुःखेन योद्धुं शक्यः अस्ति । तत् तस्मात् एष खरदूषणः तव ज्योत्स्नाया आभोगो यस्मिन्स विधोश्चन्द्रस्येव बलमस्ति ॥ भारतीयपक्षे—असौ दुर्योधनस्तन्नामा । एष विष्णुः ॥ श्लेषः ॥

प्रभाविशारदं वीर्यं तवोद्योगाय दीप्यते ।
निर्वाणाय परं तत्त्वमाध्यात्मिकमिवाखिलम् ॥ २७ ॥

प्रभावीति ॥ प्रभाविशारदं प्रभया विशारदं प्रवीणम् । तव रावणस्य वीर्यम् उद्योगाय । अखिलं समस्तम् परमाध्यात्मिकं तत्त्वं निर्वाणाय मोक्षाय इव । दीप्यते ॥ भारतीयपक्षे—प्रभावि प्रभावत्त् प्रभामवतीति दीप्तिरक्षकं वा शारदं शरदि भवं शारदम् ॥ श्लेषोपमा ॥

देवावदातवितता दिशः सह विहायसा ।
सूचयन्ति विना विघ्नात्सिद्धिं हस्तगतामिव ॥ २८ ॥

देवेति ॥ हे देव, अवदातवितता नैर्मल्यं प्राप्ता विहायसा आकाशेन सह सहिता दिशो विघ्नात् अन्तरायात् विना सिद्धिं [हस्तगताम् इव] सूचयन्ति ॥ उत्प्रेक्षा ॥

मृदुराश्वासजननः खरदण्डविघट्टनः ।
कृतकृत्योऽधिकारीव तवार्यान्वीषिकोऽनिलः ॥ २९ ॥

मृदुरिति ॥ हे आर्य, अनिलो वायुः, मृदुर्मन्दो मधुरवाक् च, आश्वासजननः शीतलः प्राणिनामाप्यायनोत्पादकश्च, खरदण्डविघट्टनः कमलस्पर्शित्वेन सुरभिः तीक्ष्णदण्डनाशकश्च, कृतकृत्यः कृतपुण्यः, अधिकारी प्राड्विवाक इव, तव, आन्वीषिकोऽनुकूलो वर्त्तमानोऽस्ति ॥ श्लेषः ॥

भूरिस्तम्बेरमेकान्ते फलशालिवने घने ।
राजन्कपिशताकीर्णे पश्य त्वं कामनीयकम् ॥ ३० ॥

भूरिस्तेति ॥ हे राजन् रावण, भूरिस्तम्बेरमे प्रचुरगजे, कान्ते मनोहरे, घने निबिडे, कपिशताकीर्णे वानरशतसंकुले फलशालिवने फलशालिनि वने कामनीयकं कमनीयतां पश्य अवलोकय ॥ भारतीयपक्षे—भूरिस्तम्बे प्रचुरझाटकसमूहे फलशालिवने फलोपलक्षितशालिवने कपिशताकीर्णे पिङ्गताव्याप्ते एकान्ते निर्जने अरमत्यर्थम् ॥ श्लेषः ॥

शत्रूणां दण्डकक्षेत्रमप्रवि(वे)श्यमिदं घनम् ।
अभीष्टस्तम्बकरिभिरवगाढं विलोकय ॥ ३१ ॥

शत्रूणामिति ॥ शत्रूणाम् अप्रवि(वे)श्यं प्रवेष्टुमशक्यम् घनं निबिडम् अभीष्टस्तम्बकरिभिः वाञ्छिततृणादिगुच्छैर्मतङ्गजैरवगाढं विलोडितम् इदं दण्डकक्षेत्रं विलोकय ॥ भारतीयपक्षे—हे शत्रूणां दण्डक, अभीष्टस्तम्बकरिभिरभिलषितधान्यैरवगाढं व्याप्तं घनं (जनैः) अप्रवि(वे)श्यमिदं क्षेत्रं विलोकय ॥ श्लेषः ॥

असिन्नद्रावितस्थाने गहने पुण्डरीकिणि ।
प्रफुल्लानोकहच्छन्ने-नातिराजति वासरः ॥ ३२ ॥

अस्मिन्निति ॥ अस्मिन् अद्रौ पुण्डरीकिणि व्याघ्रवति प्रफुल्लानोकहच्छन्ने प्रकृष्टकुसुमिततरुभिश्छन्ने गहने इतोऽस्मिन् स्थाने (विसर्गलोपः) वासरो दिवसो न अतिराजते प्र-

काशते ॥ भारतीयपक्षे—अद्रावितस्थाने अनुपद्रुतप्रदेशे पुण्डरीकिणि कमलयुते सरः सरोवरं वा काकौ ॥ श्लेषः ॥

नातिक्रामन्ति सरितो गतिस्खलितदूषिताः ।
अस्मिन्नेकानुकूलत्वं यान्ति गेहेऽङ्गना इव ॥ ३३ ॥

नातीति ॥ गतौ स्खलितं स्खलनं दूषितं यासां ताः सरितोऽस्मिन् स्थानेऽद्रौ सरसि च (अङ्गना गेहे इव) नातिक्रामन्ति न लङ्घन्ते किंतु एकानुकूलत्वं यान्ति ॥ उपमा ॥

पयोधरभराक्रान्तनितम्बालसविक्रमाः ।
तन्वीः स्पर्शसुखोत्सङ्गा नानाकुसुमवासिताः ॥ ३४ ॥
सानुवृत्तोरुसंभोगा गम्भीरावर्तनाभिकाः ।
रम्याधरोदरीभूताः प्रारोहचिकुरश्रियः ॥ ३५ ॥
युक्ताः कुशलताभोगैरुत्कटाक्षाः शुभाननाः ।
कान्ता बिभर्ति देशोऽयमस्मिन्नुच्चैस्तलोदरीः ॥३६॥(त्रिभिर्विशेषकम्)

पयोधरेति ॥ उच्चैस्तल उच्चभूमिकोऽयं देशः अस्मिन्नद्रौ, पयोधरभराक्रान्तनितम्बालसविक्रमाः पयोधराणां मेघानां भरेण आक्रान्तैर्नितम्बैः सानुभिरलसानां मन्दगतीनां वीनां क्रमः पादविक्षेपो यत्र ताः, तन्वीः मृद्वीः, स्पर्शसुखोत्सङ्गाः स्पर्शेन सुखकृदुत्सङ्गो यत्र ताः, नानाकुसुमवासिताः विविधपुष्पसुरभीकृताः, सानुवृत्तोरुसंभोगाः सानुषु वृत्तो वर्तुल उरुर्गरिष्ठः संभोगो विस्तारो यासां ताः, गम्भीरावर्तनाभिकाः गम्भीरोऽतलस्पर्शः आवर्तः पयोभ्रमो यत्र तादृक् नाभिर्मध्यदेशो यासां ताः, रम्या मनोहराः, धरोदरीभूता धरायाः पृथ्व्या उदरीभूताः, प्रारोहचिकुरश्रियः प्रारोहैर्वृक्षनेत्रैरेव चिकुरैः केशैः श्रीः शोभा यासां ताः, कुशलताभोगैर्दर्भवल्लीसमूहैर्युक्ताः, उत्कटाक्षा प्रचण्डविभीतकाः शुभानना रम्यद्वारप्रदेशाः, कान्ताः कमनीया, जलनिकटाश्च, दरीर्बिभर्ति ॥ भारतीयपक्षे—अयं देशोऽस्मिन् सरसि, पयोधरभराक्रान्तनितम्बालसविक्रमाः स्तनभाराक्रान्तकटिप्रदेशमन्दचरणाः तन्वीः कृशलोमनखादिकाः, सानुवृत्तोरुसंभोगाः सानुपूर्व्यजङ्घाविस्ताराः, गम्भीरावर्तनाभिका निम्नवर्तुलनाभिप्रदेशाः, रम्याधरोदरीभूताः मनोहरौष्ठोदरीभूताः, प्रारोहचिकुरश्रियः प्रारोहाणामिव चिकुरश्रीः केशशोभा यासां ताः, कुशलताभोगैश्चातुर्यप्राचुर्यैर्युक्ताः, उत्कटाक्षाः उद्गतापाङ्गाः, शुभानना मनोहरवदनाः, उच्चैस्तलोदरीः उच्चैरतीव तलं क्षाम उदरं यासां ताः कान्ताः कामिनीः बिभर्ति ॥ श्लेषः ॥

विक्षिप्तपुष्पशयनाः सुरतापातसंभ्रमात् ।
कुसुमैपुञ्चिताः कामसङ्ग्रामरचना इव ॥ ३७ ॥
अलीककलहाकृष्टसूत्रशेषीकृतस्रजः ।
अन्योन्यवन्धनानीतविशसूत्रयुता इव ॥ ३८ ॥

सलाक्षिकपदन्यासाः कुङ्कुमै रञ्जिता इव ।
एताश्चोपवने दिव्यस्त्रीणां क्रीडाः सुरान्विताः॥३९॥(त्रिभिः कुलकम्)

विक्षिप्तेति ॥ [हे देव] उपवने उद्यानवने एताः सुरतापातसंभ्रमात् संभोगप्रथमारम्भव्याकुलत्वात्, विक्षिप्तपुष्पशयनाः विकीर्णकुसुमतल्पाः, कामसङ्ग्रामरचना स्मरसमरसंनिवेशा इव कुसुमेषुचिताः सुमबाणव्याप्ताः, अन्योन्यबन्धनानीतबिशसूत्रयुताः परस्परयन्त्रणार्थे प्रापितेन पद्मिनीकन्दतन्तुना युता इव अलीककलहाकृष्टसूत्रशेषीकृतस्रजः प्रेमकलहेन पूर्वमाकृष्टाः पश्चात् सूत्रशेषीकृता स्रजः कुसुममाला यासु ताः, कुङ्कुमै रञ्जिता इव, सलाक्षिकपदन्यासाः लाक्षया रक्तयोः पदयोर्न्यासेन सहिताः, सुरान्विताः सुरैर्देवैरन्विता दिव्यस्त्रीणां सुरसुन्दरीणां क्रीडाः केलिभूमयः सन्ति ॥ भारतीयपक्षे—दिव्य इति संबोधनम् । सुरान्विता मदिरायुता प्रशस्तद्रव्ययुक्ता वा ॥ श्लेषः ॥

स्मरार्ता वारुणीभूतपरिप्लवविलोचनाः ।
सिञ्चन्त इव सुधया गायन्तः काकलीकलम् ॥ ४० ॥
चलत्परिमलासक्तलीलालोलालिसंवृताः ।
तमालबहुलारण्यमभिविष्टा इव स्फुटम् ॥ ४१ ॥
इह किंपुरुषाः पश्य पुष्पाणामुच्चिकीषया ।
उद्यानेन परिश्रान्ताः संक्रीडन्ते प्रियासखाः॥४२॥(त्रिभिः कुलकम्)

स्मरार्ता इति ॥ इह अद्रौ स्मरार्ताः कंदर्पकदर्थिताः, वारुणीभूतपरिप्लवविलोचनाः वारुण्या भूतः समुत्पन्नः परिप्लवो आकुलता ययोस्ते विलोचने नेत्रे येषां ते, सुधया अमृतेन सिञ्चन्त इव काकलीकलं मधुरस्वरमनोहरं यथा स्यात्तथा गायन्तः, चलत्परिमलासक्तलीलालोलालिसंवृताः चलद्भिः परिमलेष्वासक्तैर्लीलालोलैरलिभिर्भ्रमरैः संवृताः, स्फुटं निश्चयेन, तमालबहुलारण्यम् अभिविष्टाः प्रविष्टा इव, उद्यानेन ऊर्ध्वगमनेन परिश्रान्ताः किंपुरुषाः प्रियासखा भार्यासहायाः सन्तः पुष्पाणाम् उच्चिकीषया उच्चेतुमिच्छया संक्रीडन्ते [इति] त्वं पश्य ॥ भारतीयपक्षे—इह उद्याने पुरुषाः किं न संक्रीडन्ते अपि तु संक्रीडन्त एव ॥ अरुणीभूतपरिप्लवविलोचनाः अरुणीभूते परिप्लवे चञ्चले विलोचने येषां ते ॥ श्लेषः ॥

देवाङ्गनापदन्यासगुञ्जद्वलयशिञ्जनाः ।
एते लतागृहा भान्ति कामकारालया इव ॥ ४३ ॥

देवेति ॥ देवाङ्गनापदन्यासगुञ्जद्वलयशिञ्जनाः देवाङ्गनानां सुरसुन्दरीणां पदन्यासेन गुञ्जतां वलयानां शिञ्जनं यत्र ते एते लतागृहा कामकारालया कंदर्पकारागृहा इव भान्ति ॥ भारतीयपक्षे—देव इति संबोधनम् ॥ श्लेषः ॥

उद्द्योतितदिशः पक्का लोकस्याजीवहेतवः ।
दिव्यौषध्यो विभान्त्येताः परार्थाः सत्क्रिया इव ॥ ४४ ॥

उद्द्योतितेति ॥ उद्द्योतितदिशः प्रकाशिताशाः, पक्काः प्राप्तपाकाः, लोकस्य आजीवहेतवः जीवनहेतवः जीवपर्यन्तकारणानि वा एता दिव्यौषध्यः परार्थाः सत्क्रियाः सत्पुरुषाचरणानि इव विभान्ति ॥ भारतीयपक्षे—दिव्य इति संबोधनम् ॥

भूर्जायते प्रदेशेऽस्मिन्सालतालीसमाकुले ।
अभिख्यातियुता नित्यं शष्पच्छायोदकान्विता ॥ ४५ ॥

भूर्जेति ॥ भूर्जायते भूर्जैरायते सालतालीसमाकुले सालैर्वृक्षैः तालीवृक्षैश्च समाकुले व्याप्ते अस्मिन्प्रदेशे नित्यमुदकान्विता सजला युता मिश्रिता निबिडा शष्पच्छाया शष्पैर्बालतृणैरुपलक्षिता छाया अभिख्याति शोभतेतराम् ॥ भारतीयपक्षे—लतालीसमाकुले वल्लीश्रेणिसंकीर्णेऽस्मिन्प्रदेशे अभिख्यातियुता शोभायुक्ता शष्पच्छायोदकान्विता शष्पैः छायया उदकेनान्विता सती सा भूर्भूमिर्जायते ॥ श्लेषः ॥

वैशाखोन्मन्थनोत्कम्पाद्गलन्मूर्धप्रसूनकाः ।
सुग्लानिजघनाभोगा न्यग्रोधपरिमण्डलाः ॥ ४६ ॥
उद्धृतापाण्डुरश्यामविटपायतबाहवः ।
संक्षिप्तबन्धुरस्कन्धाः प्रवालबहुलश्रियः ॥ ४७ ॥
श्रीमत्तरलतोपेताः सरलाः संगता इतः ।
प्रियवल्लवलीलाल्या व्रजकान्ताश्चकासति ॥ ४८ ॥ (त्रिभिः कुलकम्)

वैशाखेति ॥ हे प्रियवन्, लवलीलाल्या लवलीनां चन्दनलतानामिलानां महीनाम् आल्या श्रेण्या व्रज । यतो वै निश्चयेन इतोऽस्मिन्प्रदेशे शाखोन्मन्थनोत्कम्पात् शाखाविलोडनोर्ध्वकम्पात् गलन्मूर्धप्रसूनकाः पतच्छिखरपुष्पाः, सुग्ला म्लानाः, निजघनाभोगाः स्वनितम्बविस्तराः, न्यग्रोधपरिमण्डलाः वटतुल्यवृभ्राः, उद्धृतापाण्डुरश्यामविटपायतबाहवः उद्धृता उद्दण्डा आपाण्डुरश्यामा ईषच्छुक्लश्यामला विटपाः क्षुद्रशाखा एव आयता दीर्घा बाहवो हस्ता येषां ते, संक्षिप्तबन्धुरस्कन्धाः ह्रस्वमनोहरशाखाजन्मस्थानाः, प्रवालबहुलश्रियः प्रवालानां कोमलपत्राणां बहुला श्रीः शोभा येषां ते, श्रीमत्तरलतोपेताः श्रिया शोभया मत्तानां क्षीवाणां रलानां भ्रमराणां तोपेन समूहेन च इता युताः । श्रीमत्तर इति संबोधनं वा । संगताः परस्परं मिलिता घनाः, कान्ता मनोज्ञाः सरला देवदारवः चकासति भासन्ते ॥ भारतीयपक्षे—वैशाखोन्मन्थनोत्कम्पात् वैशाखेन मन्थनदण्डेन उन्मन्थनाद्विलोडनात् य उत्कम्प ऊर्ध्वकम्पनम् तस्मात्, गलन्मूर्धप्रसूनकाः । च्यवन्मस्तककुसुमाः, सुग्लानिजघनाभोगाः सुग्लानिमज्जघनाभोगाः अतिक्लेशप्राप्तक-

टिमध्यप्रदेशाः, न्यग्रोधपरिमण्डलाः तिर्यग्रोधकटिप्रदेशाः, उद्धृतापाण्डुरश्यामविटपायतबाहवः उद्धृतापाण्डुरश्यामविटपा इव आयता बाहवो यासां ताः, संक्षिप्तबन्धुरस्कन्धाः व्यापारितमनोज्ञांसाः, प्रवालबहुलश्रियः प्रकृष्टकेशप्रचुरश्रियः, श्रीमत्तरलतोपेताः शोभाचञ्चलताभ्यामुपेताः, सरला ऋजवः, संगता मिलिताः, व्रजकान्ता गोपवधूव्यः इतोऽस्मिन्प्रदेशे, प्रियवल्लवलीलाल्या प्रियगोपकटाक्षमालया (यमकश्लेषबन्धेषु सबिन्दुकाबिन्दुकयोरभेदात् गुणानामभेदकत्वाद्वा न दोषः) संगता मिलिताश्चकासति ॥ श्लेषः ॥

पद्मरागप्रभाजालं शिखिनः शङ्कयामुतः ।
विलोक्य वनराजीषु विद्रवन्ति प्रभोगजाः ॥ ४९ ॥

पद्मेति ॥ हे प्रभो, गजा हस्तिनः, अमुतः स्थानात् पद्मरागप्रभाजालं शोणमणिदीधितिसमूहं विलोक्य, शिखिनो वह्नेः, शङ्कया वनराजीषु कान्तारश्रेणिषु, विद्रवन्ति पलायन्ते ॥ भारतीयपक्षे—अगजाः शिखिनो मयूराः, वनराजीषु जलराशिषु पद्मरागप्रभाजालं किंजल्ककान्तिश्रेणिं विलोक्य अमुतोऽस्मिन्देशे कया प्रियया शं सुखेन विद्रवन्ति ॥ श्लेषः ॥

शस्यकं हरितग्रासबुद्ध्या वातमजा मृगाः ।
ढौकन्ते चापयन्त्यस्मिंश्चलानां हीदृशी गतिः ॥ ५० ॥

शस्यकमिति ॥ शसकं नीलमणिं, वातमजाः शीघ्रगामिनः, भ्रान्त्यर्थान्तरन्यासौ ॥

एषा पक्कफलाशालिसंपदम्भोजशालिनी ।
बहुशोभास्थलीलातिमोहनीयातिरम्यताम् ॥ ५१ ॥

एषेति ॥ पक्कफलाशालिसंपत् पक्कफलेच्छुभ्रमरसमूहा, अम्भोजशालिनी पद्मशोभिनी, बहुशोभा प्रचुरदीप्तिः, मोहनीया मोहजननी, एषा स्थली अतिरम्यतां लाति ॥ भारतीये—पक्कफलाशा पक्कफलास्वादिनी, भास्थलीलातिमोहिनी भार्या तिष्ठन्त्या लीलया मोहोत्पादिका, अम्भोजशालिनी एषा अलिसंपत् रम्यतां याति ॥ श्लेषः ॥

अपि चामीकरिकुलैः सुतरामाकुलैर्युताः ।
सिंहकेसरसंछन्ना बहुधान्यातिदुर्गमाः ॥ ५२ ॥
रम्यभावोदयादिक्षुद्राक्षापूगैरलंकृताः ।
ग्रथिता नागवल्लीभिः स्फुरन्तीभिरितस्ततः ॥ ५३ ॥
सेव्याग्रामानरहिताः सानुभोगा द्रुमाकुलाः ।
अस्मिन्नष्टापदोपेतसंचारा दधति श्रियम् ॥५४॥ (त्रिभिः कुलकम्)

अपीति ॥ अपि च आकुलैर्व्यग्रैः, करिकुलैर्गजवृन्दैः सुतरामतिशयेन युताः, सिंहकेसरसंछन्नाः कण्ठीरवकण्ठकेशप्रच्छादिताः, बहुधान्यातिदुर्गमाः बहुधा अन्यैः श्वापदैर-

तिदुर्गमाः, रम्यभावोदयाः, दिक्षु द्राक्षापूगैर्द्राक्षावृक्षैः पूगवृक्षैश्चालंकृताः, इतस्ततः स्फुरन्तीभिर्विजृम्भमाणाभिः नागवल्लीभिः सर्पश्रेणिभिः ग्रथिता गुम्फिताः, सेव्याग्रा आश्रयणीयशिखराः, मानरहिता इयत्तापरित्यक्ताः, द्रुमाकुला वृक्षव्याप्ताः, अष्टापदोपेतसंचाराः शार्दूलाश्रितमार्गाः अमी दृष्टिपथमागताः, सानुभोगाः पर्वतनितम्बविस्तराः अस्मिन्दण्डकारण्ये श्रियं दधति ॥ भारतीयपक्षे—चामीकरिकुलैः सुवर्णाढ्यपुरुषसंतानैः, सुतरामाकुलैः पुत्राणां भार्याणां च समूहैः, युताः, सिंहकेसरसंछन्नाः सिंहकेसरैर्वृक्षविशेषैः प्रच्छन्नाः, बहुधान्यातिदुर्गमाः प्रचुरसस्यातिदुःखप्रवेशाः, रम्यभावोदयात् रमणीयतोदयात् इक्षुद्राक्षापूगैः इक्षूणां द्राक्षाणां पूगैः समूहैः, नागवल्लीभिस्ताम्बूललताभिः, सेव्याः सेवनीयाः, नरहिता नरेभ्यो हिताः, सानुभोगा विस्तीर्णाः, अष्टापदोपेतसंचाराः सुवर्णान्वितनिर्गमप्रवेशाः, ग्रामाः ॥ श्लेषः ॥

बहुधातुगणाकीर्णान्सुमहावागुणादिमान् ।
शब्दागम इवोद्देशान्देवलोको न मुञ्चति ॥ ९५ ॥

बह्विति ॥ वागुणात् उरीश्वरः, आ ब्रह्मा, अः नारायणः, तेषां गुणात्प्रभावात् गुणाच्छौर्यादिगुणाद्वा सुमहाः शोभनोत्सवः देवलोकः सुरसमूहः बहुधातुगणाकीर्णान् प्रचुरगैरिकादिसमूहसंकुलान्, इमान् उद्देशान् उच्चप्रदेशान् । सुमहावाग् शोभना साध्वी महती पूज्या वाग् वाणी यस्मात् सः, उणादिमान् उणादिप्रकरणवान्, शब्दागमः व्याकरणशास्त्रम्, बहुधातुगणाकीर्णान् बहुभिर्धातुभिर्भ्वादिभिः, गणैः सर्वादिप्रभृतिगणैराकीर्णान् उद्देशान् प्रकरणान् इव । न मुञ्चति ॥ भारतीये—हे देव, सुमहावा शोभनैर्महैरुत्सवैरावाति सः गुणादिमान् शौण्डौदार्यादिगुणवान्, लोकः अष्टादशप्रकृतिजो जनः, बहुधातुगणाकीर्णान् प्रभूतसुवर्णादिसमन्वितान्, उद्देशान् उत्कृष्टान् धनजनकनकसस्यसमृद्धान् देशान् ॥ श्लेषः ॥

मन्दरागः स्वयं साक्षान्मन्त्रकृद्भिरधिष्ठितः ।
पुण्याश्रमो विभात्येष सानुमाननया श्रिया ॥ ९६ ॥

मन्देति ॥ मन्त्रकृद्भिर्विद्याधरैः साक्षात्परमार्थवृत्त्या, स्वयं स्वरूपेण, मन्दरागो मन्दराचलो मेरुः, अधिष्ठितः पुण्याश्रमः पुण्यजनकाश्रमः, एष सानुमान्पर्वतः अनया श्रिया विभाति ॥ भारतीये—मन्दरागः मन्दो रागो यत्र । मन्त्रकृद्भिर्योगिभिः । सानुमान् लक्ष्मीप्रदानसमर्थः । पुण्याश्रमः पुण्यानां यतीनामाश्रमः ॥ श्लेषः ॥

एष चापगुणोन्मुक्तविकसद्बाणसंहतिः ।
प्रदेशेऽस्मिन्नभीरामः प्रकाममवलोक्यताम् ॥ ९७ ॥

एषेति ॥ चापगुणोन्मुक्तविकसद्बाणसंहतिः चापस्य धनुषो गुणाज्ज्याया उन्मुक्ता विकसन्ती बाणानां शराणां संहतिर्येन सः, अभीर्निर्भयः, रामः दशरथात्मजः, अस्मिन्प्रदेशे

प्रकामं यथेष्टमवलोक्यताम् ॥ भारतीये—अपगुणोन्मुक्तविकसद्बाणसंहतिः अपगुणैरुन्मुक्ता विकसन्ती बाणानां वृक्षविशेषाणां संहतिर्यत्र अभीरामः मनोहरः एष (पुण्याश्रमः) ॥ श्लेषः ॥

शरप्रवाहदुर्गेऽस्मिञ्श्रीसंपल्लक्ष्मणान्विते ।
देशेभग्नेभदन्ताढ्ये दृश्यतां दीप्रतागुरुः ॥ ५८ ॥

शरेति ॥ शरप्रवाहदुर्गे मार्गणगणविषमे, श्रीसंपल्लक्ष्मणान्विते श्रीसंपदा सीतया लक्ष्मणेन सौमित्रिणा चान्विते, भग्नेभदन्ताढ्ये भग्नैर्हस्तिदन्तैराढ्ये, अस्मिन्देशे दीप्रतागुरुः दीप्रतया प्रतापेन शरीरतेजसा वा गुरुः (रामः) दृश्यताम् ॥ भारतीये—शरप्रवाहदुर्गे पयःपूरदुष्प्रवेशे यद्वा मुञ्जसंघदुष्प्रवेशे, श्रीसंपल्लक्ष्मणान्विते शोभासंपत्तिचिह्नान्विते, अभग्ने निरुपद्रवे, भदन्ताढ्ये संसारासारतापरिज्ञानेन वैराग्यिकैः पुरुषैराश्रिते, दीप्रतागुरुः तपश्चरणादिना गुरुः (पुण्याश्रमः) ॥ श्लेषः ॥

अहो परमरौद्रत्वमसिधाराव्रतैश्चिता ।
धत्ते सङ्ग्रामदुर्गान्तर्भूमिर्नरकपालिनी ॥ ५९ ॥

अहो इति ॥ असिधाराव्रतैर्वीरक्षत्रियकुमारैः, चिता व्याप्ता सङ्ग्रामदुर्गा खरदूषणादियुद्धविषमा, नरकपालिनी नराणां कपालैर्व्याप्ता, अन्तर्भूमिः समीपमेदिनी अहो आश्चर्यं परमरौद्रत्वं अतिभीष्मतां धत्ते ॥ भारतीये—असिधाराव्रतैः खड्गधारातुल्यव्रतैर्योगिभिः, नरकपालिनी नरान् केन सुखेन पालयतीत्येवंशीला, संग्रामदुर्गान्तर्भूमिः समीचीनग्रामप्राकारमध्यावनिः, परमुत्कृष्टं, अरौद्रत्वं प्रसन्नत्वम् ॥ श्लेषः ॥

प्रभञ्जनाकुलाशोकभिन्ना पुंनागसंहतिः ।
एतस्मिन्नीदृशं कालं प्राप्य राजन्न राजति ॥ ६० ॥

प्रभञ्जनेति ॥ हे राजन्, प्रभञ्जनाकुला प्रध्वंसव्यग्रा, शोकभिन्ना मनःसंतापभग्ना, पुंनागसंहतिः सत्पुरुषसमूहः, एतस्मिन्दण्डकारण्ये, ईदृशं कालमन्तकतुल्यं रामलक्ष्मणयुगलं प्राप्य न राजते ॥ भारतीये—प्रभञ्जनाकुलाशोकाभिन्ना वाताहताशोकवृक्षमिश्रिता, पुंनागसंहतिः वृक्षविशेषपङ्क्तिः, एतस्मिन्प्रदेशे ईदृशं कालं शरदात्मकं प्राप्य [किं] न राजते ॥ श्लेषः ॥

नृप हेतुरगान्पश्य त्वं लक्ष्म्या ज्वलितानिमान् ।
वैरिदावाग्निसंतापविदग्धान्पतितानितः ॥ ६१ ॥

नृपेति ॥ हे नृप, त्वं लक्ष्म्या शोभया ज्वलिताञ्शोभितान्, वैरिदावाग्निसंतापविदग्धान् शत्रुदवानलसंगमभस्मीभूतान् इतोऽस्मिन्देशे पतितान् इमान् तुरगानश्वान् पश्य ॥ भारतीये—लक्ष्म्या हेतुस्त्वं ज्वलितान् प्रदीप्तान्, अगान् वृक्षान् ॥ श्लेषः ॥

वेगिनीमिह पश्यामि नदीनां स्यन्दनक्रियाम् ।
कुञ्जराजिश्रियं चोच्चैस्तीक्ष्णाङ्कुशमुखोद्यताम् ॥ ६२ ॥

वेगिनीमिति ॥ स्यन्दनक्रियां रथव्यापारं वेगिनीं वेगवतीं सतीम्, उच्चैस्तीक्ष्णाङ्कुशमुखोद्यताम् अतितीक्ष्णाङ्कुशाग्रसंकुचितगात्राम्, कुञ्जराजिश्रियं गजश्रेणिश्रियम्, च दीनां म्लानां न पश्यामि अपि तु पुष्टाम् ॥ भारतीये—नदीनामापगानाम्, स्यन्दनक्रियाम् प्रस्रवणव्यापारं वेगिनीं रयवतीं, उच्चैरुच्चां, तीक्ष्णां निरीक्षणीयां, कुशमुखोद्यतां कुशाग्रनिर्भिन्नां, कुञ्जराजिश्रियं झाटकसमूहश्रेणिशोभां च ॥ श्लेषः ॥

सर्वत्र विषयेऽमुष्मिन्भ्रान्तदृष्टिरितस्ततः ।
न पश्यामि क्वचित्तीव्रं द्विषतां खरदूषणम् ॥ ६३ ॥

सर्वत्रेति ॥ द्विषतां शत्रूणां तीव्रं सोढुमशक्यम्, खरदूषणं राक्षसजातीयम् ॥ भारतीये—खरदूषणमुग्रापराधम् ॥

देव किं बहुनानेन साधुनासाधुनाथवा ।
निष्पश्चिममिदं पश्य नेत्रमात्राखिलेन्द्रियः ॥ ६४ ॥

देवेति ॥ अनेन परिजल्पितेन किम् । इदं वक्ष्यमाणम्, निष्पश्चिममद्वितीयम् ॥ नेत्रमात्रे समारोपितसकलेन्द्रियव्यापारः सन् ॥

पटुः सुघटविस्तारसमस्तन्यायनीतिषु ।
रहितोदारतुष्टात्मा मदिराक्षीव्रताशया ॥ ६५ ॥

पद्मपाणिरशोकाङ्घ्रिः पक्वबिम्बाधरोन्नतिः ।
गम्भीरनाभिरुत्तुङ्गवक्षाश्चन्द्राननद्युतिः ॥ ६६ ॥

कम्बुग्रीवालघुश्रोणिः स्निग्धकेशान्तसंहतिः ।
सुभ्रूर्मण्डूककक्षाश्रीश्चारूरू रम्यतावधिः ॥ ६७ ॥

नखैः कुरवकच्छायैः श्लिष्टैरङ्गुलिपर्वभिः ।
दशनैः शिखराकारैर्व्यज्यमानोदयाकृतिः ॥ ६८ ॥

विनीतवेषमाकारं वाणीमभिजनोचिताम् ।
शीलं रूपानुरूपं च व्याददानोदयान्वितम् ॥ ६९ ॥

आश्रमः सर्वशास्त्राणामाकरः सर्वसंपदाम् ।
अन्योन्यसमयुग्माङ्गव्यञ्जनानामुपाश्रयः ॥ ७० ॥

आभिरूप्यस्य नियतिः सीमा सौभाग्यसंपदः ।
लावण्यस्य पयोराशिः कलानां नित्यचन्द्रिका ॥ ७१ ॥

विकासः कोऽपि कान्तीनां कोऽपि रागस्य संचयः ।
सर्वोपमानदूरात्मा वैदेही दृश्यतामितः ॥७२॥ (अष्टाभिः कुलकम्)

पटुरिति ॥ आयनीतिषु गतिव्यापारेषु, पटुर्दक्षा, सुघटविस्तारसमस्तनी शोभनौ घटतुल्यविस्तारौ समौ स्तनौ यस्याः सा, रहितोदारतुष्टात्मा रहितो निरस्त उदारः सकलकलाप्रवीण औदार्यधर्मकलितो वा तुष्ट इष्टभोगानुभवनतया संहृष्ट आत्मा यया सा । एतेन कनकमयमृगसंलग्नतया धावतो विरहाक्रान्ततया सकलकलासु भोगोपभोगसंभोगेषु चानादरणीयत्वं सीतायाः पतिव्रतायाः प्रदर्शितम् । मदिराक्षी मदिरे मनोहरे अक्षिणी यस्याः सा, बताशया, बत खिन्न आशयो यस्या सा खिन्नचित्ता, पद्मपाणिः पद्मतुल्यभुजा, अशोकाङ्घ्रिः अशोक इवाङ्घ्रिर्यस्याः सा सुकुमारचरणा, पक्वबिम्बाधरोन्नतिः पक्वतुण्डीरोष्ठोन्नतिः, गम्भीरनाभिः, उत्तुङ्गवक्षाः उच्चोरःस्थला, चन्द्राननसमद्युतिः चन्द्रस्येवानने समा समस्ता द्युतिर्यस्याः सा, कम्बुग्रीवा शङ्खग्रीवा, अलघुश्रोणिः विस्तीर्णकटिः, स्निग्धकेशान्तसंहतिः स्निग्धा कुटिला कान्तिमती च केशाग्रपङ्क्तिर्यस्याः सा, सुभ्रूः शोभनभ्रूः, मण्डूककक्षाश्रीः भेकपार्श्वाकृतिः, चारूरुः सुकुमारोरूः, रम्यतावधिः मनोहरताया मर्यादा, कुरबकच्छायैः कुरबककलिकासदृशैर्नखैः, श्लिष्टैरन्योन्यसंलग्नैः, अङ्गुलिपर्वभिः, शिखराकारैः पक्वदाडिमबीजप्रतिमैः, दशनैर्दन्तैः, च व्यज्यमानोदयाकृतिः प्रकटीभूयमानोदयाकारा, विनीतवेषं शिष्टजनोचितालंकरणम् आकारं प्रसादकोपजप्रकृतिम्, अभिजनोचितां कुलयोग्यां वाणीं रूपानुरूपं रूपयोग्यम्, उदयान्वितमभ्युदययुक्तं शीलं च व्याददाना गृह्णती, सर्वशास्त्राणां व्याकरणछन्दोलंकारादीनामाश्रमः, सर्वसंपदां सकलविभूतीनाम् आकरः, अन्योन्यसमयुग्माङ्गव्यञ्जनानां नेत्रपाणिपादजङ्घादीनां तिलकादीनां च उपाश्रयः अवष्टम्भः, आभिरूप्यस्य मनोहरताया नियतिरवधिः, सौभाग्यसंपदः सीमा, लावण्यस्य पयोराशिः समुद्रः, कलानां चतुःषष्टिकलानां नित्यचन्द्रिका, कान्तीनां कोऽप्यनिर्वचनीयः विकासः, रागस्य कोऽपि संचयः, सर्वोपमानदूरात्मा सर्वोपमानेभ्यो दूर आत्मा यस्याः सा वैदेही सीता इतः अस्मिन्देशे दृश्यताम्॥भारतीये—सुघटविस्तारसमस्तन्यायनीतिषु सुघटो निश्चयपथमानीतो विस्तारो येषां तादृक्षु समस्तेषु निखिलेषु न्यायेषु विद्वज्जननिर्णीततर्कोक्तेषु नीतिषु सोमदेवाचार्यादिप्रणीतनीतिवाक्येषु, पटुः, दारतुष्टात्मा स्वदारनिरतः, मदिराक्षीबताशया मद्योन्मत्तत्ववाञ्छया, रहिता, कम्बुग्रीवालघुश्रोणिः (बहुव्रीहिद्वयघटितः कर्मधारयः) सुभ्रूः शोभना भ्रुवोरूः शोभा यस्य सः, चारूरुः, दयान्वितं कृपायुक्तम् व्याददानः, अपमानदूरात्मा अपमानाद्दूर आत्मा यस्य सः सर्वः सकलः देही प्राणी वै स्फुटम् ॥ श्लेषः ॥

आदिप्रजापतिः स्याच्चेन्नूनं तेनान्त्यवेधसाम् ।
स्त्रियः स्रष्टुं प्रतिच्छन्दं कृताग्राम्या वधूरियम् ॥ ७३ ॥

आदिप्रेति ॥ नूनम् अहमेवं मन्ये । चेत् आदिप्रजापतिः प्रथमविधाता स्यात् । तेन त्र-

ह्मणा अन्त्यवेधसा पाश्चात्त्यब्रह्मणां स्त्रियः स्रष्टुं प्रतिच्छन्दं प्रतिकृतिः अग्राम्या विचारचकोरचन्द्रिका इयं वधूः कृता ॥ भारतीये—ग्राम्या ग्रामीणा ॥ श्लेषः ॥

एषा विलासभावेन द्योतयन्ती दिगन्तरम् ।
सरस्वतीव संबुद्धा भाति पद्मोदयस्थितिः ॥ ७४ ॥

एषेति ॥ पद्मोदयस्थितिः पद्मस्य रामस्य उदयायाभ्युदयायैव स्थितिरवस्थानं यस्याः सा संबुद्धा सम्यग्ज्ञानपरिणता एषा सीता विलासभावेन 'हावो मुखविकारः स्याद्भावश्चित्तसमुद्भवः । विलासो नेत्रजो ज्ञेयो विभ्रमो भ्रूयुगान्तयोः ॥' इत्युक्तरूपेण विलासेन भावेन च दिगन्तरं द्योतयन्ती सती । संबुद्धा, पद्मोदयास्थितिः कमलोद्गमस्थितिः, । विलासभावेन हंसगमनस्थित्या दिगन्तरं द्योतयन्ती सरस्वती इव । भाति ॥ भारतीये—पद्मोदयस्थितिः पद्माया लक्ष्म्या उदयस्थितिरुत्पत्तिस्थानम् ॥ श्लेषः ॥

रोमराजिलतावृद्धेरालवालीकृतामिव ।
कपित्थवृन्तसंस्थाननिम्नां नाभिमुपागताम् ॥ ७५ ॥
वनराजीं प्रवालोष्ठश्रिया पल्लवितामिव ।
नीलोत्पलमयीं दृष्ट्या सितैर्मुकुलितामिव ॥ ७६ ॥
कैश्येन कुर्वतीं मुक्तप्ररोहमिव चालकैः ।
भृङ्गीमयीं पदन्यासैः स्थलपद्ममयीमिव ॥ ७७ ॥
वक्रशीलां भ्रुवोरेव कुचयोरेव कर्कशाम् ।
चपलां नेत्रयोरेव केशेषु कुटिलस्थितिम् ॥ ७८ ॥
अविलिप्तकृतामोदामपीतासवमन्थराम् ।
अरुष्टां रक्तलोलाक्षीमतुष्टां विकसन्मुखीम् ॥ ७९ ॥
किंचित्पूर्वप्रियाह्लाल्यं दधतीं यौवनं भरात् ।
मूढप्रौढान्तरावस्थां साभ्रेऽर्के पद्मिनीमिव ॥ ८० ॥
लूनम्लानमृणालाभकर्णपालीसमुन्नतिम् ।
तालवृन्तानिलेनेव विघ्नतीं पक्ष्मणा मुखम् ॥ ८१ ॥
गोरक्षिकामिमां स्रष्टुं नूनमर्धं हृतं विधोः ।
रम्यं धात्रान्यथा चन्द्रः कथमर्धत्वमीयिवान् ८२ (अष्टाभिः कुलकम्)

रोमेत्यादि ॥ नूनम् अहमेवं मन्ये । धात्रा ब्रह्मणा रोमराजिलतावृद्धे रोमावलीरूपलताया वृद्धिमुद्दिश्य आलवालीकृताम् इव, कपित्थवृन्तसंस्थाननिम्नां कपित्थे वृन्ताधारवद्गम्भीराम्, नाभिमुपागताम्, प्रवालोष्ठश्रिया नूतनपल्लवसदृशाधरशोभया नूतनपल्लवरूपाधरा-

भया च पल्लवितां भूषितां सुपर्णा वनराजीं कान्तारश्रेणिम् इव, दृष्ट्या लोचनाभ्यां नीलोत्पलमयीम्, स्मितैरीषद्धास्यैर्मुकुलिताम् इव, कैश्येन केशपाशेन मुक्तप्ररोहं मुक्ताः प्ररोहा यस्यां क्रियायां भवति तथा कुर्वतीम्, अलकैः कुटिलकेशैः भृङ्गीमयीम्, पदन्यासैः स्थलपद्ममयीम् इव, भ्रुवोः एव वक्रशीलाम्, कुचयोः एव कर्कशां कठोराम्, नेत्रयोः एव चपलाम्, केशेषु कुटिलस्थितिम्, अविलिप्तकृतामोदाम् अचर्चितविहितपरिमलाम्, अपीतासवमन्थराम् अपीतमद्यमन्थराम्, अरुष्टामकुपितामपि रक्तलोलाक्षीं लोहितचञ्चललोचनाम्, अतुष्टामहृष्टामपि विकसन्मुखीं प्रसन्नवदनाम्, पूर्वप्रियात् प्रथमप्रेम्णः सकाशात् किंचिद्बाल्यं भराच्च यौवनम् अत एव न परां मूढां नापि परां प्रौढां किं तु तयोर्मध्यगतावस्थाम् । साभ्रे सपयोधरे अर्के सूर्ये सति संकोचविकासान्तरावस्थां दधतीं पद्मिनीमिव । दधतीम्, लूनम्लानमृणालाभकर्णपालीसमुन्नतिं पूर्वलूनपश्चान्म्लानेन मृणालेन तुल्या आभा यस्यास्तादृशी कर्णपाल्योः समुन्नतिर्यस्यास्ताम्, सतीम् पक्ष्मणा चक्षुर्लोम्ना तालवृन्तानिलेन तालपत्रवायुना इव । मुखं विघ्नन्तीं वीजयन्तीम्, गोरक्षिकां रामव्यतिरेकेण गाः प्रचारितानीन्द्रियाणि वाणीं वा रक्षति रुणद्धि तादृशीं पतिव्रताम् इमां सीतां स्रष्टुं विधोश्चन्द्रस्य रम्यं मनोहरम् अर्धं हृतमपनीतम् ॥ अन्यथा अर्धभागाहरणे चन्द्रः अर्धत्वं खण्डितत्वं कथम् ईयिवान् प्राप्तवान् ॥ भारतीयपक्षे—गोरक्षिकां ग्राम्यां गोपालिकाम् ॥ श्लेषोत्प्रेक्षा ॥

अहो रूपमहो कान्तिरहो लावण्यपाटवम् ।
अनीदृशमिदं रूपं न जातं न जनिष्यते ॥ ८३ ॥

अहो रूपमिति ॥ अनीदृशमुपमातीतम् ॥ सीताया गोपालिकाया वा ॥

तस्यानूनमिति श्रुत्वा स्वसुः स्थानोचितं वचः ।
तत्तु पश्यन्नृपः कृच्छ्रान्मनोनेत्रं न्यवीवृतत् ॥ ८४ ॥

तस्यानूनमिति ॥ नृपो रावणः तस्याः स्वसुर्भगिन्याः, इति पूर्वोदितं स्थानोचितं वचः श्रुत्वा तत् भगिनीदर्शितं वस्तु पश्यन् सन् मनोनेत्रं चित्तचक्षुःसमाहारं कृच्छ्रात् न्यवीवृतत् निवर्तयामास ॥ भारतीये—नृपो युधिष्ठिरः, तस्य भीमस्य अर्जुनस्य वा अनूनं प्रचुरम्, स्वसुः शोभना असवः प्राणा यस्य, व्याधिमुक्तः युक्तायुक्तविचारज्ञो वा ॥ श्लेषः ॥

विद्याधराधिगुरुणा तां विशेषेण पश्यता ।
तेन वक्रोक्तिचतुरं युक्तं वचनमाददे ॥ ८५ ॥

विद्याधेति ॥ विद्याधराधिगुरुणा विद्याधराणां देवविशेषाणाम् अधिगुरुणा, विशेषेण असाधारण्येन तां सीतां पश्यता तेन रावणेन वक्रोक्तिचतुरं युक्तं वचनम् आददे जगृहे ॥ भारतीये—विद्याधराधिगुरुणा विद्याभिरान्वीक्षिक्यादिविद्याभिः धराधीनां धराभृतां राज्ञां गुरुणा अद्रीणां गुरुणा मेरुभूतेन वा तेन युधिष्ठिरेण । तां गोपालिकाम् ॥ श्लेषः ॥

यदीदृशमिदं रूपं स्याद्वनेऽन्तःपुरेण किम् ।
किमुद्यानलताक्लेशै रम्या वनलतास्ति चेत् ॥ ८६ ॥

यदीति ॥ रम्या मनोहरा, अवनलता न वनलता अपूर्ववल्ली वनवासायोग्या लता । उद्यानलताक्लेशैः उद्यानलतायै क्लेशैरालवालादिकरणक्लेशैः ॥

एनां घनकुचोच्छ्रायव्यवधानात्तनूदरम् ।
अपश्यन्तीमपश्यन्तस्तेऽद्याप्युदरशायिनः ॥ ८७ ॥

एनामिति ॥ घनकुचोच्छ्रायव्यवधानात् पीनोन्नतस्तनोच्छ्रायान्तर्धानात् तनूदरं सूक्ष्ममुदरम् अपश्यन्तीम् एनां सीतां गोपालिकां वा अपश्यन्तस्ते अद्यापि उदरशायिनो गर्भस्था एव वर्तन्ते । तैः किमपि न दृष्टमिति भावः ॥

गतेन राजहंसीयमस्मद्दर्शनविह्वला ।
पश्य भाति विलोलाक्षी किंचिच्चकितमानसा ॥ ८८ ॥

गतेनेति ॥ अस्मद्दर्शनविह्वला अस्माकं दर्शनेन विह्वला, विलोलाक्षी चञ्चललोचना, किंचिच्चकितमानसा किंचिच्चकितं मानसं यस्याः सा इयं सीता गोपालिका वा गतेन गमनेन राजहंसी भाति (इति) त्वं शूर्पणखा भीमोऽर्जुनो वा पश्य ॥

एषा कटाक्षपातेन सारङ्गीलोललोचना ।
वने दिशि दिशि भ्रान्ता दीर्घमन्वीक्षते पतिम् ॥ ८९ ॥

एषेति ॥ सारङ्गीलोललोचना सारङ्ग्या इव लोले लोचने यस्याः सा सीता ॥ भारतीये—लोललोचना चञ्चलाक्षी सारङ्गी हरिणी ॥ श्लेषः ॥

इदमन्यच्च कलयन्कौतुकाविष्टमानसः ।
कामादिषुनिरोधेन जितात्मा सन्निपातिना ॥ ९० ॥
अवन्यायपथं धीप्सन्नारीणां गोचरं गतम् ।
मदनाशाधिकोद्योगो मायावेषेण योजितः ॥ ९१ ॥
गाढाकल्पकनिष्ठत्वं दूरं कुर्वश्छलेन ताम् ।
स्वपदव्यवसायाय क्षिप्रं जह्रे सतीव्रताम् ॥ ९२ ॥

(त्रिभिर्विशेषकम्)

इदमेति ॥ इदमुक्तप्रकारम् अन्यत् कामान्धतया युक्तायुक्तविचारमन्तरेण पररमणीसङ्गं च कलयन् निश्चिन्वन्, कौतुकाविष्टमानसः कुतूहलारोपितमानसः कामात् संनिपातिना सम्यङ्निपतनशीलेन इषुनिरोधेन बाणनियन्त्रणेन कर्त्रा जितात्मा जित आत्मसात्कृत आत्मा यस्य सः, नारीणां कामिनीनां गोचरं विषयं गतं प्राप्तम् अवन्यायपथम् अनीतिमार्गं धीप्सन् वाञ्छन्, मदनाशाधिकोद्योगः मदने कंदर्पे आशया अधिक उद्योगो यस्य सः, मायावेषेण कपटयातिरूपेण योजितः, गाढाकल्पकनिष्ठत्वं गाढे तीव्रे आकल्पके कामे निष्ठत्वं तत्परत्वं कुर्वन् (रावणः) सतीव्रतां पतिव्रतां तां सीतां छलेन क्षिप्रं शीघ्रं

स्वपदव्यवसायाय स्वपदव्या अवसायाय नाशाय, दूरं यथा स्यात्तथा जह्रे हृतवान् ॥ भारतीये—इदम् अन्यद् रम्यपदार्थजातं कलयन् पश्यन् कामादिषु अरिषड्वर्गेषु संनिपातिन संनद्धेन, निरोधेन रोधनेन जितात्मा यन्त्रितात्मा, अरीणां शत्रूणां गोचरं गतम् (अपि अवन्यायपथं न धीप्सन्, मदनाशाधिकोद्योगः मदस्य गर्वस्य नाशाय अधिक उद्योगं यस्य सः, मायावेषेण कौटिल्याकारेण यः अजितः कापटिकद्यूतेन यो जित इति वा, गाढाकल्पकनिष्ठत्वं दृढालंकारतत्परताम् दृढाजन्मलघुतां वा कुर्वन्, स युधिष्ठिरः, त तीव्रतां स्वपदव्यवसायाय स्वपदनिश्चयाय जह्रे ॥ श्लेषः ॥

विहायसारमुद्वेगं गच्छता ज्वलतामुना ।
साक्षाल्लक्ष्मीः कृतौत्सुक्यं नीता सज्जानकीदृशी ॥ ९३ ॥

विहायेति ॥ अरम् उद्वेगं गच्छता, ज्वलता कामाग्निदह्यमानेन अमुना रावणेन विहायसा गगनपथेन साक्षात् परमार्थवृत्त्या लक्ष्मीः ईदृशी पतिव्रता सज्जानकी सती जानकी कृतौत्सुक्यं विहितराभस्यं यथा स्यात्तथा नीता ॥ भारतीये—ज्वलता द्यूतव्यसनवह्निना दह्यमानेन श्रमोत्पन्नसंतापसंतप्यमानेन वा गच्छता मार्गे विहरमाणेन अमुना सारं धनम् उद्वेगं विहाय कीदृशी सज्जा औत्सुक्यं नीता प्राप्ता लक्ष्मीर्न साक्षात् आत्मसात् कृता ॥ श्लेषः ॥

आलिङ्गन्निव वेलाभिः स्वागतं व्याहरन्निव ।
गर्जैरूर्जस्वलस्तेन क्रमेण ददृशेऽम्बुधिः ॥ ९४ ॥

आलिङ्गन्निति ॥ तेन रावणेन युधिष्ठिरेण च गर्जैः कल्लोलकोलाहलैः स्वागतं व्याहरन्निव वेलाभिरालिङ्गन्निव ऊर्जस्वलो बलिष्ठः अम्बुधिः समुद्रः क्रमेण गतप्रत्यागतेन ददृशे दृष्टः ॥

शीतोऽम्भःकरिणां लवङ्गकवलोद्गारस्य गन्धं वह-
न्वातस्तालवनान्तरेषु परुषं हस्तैर्विवानाहतः ।
युद्धस्पर्धिपरिश्रमेण तिमिभिः सीत्कृत्य पीतोऽम्बुधे-
राश्लिष्यत्स यशोधनंजयपरं विद्याधृतां नायकम् ॥ ९५ ॥

इति श्रीधनंजयकविविरचिते धनंजयाङ्के द्विसंधानकाव्ये राघवपाण्डवीयापरनाम्नि सीताहरणलङ्काद्वारवतीप्रस्थानकथनो नाम सप्तमः सर्गः समाप्तः ।

शीतविति ॥ शीतः शीतलः, अम्भःकरिणां जलगजानां तालवनान्तरेषु परुषं विवान् विचरन्, तिमिभिर्मत्स्यविशेषैर्हस्तैः आहतः युद्धस्पर्धिपरिश्रमेण युद्धस्पर्धिना परिश्रमेण सीत्कृत्य पूर्वं हस्तैः पीतः ततो लवङ्गकवलोद्गारस्य गन्धं वहन् सः अम्बुधेः वातः यशोधनं जयपरं जयं पिपर्ति तम् विद्याधृतां विद्याधराणां नायकं रावणम् आश्लिष्यत् आलिङ्गति स्म ॥ भारतीये—यशोधनंजयपरं 'प्रतापो यस्य वार्तापि राज्ञां स्याद्भयकारिणी ।

एकदिग्व्यापिका कीर्तिः सर्वदिग्व्यापकं यशः॥' इत्युक्तलक्षणेन यशसोपलक्षिते धनंजये परं तत्परम् । विद्याधृतां विद्यावतां नायकं युधिष्ठिरम् ॥ शार्दूलविक्रीडितं छन्दः ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीच्छोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां सीताहरणलङ्काद्वारवतीप्रस्थानकथनो नाम सप्तमः सर्गः ।

---

अष्टमः सर्गः ।

अथ कदानुवशा नु परासुता पुरमुपेत्य सदुर्जनकस्य वा ।
क्रियत इत्ययमाकुलमानसः प्रभुरवोचत वीक्ष्य पयोनिधिम् ॥ १ ॥

अथेति ॥ अथानन्तरं, प्रभू रावणः, सदुः सीदन्त्यस्मिन्निति निवासोचितम्, पुरं लङ्काभिधेयम्, उपेत्य 'नु अहो परा सर्वरमण्युत्कृष्टा जनकस्य राज्ञः सुता सीता कदा अनुवशा आत्मवशवर्तिनी वा एव मया क्रियते' इति प्रकारेण आकुलमानसः सन्, पयोनिधिं समुद्रं, वीक्ष्य अवोचत ॥ भारतीये—स प्रभुर्युधिष्ठिरः 'नु अहो पुरं हस्तिनापुरम् उपेत्य दुर्जनकस्य दुर्योधनस्य परासुता मृत्युः अनुवशा आत्माधीना कदा क्रियते' इत्याकुलमानसः ॥ श्लेषः ॥ द्रुतविलम्बितं वृत्तम् ॥

अयमगाधगभीरगुरुर्गुणैरुपगतोनियतावधिरार्द्रताम् ।
यतिरिवाखिलसत्त्वहितव्रतो जलनिधिः सकलैरवलोक्यताम् ॥ २ ॥

अयमिति ॥ अगाधगभीरगुरुः अगाधोऽतलस्पर्शी, गभीरो दुर्लक्ष्यः गुरुर्गरिमोपेतः । कर्मधारयः । गुणैरार्द्रतामुपगतः, अनियतावधिरनिश्चितमर्यादः, अखिलसत्त्वहितव्रतो निखिलप्राणिभ्यो हितं व्रतं यस्य सोऽयं जलनिधिः । अगाधगभीरगुरुः अनुपमगाम्भीर्यश्चासौ गुरुः संसारसमुद्रतरणे पोतायमानं धर्मं गृणाति स च, आर्द्रतां दयालुतामुपगतः, सकलैर्गुणैः नियतावधिर्निश्चितमर्यादः, यतिरिव । सकलैरवलोक्यताम् ॥

असुतरां सुतरां स्थितिमुन्नतामसुमतां सुमतां महतां वहन् ।
उरुचितैरुचितैर्मणिराशिभिः स्वरुचि तै रुचितैरवभात्ययम् ॥ ३ ॥

असुतेति ॥ असुतरां तरीतुमशक्यामुन्नतामुत्तुङ्गां महतां सत्पुरुषाणामसुमतां प्राणिनां सुमतामिष्टां स्थितिं सुतरां स्वभावेन वहन् अयं जलधिरुरुचितैरुच्चैः संहतैः रुचितैर्दीप्तिरुचितैर्नरेन्द्रमुकुटकोटियोग्यैस्तैर्लोकोत्तरैर्मणिराशिभी रत्नश्रेणिभिः स्वरुचि स्वाभाविककान्ति यथा स्यात्तथावभाति ॥

अनिधनेन रसातलवासिना विगलितो निविडं वडवाग्निना ।
इह मुहुः शफरीपरिलङ्घनव्यतिकरात्क्वथतीव सरित्पतिः ॥ ४ ॥

अनिधनेनेति ॥ सरित्पतिः अनश्वरेण रसातलवासिना वडवानलेन निविडं विगलितः सन् इह देशे शफरीपरिलङ्घनव्यतिकरात् मुहुः क्वथतीव ॥ उत्प्रेक्षा ॥

परिहतैरिह तैः कृतबुद्बुदैः समकरैर्मकरैरुदधेर्जलैः ।
उपरुषा परुषा नयनावलिः समुदिता मुदितानुकृताकुलैः ॥ ५ ॥

परीति ॥ इह देशे तैरतिरौद्रतया लोकप्रसिद्धैः समकरैस्तुल्यशुण्डादण्डैः, आकुलैः, मकरैः कर्तृभिः परिहतैरुदधेर्जलैः कर्तृभिरुपरुषा आसन्नकोपेन परुषा निष्ठुरा समुदिता मिलिता अनूना वा मुदिता हृष्टा नयनावलिश्चक्षुःश्रेणिरनुकृता ॥

कल्लोलाः सपदि समुद्धृता मरुद्भिर्गण्डूषा इव करियादसां विभान्ति ।
और्वाग्निज्वलनशिखाकलापशङ्कामेतस्मिन्विदधति पद्मरागभासः ॥ ६ ॥

कल्लोला इति ॥ मरुद्भिः समुद्धृताः कल्लोलाः करियादसां जलगजजलजन्तूनां गण्डूषा इव शीघ्रं विभान्ति ॥ एतस्मिन् पद्मरागभास और्वाग्निज्वलनशिखाकलापशङ्कां वडवानलज्वलनज्वालासमूहभ्रान्तिं विदधति जनयन्ति ॥ प्रहर्षिणी ॥

भान्त्येतस्मिन्मणिकृतरङ्गाभोगास्तत्सारूप्यान्निहततरङ्गा भोगाः ।
क्रीडास्थाने रुचिरमहीनामुच्चैरुद्भ्रान्तानां सुचिरमहीनामुच्चैः ॥ ७ ॥

भान्त्येतेति ॥ एतस्मिन्प्रदेशे रुचिरमहीनां दीप्रावनीनाम्, उच्चैरत्यर्थं सुचिरं दीर्घकालं यथा स्यात्तथा उद्भ्रान्तानामुपर्युपरि चटताम्, अहीनां सर्पाणां मणिकृतरङ्गाभोगा रत्नरञ्जितफणास्तत्सारूप्यात् सर्पसादृश्यात् निहततरङ्गा विध्वस्तवीचयो, भोगाः काया उच्चैरत्यर्थं भान्ति ॥ जलधरमालावृत्तम् ॥

आपातुं जलमिदमिन्द्रनीलजालव्याजेन व्यवतरतीव मेघजालम् ।
वक्षोभिः करिमकरैर्विभिन्नमम्भो यात्युद्यन्मणिरुचि शक्रचापभावान् ॥ ८ ॥

आपातुमिति ॥ इदं मेघजालम् इन्द्रनीलजालव्याजेन जलमापातुं व्यवतरतीव । तथा करिमकरैर्वक्षोभिर्विभिन्नम् उद्यन्मणिरुचि उद्यती मणीनामिव रुचिर्यस्य तत्, अम्भः शक्रचापभावान् याति ॥ प्रहर्षिणीवृत्तम् ॥

एतान्प्रवालविटपान्स्वतटीभिरूढान्रूढान्निषिञ्चति हतैरुदधिस्तरङ्गैः ।
रङ्गैरिहाम्बुकरिणां निकटे वसन्तं सन्तं न सत्त्वसहिता ह्यवधीरयन्ति ॥ ९ ॥
(शृङ्खला)

एतानिति ॥ उदधिः स्वतटीभिः ऊढान्, रूढान् समुत्पन्नान्, एतान् प्रवालविटपान् विद्रुमवृक्षान् अम्बुकरिणां रङ्गैर्गतिभिः हतैः, तरङ्गैः इह निषिञ्चति ॥ हि यतः सत्त्वसहिताः जना निकटे वसन्तं सन्तं न अवधीरयन्ति ॥ अर्थान्तरन्यासः । वसन्ततिलकम् ॥

अध्यासीना निश्चला निस्तरङ्गानेतानेता नीलनीलान्प्रदेशान् ।
नीलाभ्राणां शङ्कया किं वलाका नो शङ्खानां पङ्क्तयस्ता विभान्ति ॥ १० ॥

अध्यासीति ॥ ताः शङ्खानां पङ्क्तयो नो विभान्ति । किं तु एता निस्तरङ्गान् एतान्

नीलनीलान् प्रदेशान् नीलाभ्राणां शङ्कया अध्यासीना निश्चला बलाका वक्त्यो भान्ति ॥ शालिनी ॥

एषामुष्मिन्विलसति मुक्ताशुक्तिर्मुक्ता शुक्तिः प्रसवनिरोधस्यालम् ।
रोधस्यालम्बितफलवामाश्वासैर्वामाश्वासैः सपदि यथोद्बोधेन ॥ ११ ॥

(शृङ्खला)

एषेति ॥ अमुष्मिन्देशे एषा मुक्ताशुक्तिः (यस्यां मुक्ताफलानि प्रसूयन्ते तत्पुटम्) विलसति । यथा उद्बोधेन मुखविकसनेन आलम्बितफलवामाश्वासैः आलम्बितः फलानां वामेन उद्गिरणेन आशु शीघ्रम् आसः क्षेपणं यैस्तैः, वामाश्वासैर्निःसरणवायुभिः, सपदि सह प्रसवनिरोधस्य प्रसूतिप्रतिबन्धस्य शुक्तिः शोको रोधसि कूले अलमत्यर्थं मुक्ता ॥ चक्रवालयमकम् ॥ जलधरमाला ॥

गोखुराहत इवायमेकतो वर्तिकाभिरिव वर्तितोऽन्यतः ।
मेघविभ्रम इवाम्बुधिः क्वचित्संकुलः स कुलपर्वतैरिव ॥ १२ ॥

गोखुरेति ॥ अयम् अम्बुधिः एकत एकस्मिन्स्थाने गोखुराहतो गवां खुरैराहत इव, अन्यतोऽन्यस्मिन्स्थाने (शिल्पिभिः) वर्तिकाभिश्चित्रलेखनिकाभिः वर्तितो लिखित इव, क्वचित् मेघविभ्रमो जलदोदयसंशय इव, क्वचित् कुलपर्वतैः संकुल इव भाति ॥ रथोद्धता ॥

उद्युक्तानामुदधिमहत्त्वस्तुत्या युक्त्यैतस्मिन्ननु गुणभारत्यागः ।
स्थाने स्थाने भवति कवीनां कुर्वत्युक्त्यै तस्मिन्ननुगुणभारत्यागः॥१३॥

(अन्त्यपादयमकम्)

उद्युक्तेति ॥ ननु अहो उदधिमहत्त्वस्तुत्याः समुद्रगरिमवर्णनाया युक्त्या विचारणेन उद्युक्तानां कवीनाम् उक्त्यै निर्वचनाय अनुगुणभारत्यागः अनुगुणसरस्वतीदोषम् कुर्वति स्थाने स्थाने गुणभारत्यागः गुणानां यथोक्तशास्त्रोपदेशपरिज्ञानादिलक्षणानां भारस्य त्यागः भवति ॥ जलधरमाला ॥

किं मर्यादामेष जलात्मा परिवारो लोलो भिन्द्यादित्युपपश्यन्निव कूलम् ।
गत्वा गत्वावृत्तिमुदन्वान्भजतेऽयं न प्रत्येति स्वाम्यनुवर्गं प्रतिकूलम्॥१४॥

किमिति ॥ अयम् उदन्वान् 'एष जलात्मा जलरूपः परिवारः, लोलश्चञ्चलः सन् मर्यादां किं भिन्द्यात्' इति उपपश्यन्निव कूलं रोधो गत्वा गत्वा आवृत्तिं भजते ॥ स्वामी प्रतिकूलं प्रतिकूलगामिनम् अनुचरं न प्रत्येति ॥ मत्तमयूरं वृत्तम् ॥

वेगोऽत्येति प्रतिदिशमापूर्णानामालोकान्तं हिमकरविध्वस्तानाम् ।
वेलौघानां प्रतिनिशमस्मिन्नेषामालोकान्तं हि मकरविध्वस्तानाम् ॥१५॥

(अन्त्यपादयमकम्)

वेगविति ॥ प्रतिदिशम् आपूर्णानां संभृतानां, हिमकरविध्वस्तानां शिशिरकरचन्द्रायोत्क्षिप्तानाम् (चन्द्रोदयो ह्युदधिवृद्धये) मकराविध्वस्तानां मकरैर्विध्वस्तानाम् एषां वेलौघानां कल्लोलसमूहानाम्, वेगो रयः अस्मिन्स्थाने प्रतिनिशं आलोकान्तं सूर्योदयावधि, यथा स्यात्तथा आलोकान्तं चक्षुर्विषयताम् अत्येति अतिक्रामति ॥ जलधरमाला ॥

स्वं मलमान्तरङ्गमखिलं सलिलधिरधिकं
　तत्तिमिराशियोगदलितं यतिरिव परितः ।
आवरणात्मकं मुहुरयं बहिरभिनुदति
　प्रायश ईदृशी हि महतां गतिरतिविमला ॥ १६ ॥

स्वं मलेति ॥ अयं सलिलधिः समुद्रः स्वमात्मीयम्, आन्तरङ्गं मध्यगतम्, अखिलं समस्तं तिमिराशियोगदलितं मीनसमूहसंबन्धविध्वस्तम्, आवरणात्मकं जनझम्पनरूपं तन् मलम् । यतिः आन्तरङ्गमात्मप्रदेशानुविद्धम्, तिमिराशियोगदलितं पापाज्ञानभक्षणशीलचित्तवचनकायनिरोधनाशितम्, आवरणात्मकं ज्ञानव्यक्तिप्रच्छादनरूपम्, अखिलं मलं पापम् इव । अधिकं यथा स्यात्तथा मुहुर्वारंवारं परितः सामस्त्येन बहिः अभिनुदति उत्क्षिपति ॥ हि यतः महतां प्रायश ईदृशी अतिविमला गतिर्भवति ॥ अर्थान्तरन्यासः ॥ वंशपत्रपतितं वृत्तम् ॥

उद्बिन्दूनां मुहुरनुबद्धं वीच्या वात्यासारं प्रशमि तता पारम्यम् ।
फेनालीनां छिमितिकरोत्येतस्मिन्वात्या सारं प्रशमिततापा रम्यम् ॥ १७ ॥
(अन्त्यपादयमकम्)

उद्बिन्दूनामिति ॥ एतस्मिन्प्रदेशे तता विस्तृता प्रशमिततापा नाशितसंतापा सा वात्या वातमण्डली वात्या विजृम्भमाणया वीच्या तरङ्गेणानुबद्धम् रम्यं मनोहरम्, उद्बिन्दूनां बुद्बुदवतीनां फेनालीनां पारम्यं शोभाम् अरमत्यर्थम्, असारं शीघ्रं छिमितिकरोति विनाशयति ॥ जलधरमाला ॥

अन्वेति रत्नोल्लसितेन्द्रचापः कल्लोलमेघः सकदम्बकेन ।
नभस्वता शङ्खचलद्बलाकः क्षोभं गतः प्रावृषमम्बुराशिः ॥ १८ ॥

अन्वेतीति ॥ रत्नोल्लसितेन्द्रचापः, कल्लोलमेघः, शङ्खचलद्बलाकः, अम्बुराशिः समुद्रः सकदम्बकेन सवृक्षविशेषकुसुमेन ससमूहेन वा क्षोभं गतः सन् प्रावृषं वर्षामन्वेत्यनुकरोति ॥ अनुकार्यानुकारकयोरुपमावधारणगर्भसमासेन सादृश्यम् ॥ उपजातिः ॥

इत्थं तेन व्यापृतनेत्रेण पयोधौ वेलावेगाद्भानुसमीपं ह्रियमाणा ।
क्रन्दन्त्यन्तःस्नेहकृपार्द्रं परिवृत्य श्रीमत्सीतापक्रमतप्ता विलुलोके ॥ १९ ॥

इत्थमिति ॥ इत्थं पयोधौ व्यापृतनेत्रेण तेन रावणेन स्नेहकृपार्द्रम् अन्तश्चेतः परिवृत्य वेलावेगात् अन्तर्मुहूर्तसमयात् भानुसमीपं ह्रियमाणा नीयमाना, अपक्रमतप्ता अन्याय-

मार्गजदुःखसंतप्ता श्रीमत्सीता क्रन्दन्ती राम राम रक्ष रक्षेत्यादिविलापं कुर्वती सती विलुलोके ॥ भारतीये—वेलावेगात् कल्लोलरयेण कर्त्रा । कर्तर्यप्यपादानत्वविवक्षया पञ्चमी भानुसमीपं ह्रियमाणा (अतएव) तापक्रमतप्ता (अतएव) क्रन्दन्ती श्रीमत्सी ॥ मत्तमयूरं वृत्तम् ॥

स्थिरसमुद्रसमुद्रसकौतुकाद्युगभुजं विनयेन नयेन च ।
तमुदितं मुदितं ह्यनुजोग्रवागिति विभुं निजगौ निजगौरवात् ॥ २० ॥

स्थिरसेति ॥ स्थिरसमुद्रसमुद्रसकौतुका स्थिरे समुद्रे मुद्युक्तरसजनकं मुद्रसयुक्तं वा कौतुकं यस्याः सा, उग्रवाग्, अनुजा शूर्पणखा, युगभुजं दिवं गतान्देवान्भुनक्ति त्रायते तम्, विभुं तं रावणं येनैव वाक्येन मुदितं (तस्य) भवेत् तद् उदितं वाक्यं विनयेन प्रश्रयेण निजगौरवात् स्वकीयमाहात्म्यात् इति वक्ष्यमाणं निजगौ अपि तु न उक्तवती ॥ भारतीये—अग्रवाक् अनुजो भीमोऽर्जुनो वा युगभुजं युगे इव भुजे यस्य तम्, उदितमभ्युदयं गतम्, स्थिरसमुद्रसमुद्रसकौतुकात् मुदितम्, निजगौरवात् विनयेन नयेन दण्डनीत्यादिना च ॥ द्रुतविलम्बितम् ॥

सोऽयं नगर्याः परिखायमाणो वाताहतैरम्बुकणैः पयोधिः ।
दूरोन्नमत्पाण्डुकुलाग्र्यमुच्चैरक्षोध्वजं त्याजयति श्रमं त्वाम् ॥ २१ ॥

सोऽयमिति ॥ नगर्याः परिखायमाणः सः अयम् पयोधिः, दूरोन्नमत्पाण्डुकुलाग्र्यम् बहुकालोन्नतिप्राप्तनिर्मलवंशप्रधानम्, रक्षोध्वजं राक्षसानां ध्वजायमानम्, त्वाम् वाताहतैः अम्बुकणैः उच्चैरत्यर्थं श्रमं त्याजयति ॥ भारतीये—उच्चैरक्षः स्थूलशङ्खादिः पयोधिः दूरोन्नमत्पाण्डुकुलाग्र्यम् दीर्घोन्नतपाण्डुराजान्वयज्येष्ठम्, अध्वजं मार्गोत्पन्नं श्रमम् ॥ इन्द्रवज्रावृत्तम् ॥

अत्रासनक्रमकरैरयमाविलोऽलमायातिपातिविसरो जवनस्वरोऽधः ।
अत्रासनक्रमकरै रयमाविलोलमायाति पाति विसरोजवनस्वरोधः ॥ २२ ॥

अत्रेति ॥ अत्र देशे, आविलः सकलुषः, आयातिपातिविसरः आयं नदीसंगमम् अतिपततीत्येवंशीलो वीनां पक्षिणां सरः समुदायो यत्र सः, अधः अधस्तात् जवनस्वरः शीघ्रघोषः, अयं सरित्पतिः, अत्रासनक्रमकरैः न त्रासो येषु तैर्नक्रमकरयादोभिः, आविलोलं चञ्चलम्, रयं वेगम्, (ते) आसनक्रमकरैः आसनक्रममतिथिसत्कारं कुर्वद्भिरेव (हेतुभिः) आयाति । विसरोजवनस्वरोधः विभिरुपलक्षितसरोजवनवत्स्वीयरोधः पाति रक्षति ॥ अर्धसमयमकम् ॥ वसन्ततिलकावृत्तम् ॥

यद्वातकी यद्वलिभस्तरङ्गी तत्किं गतो वार्षिमहानियोगम् ।
सत्त्वानुकम्पाभिरतो यदब्धिस्तत्किं गतो वार्षिमहानियोगम् ॥ २३ ॥

यदिति ॥ यत् यस्मात् वातकी वाताक्रान्तः वलिभः त्वक्संकोचाक्रान्तः, तरङ्गी तरङ्गाक्रान्तः अस्ति । तत् अयमब्धिः वार्षिमहानियोगं वार्द्धक्येनापचयसंबन्धं किं गतः ।

अपि तु न ॥ यत् अयमब्धिः सत्त्वानुकम्पाभिरतः प्राणिकृपायामभिरतः । तत् ऋषिमहानियोगं मुनीनां महासेवां किं गतः । अपि तु न तस्य जडत्वात् । किंतु सत्वानां मीनादीनां कम्पनतः पश्चात् अभिरतं सामस्त्येन क्रीडनं यस्येत्यर्थः ॥ इन्द्रवज्रावृत्तम् ॥

अमुत्र मकरैः करैर्विरचिता चिता विनियतायताप्य च नभः ।
नभस्वदयुतायुता दिशमितामिता समहिमा हिमा जलततिः ॥ २४ ॥

अमुत्रेति ॥ अमुत्र देशे मकरैर्यादोविशेषैः करैः शुण्डादण्डैः विरचिता, चिता पुष्टा, विनियता विभिः पक्षिभिर्नियता संबद्धा, नभो वियद् आप्य आयता दीर्घा च, नभस्वदयुतायुता वातानामयुतैरा समन्तायुता, अमिता प्रचुरा, समहिमा माहात्म्ययुता, हिमा शीतला, जलततिः पयःपूरः दिशम् इता व्याप्ता ॥ जलोद्धतगतिः ॥

समुन्नताम्भोजकुलाभिनन्द्यां विद्याधराणामधिवासभूमिम् ।
त्वं द्वारकान्तां खलु पश्यसीमां राजन्नलङ्कामहितां परेभ्यः ॥ २५ ॥

समुन्नेति ॥ हे राजन् रावण, त्वं समुन्नताम्भोजकुलाभिनन्द्यां समुन्नतैर्मान्यैः अम्भोजकुलैर्विभीषणादिराक्षसैः प्रशस्याम् उद्दण्डकमलराजिविराजमानां वा, विद्याधराणामधिवासभूमिम् विद्याधराणां खेचराणां निवासभूमिम्, द्वारकान्तां द्वारैः कान्तां मनोहराम्, परेभ्यः शत्रुभ्योऽहिताम् इमां लङ्कां न पश्यसि किम् । पश्यस्येव ॥ भारतीये—हे राजन् युधिष्ठिर, समुन्नतां तुङ्गाम् भोजकुलाभिनन्द्यां भोजकुलेन वृष्णिकुलेनाभिनन्द्याम् । विद्याधराः शस्त्रपरिज्ञानवन्तः । परेभ्य उत्कृष्टेभ्यः अलमत्यर्थे कामहितां यथेष्टहिताम्, तामिमां द्वारकां खलु निश्चयेन पश्यसि ॥ उपजातिः ॥

कल्लोलैरिह जलधेः सुधागृहाणि व्यज्यन्ते मुरजरवा न गर्जितेन ।
नाम्भोदैः सततगतैर्गवाक्षधूपाः प्रासापि व्रजति न लक्ष्यतां पुरीयम् ॥२६॥

कल्लोलैरिति ॥ इह पुरि सुधागृहाणि जलधेः कल्लोलैः, मुरजरवा जलधेर्गर्जितेन, गवाक्षधूपाः सततगतैरम्भोदैः, न व्यज्यन्ते (अतः) प्रासापीयं पुरी लक्ष्यतां न याति ॥ प्रहर्षिणी ॥

धीरन्तुं गां गत्वा स यस्यामरस्य धीरं तुङ्गाङ्गत्वाच्छ्रियो वञ्चति द्याम् ।
रिक्तः स्वर्गेणाकारि मानोऽज्ञकेन साम्यं किं सोऽस्या याति मानोज्ञकेन॥२७॥

धीरमिति ॥ अस्या नगर्याः, गां भूमिं गत्वा रन्तुं क्रीडितुं यस्यामरस्य देवस्य धीर्बुद्धिर्भवेत्, सोऽमरः (एतस्या नगर्याः) श्रियः शोभायाः, तुङ्गाङ्गत्वात् स्फीतावयवत्वात् द्यां स्वर्गं धीरं निःक्षोभं यथा स्यात्तथा वञ्चति त्यजति । (अतः) अज्ञकेन मूर्खेण, स्वर्गेण, रिक्तः शून्यः, मानः, अकारि । स स्वर्गः (अस्याः पुरः) साम्यं तुल्यताम्, मानोज्ञकेन सौन्दर्येण किं याति । नैव याति ॥ वैश्वदेवीवृत्तम् ॥

अस्याम्बुधेर्यातनिवृत्तमार्गे पुञ्जैः स्थिता ये मणिशुक्तिशङ्खाः ।
तथा त एवार्य निवेशनेऽपि स्थिता इवान्तर्बहिरप्यमुष्याः ॥ २८ ॥

अस्येति ॥ हे आर्य, ये मणिशुक्तिशङ्खाः अस्य अम्बुधेः, यातनिवृत्तमार्गे गतागतपथे, पुञ्जै राशिभिः स्थिताः । तथा ते एव मणिशुक्तिशङ्खाः, निवेशनेऽपि राशिरचनायामपि स्थिताः । तथा च अमुष्या नगर्या अन्तर्मध्ये बहिर्बाह्यप्रदेशेऽपि ते स्थिता इव भासन्ते ॥ उपजातिः ॥

यस्याः समीपेऽम्बुनिधिर्निषण्णो रत्नैः स्फुटं भोजनभाजनानि ।
स्त्रियश्च देवाप्सरसां सदृश्यः किं वर्ण्यतेऽस्या विभवो नगर्याः ॥ २९ ॥

यस्या इति ॥ यन्निकटे समुद्रस्थितिः यस्यां भोजनभाजनानि रत्नमयानि, स्त्रियश्चाप्सरोभिस्तुल्याः । तथा चास्या नगर्या विभवो विभूतिः किं वर्ण्यते ॥

अत्र समेता मृदुरसमेता भ्रूकुटिलास्याः स्मरकुटिलास्याः ।
भूप रमन्ते ह्यनुपरमं ते वेगमनेन व्यभिगमनेन ॥ ३० ॥

अत्रेति ॥ हे भूप, अत्र देशे समेता मिलिताः, भ्रूकुटिलास्या भ्रूभङ्गभङ्गुराननाः, स्मरकुटिलास्या स्मरस्य कंदर्पस्य कुटिर्गृहं लास्यं नृत्यं यासां ताः, एताः (कामिन्यः) ते तव अनेन व्यभिगमनेन संमुखागमनेन मृदुरसं मधुररसम् अनुपरममनवरतम् वेगं शीघ्रं यथा स्यात्तथा रमन्ते क्रीडन्ते ॥ अनुकूलावृत्तम् ॥

कामिपरीता मधुविपरीता भूमिप कान्ता स्फुरदलकान्ता ।
काप्यनुगेयं लयमनुगेयं गायति मत्ता कृतरतिमत्ता ॥ ३१ ॥

कामीति ॥ हे भूमिप, कामिपरीता कामुकावेष्टिता मधुविपरीता मद्येन विपरीता सदाचारभ्रष्टा मधुगन्धेन विभिर्भ्रमरैर्व्याप्ता वा स्फुरदलकान्ता दीप्यमानकेशाग्रा मत्ता क्षीबा कृतरतिमत्ता विहितसंभोगवत्ता कापि इयं कान्ता अनुगेयं गेयस्य पश्चात् लयं द्रुतमध्यविलम्बितम् अनुगा अनुगच्छन्ती सती गायति ॥

वादयितारं प्रियदयितारं वाङ्मुखरा गाहितमुखरागा ।
तं बहुधा तु क्रमबहुधातु क्षमाधिप हित्वाभिपतति हि त्वा ॥ ३२ ॥

वादेति ॥ हे क्ष्माधिप, अरमत्यर्थम् वाङ्मुखरा वचनवाचाला, गाहितमुखरागा गाहितो व्यालोडितो मुखे रागस्ताम्बूलादिजनितो यया सा प्रियदयिता सस्नेहकामिनी क्रमबहुधातु क्रमेण परिपाट्या बहवो धातवो व्यञ्जनप्रभृतयो यस्मिन्वाद्यकर्मणि तत् बहुधा वादयितारं तं तु हित्वा परित्यज्य हि निश्चयेन त्वा त्वाम् अभिपतति संमुखमायाति ॥

मङ्गलयुक्त्या मृदुगलयुक्त्या कोऽप्यनृशंसं परमनृशंसम् ।
लोक उदारः सहसुतदारस्त्वामभियातिस्थिरमभियाति ॥ ३३ ॥

मङ्गलेति ॥ मृदुगलः कलकण्ठः, उदारः औदार्यगुणोपेतः, सहसुतदारः सुतैर्दारैश्च सहितः कोऽपि लोकः अनृशंसमघातुकम्, परमनृशंसं परमेषु उत्कृष्टेषु नृषु शंसा स्तुतिर्यस्य तं (कर्मधारयेन विरोधः) अतिस्थिरं निःक्षोभप्रकृतिं त्वाम् अभिया निःशङ्कतया मङ्गलयुक्त्याः कल्याणघटनायाः, उक्तया निर्वचनेन, अभियाति संमुखमायाति ॥

इत्यर्जुनोक्तां मनसा प्रसन्नः स्वसुः स्थिराभिः प्रतिमान्यवाग्भिः ।
राजा पुरं प्रापदरातिचारविद्रावणो धर्मकृतोद्भवस्ताम् ॥ ३४ ॥

इत्येति ॥ अर्जुना आ समन्तादृजुना मनसा प्रसन्नः अरातिचारविद् शत्रुचेष्टोपायज्ञाता धर्मकृतोद्भवः पुण्यविनाशायोत्पन्नः, रावणो राजा इति एवमुक्ताभिः स्थिराभिः विचारसहाभिः, स्वसुर्भगिन्याः शूर्पणखायाः प्रतिमान्यवाग्भिः प्रशस्यवचनैः, उक्तां तां पुरं लङ्कां प्रापत् ॥ भारतीये—मनसा प्रसन्नः, स्वसुः शोभनप्राणः, अरातिचारविद्रावणो वैरिचेष्टोपायविनाशकः, धर्मावतारो युधिष्ठिरः प्रतिमान्यवाग्भिः अर्जुनोक्ताम् अर्जुनेनोक्तामुपदिष्टाम् ॥ श्लेषः ॥ उपजातिः ॥

मनोभिरामप्रमदां विशन्तीं क्षणं निशायोपवने सुदृष्टिम् ।
उत्कण्ठभावं गमितोनतात्मा प्रचक्रमेऽभ्यन्तरमेव गन्तुम् ॥ ३५ ॥

मनोभिरामेति ॥ अनतात्मा अजितेन्द्रियः (रावणः) उत्कण्ठभावमौत्सुक्यं गमितः प्रापितः सन् सुदृष्टिं चक्षुरिन्द्रियं मनः अभिलक्षीकृत्य क्षणं विशन्तीम् बहिर्व्यापारितनेत्राम् रामप्रमदाम् सीताम् उपवने निशाय संनिवेश्य अभ्यन्तरं नगरमध्यम् एव गन्तुं प्रचक्रमे ॥ भारतीये—नतात्मा जितेन्द्रियः सविनयमूर्तिर्वा, उत्कण्ठभावमूर्ध्वग्रीवत्वम्, अभिरामप्रमदामभिरामस्य अर्जुनस्य प्रमदां द्रौपदीं मनोज्ञसुन्दरीं वा, यद्वा मनः सुदृष्टिं च उपवनं विशन्तीम् (प्रकरणादध्याहारः) ॥

विदेहसंकल्पजसंभवायाः प्रीतेस्तदालोकसमुत्सुकाभिः ।
द्रागित्यभीये पुरसुन्दरीभिः सरोदसीतापहृतौ कृतार्थः ॥ ३६ ॥

विदेहेति ॥ विदेहसंकल्पजसंभवाया जनकपुत्रीसंबन्धिन्याः प्रीतेर्हेतोः तदालोकसमुत्सुकाभिर्जनकात्मजादर्शनोत्कण्ठिताभिः पुरसुन्दरीभिर्लङ्काकामिनीभिः सरोदसीतापहृतौ रुदज्जानकीहरणे, कृतार्थः कृतकृत्यः (रावणः) द्राक् शीघ्रम् अभीये अभिगतः ॥ भारतीये—विदेहसंकल्पजसंभवायाः विदेहादनङ्गात् संकल्पजात् 'जाने संकल्पतो मूलं कामं कामस्य जायते । तन्नाशादपि तन्नाशः कथ्यते मुनिपुंगवैः ॥' इत्युक्तेर्मानसविकारजातात् संभव उत्पत्तिर्यस्यास्तस्याः तदालोकः युधिष्ठिरावलोकनम् रोदसीतापहृतौ द्यावाभूमिसंतापहरणे ॥ श्लेषः ॥

श्लथं द्विरेफाकुलपुष्पभारं रुद्धा व्रजन्ती चिहुरं करेण ।
पुङ्खानुपुङ्खं मदनेन मुक्तानुत्पाटयन्तीव शरान्पराभूत् ॥ ३७ ॥

श्लथमिति ॥ परा कामिनी द्विरेफाकुलपुष्पभारं भ्रमरैर्व्याप्तः पुष्पभारो यत्र तं श्लथं शिथिलं चिहुरं केशजालम् करेण रुद्ध्वा व्रजन्ती मदनेन मुक्तान् शरान् पुङ्खानुपुङ्खं पिच्छानुपिच्छं यथा भवेत्तथा उत्पाटयन्ती इव भवेत् ॥

अन्यात्मदर्शे मुखमीक्षमाणा तथैव हस्तेन तमुद्वहन्ती ।
किं मे मुखं रम्यमुतेन्दुरेवं तं स्पर्धया दर्शयितुं गतेव ॥ ३८ ॥

अन्येति ॥ तथैव अन्या कामिनी किं मे मुखं रम्यम् उत इन्दुः, एवं स्पर्धया मुखम् आत्मदर्शे मुकुरुन्दे दर्पणे ईक्षमाणा हस्तेन तमात्मदर्शम् उद्वहन्ती सती तं राजानं दर्शयितुं साक्षीकर्तुम् इव गता प्राप्ता ॥

महानिवेशं कुचभारमेका धृत्वा कराभ्यां त्वरितं जिहाना ।
उपर्युपर्युच्छ्वसिता नताङ्गी शून्यं तरन्तीव घटद्वयेन ॥ ३९ ॥

महानिवेशमिति ॥ एका नताङ्गी कामिनी, महानिवेशं घनपीनोन्नतस्थितिमन्तम्, कुचभारं कराभ्यां धृत्वा त्वरितं जिहाना गच्छन्ती सती घटद्वयेन शून्यमाकाशं तरन्ती इव उपर्युपरि उच्छ्वसिता ॥

विधूय लीलाम्बुजमुत्पलाशं निघ्नन्नलिं कर्णगमुत्पलाशम् ।
भ्रेजेऽङ्गनौघः सुरयो निजेन हावेन गच्छन्सुरयोनिजेन ॥ ४० ॥

विधूयेति ॥ सुरयोऽतिवेगवान्, अङ्गनौघः कामिनीसमुदायः, गच्छन्, उत्पलाशमुद्गतदलं व्याकोशम्, लीलाम्बुजं क्रीडाकमलम्, विधूय कम्पयित्वा कर्णगं श्रवणे गच्छन्तम्, उत्पलाशं कमलस्पृहम्, अलिं निघ्नन् वारयंश्च सन्, निजेन आत्मीयेन सुरयोनिजेन अमरसंभवेन हावेन भ्रेजे ॥

दष्टाधरं तिष्ठतु संप्रहारः कस्याश्चिदास्तां कटकोपवेशः ।
सर्वान्व्रजन्त्यास्त्वरितं भुजस्य विक्षेपमात्रं विवशीचकार ॥ ४१ ॥

दष्टेति ॥ संप्रहारः परस्परताडनं दष्टाधरं यथा भवेत्तथा तिष्ठतु, कटकोपवेशोऽव्यक्तकंकणरवः आस्ताम्, त्वरितं व्रजन्त्याः कस्याश्चिद् भुजस्य विक्षेपमात्रमन्दोलनमात्रं सर्वान् विवशीचकार ॥ इन्द्रवज्रावृत्तम् ॥

अंसान्तविश्रान्तकुचान्तचक्रमाश्लिष्य कान्तेन तमर्धपीतम् ।
बिम्बौष्ठमाक्षिप्य निमीलिताक्षं सीत्कारपूर्वं कुलटाभ्यधावत् ॥ ४२ ॥

अंसान्तेति ॥ कान्तेन प्रियेण अंसान्तविश्रान्तकुचान्तचक्रं स्कन्धमध्योपविष्टस्तनचूचुकं यथा स्यात्तथा आश्लिष्य आलिङ्ग्य निमीलिताक्षं यथा स्यात्तथा अर्धपीतं तं बिम्बोष्ठं सीत्कारपूर्वं यथा स्यात्तथा आक्षिप्य आकृष्य (प्रियमुखान्मोचयित्वा) कुलटा अभ्यधावत् ॥

आकृष्य हस्तं विधृतं वरित्रा काचिन्नवोढा सहसाभ्ययासीत् ।
प्रियानुबद्धं पटमालिखन्ती हित्वागमत्प्रोषितभर्तृकान्या ॥ ४३ ॥

आकृष्येति ॥ काचित् नवोढा वरित्रा वरेण विधृतं गृहीतं हस्तं आकृष्य मोचयित्वा सहसा शीघ्रं अभ्ययासीत् । अन्या प्रोषितभर्तृका प्रियानुबद्धं पटं हित्वा त्यक्त्वा आलिखन्ती सती अगमत् ॥ उपजातिः ॥

उन्मील्य रूपं सह सामि ताभिस्तत्तूलिकाभिः सहसा मिताभिः ।
वर्णोत्करैश्चित्रकरः स्मयातिक्रान्तोऽखिलश्चित्रकरः स याति ॥ ४४ ॥

उन्मील्येति ॥ चित्रकर आश्चर्यकृत् स्मयातिक्रान्तो गर्वपर्वताधिरूढः, अखिलः समस्तः चित्रकरश्चित्रशिल्पकरः, मिताभिः स्तोकाभिः तूलिकाभिश्चित्रलेखनिकाभिर्वर्णोत्करैर्हिङ्गुलहरितालिकादिभिः सामि अर्धं रूपम् उन्मील्य ताभिर्लेखनिकाभिः सहैव याति स्म ॥ अत्र कौतुकरसरसिकतया विमनस्कत्वमभिहितम् ॥ इन्द्रवज्रा ॥

वक्रोक्तिमुत्प्रेक्षणमङ्गबन्धं श्लेषं स्मरन्कृत्यबलातिमूढः ।
द्विसंधिचिन्ताकुलितो विषण्णः कविर्वियोगीव जनोऽभ्यसर्पत् ॥४५॥

वक्रोक्तीति ॥ वक्रोक्तिम् उत्प्रेक्षणमुत्प्रेक्षाम् अलंकारम्, अङ्गबन्धं पद्मादिबन्धम्, श्लेषं शब्दश्लेषमर्थश्लेषं चालंकारं स्मरन्, कृत्यबलातिमूढः कार्यसामर्थ्यानभिज्ञः, द्विसंधिचिन्ताकुलितो द्वयोः कथयोः पदयोर्वा संधेः संधानस्य चिन्तया आकुलितः, अतएव, विषण्णो विमनस्कः कविर्जनः । वक्रोक्तिं कुटिलवचनम्, उत्प्रेक्षणं रमणीरमणीयकटाक्षम्, अङ्गबन्धं चतुःषष्टिशरीरबन्धम् ऋजुविपरीतवृत्तदण्डकप्रभृतिकरणाख्यम् श्लेषमालिङ्गनं स्मरन् कृती प्रतिज्ञावान् अबलातिमूढः अनभिज्ञभार्यः द्विसंधिचिन्ताकुलितः द्वयोः स्वस्य भार्यायाश्च संधेः संधानस्य मेलनस्य चिन्तया आकुलितः विषण्णः वियोगी विप्रयोगी इव । अभ्यसर्पत् ॥ श्लेषः ॥ उपजातिः ॥

शालस्य हर्म्यस्य च गोपुरस्य पुरस्य शृङ्गेष्वतिरञ्जनेन ।
जनेन दृष्ट्यै निचितेन पूर्वापूर्वाधिरूढासुमतां छलेन ॥ ४६ ॥

शालस्येति ॥ दृष्ट्यै राज्ञो दर्शनाय पुरस्य नगरसंबन्धिनः शालस्य प्राकारस्य, हर्म्यस्य प्रासादस्य, शृङ्गेषु शिखरेषु निचितेन संवृतेन अतिरञ्जनेन अतिशयानुरागवता जनेन लोकेन 'असुमतां प्राणिनां छलेन अधिरूढा अपूर्वा पूरिव' (इयं नगरी) भाति स्म ॥

दिदृक्षमाणस्य जनस्य तस्मिन्कालेऽखिलानि क्षणमिन्द्रियाणि ।
तं नेत्रमात्रस्थितिमेव जग्मुः स्वस्थाननिर्वेदमिवागतानि ॥ ४७ ॥

दिदृक्षेति ॥ तं राजानं दिदृक्षमाणस्य द्रष्टुमिच्छोर्जनस्याखिलानीन्द्रियाणि स्वस्थाननिर्वेदमात्मीयवसतिखेदमागतानीव तस्मिन्काले क्षणं नेत्रमात्रस्थितिमेव जग्मुः ॥ उत्प्रेक्षा॥

स धृतव्यजनेन जनेन पुरं परमङ्गलमङ्गलघोषकृता ।
नगरीमभिरञ्जयता जयतादितिवाक्यविभागमितो गमितः ॥ ४८ ॥

स धृतेति ॥ धृतव्यजनेन धृततालवृन्तेन, परमङ्गलमङ्गलघोषकृता परमुत्कृष्टं मङ्गलं दूर्वाक्षतादिमङ्गलद्रव्यसंनिधानं मङ्गलघोषं गीतसूक्तपाठादि च कुर्वता, नगरीं पुरम् अभिरञ्जयता अभि सामस्त्येन रञ्जयता सुधागैरिकादिभिर्लेपयता, जनेन 'जयतात्' इति वाक्यविभागं गमितः प्रापितः स रावणो युधिष्ठिरश्च पुरं लङ्कां द्वारकां च इतः प्रविष्टः ॥ तोटकवृत्तम् ॥

स्वगोचरं जल्पमधिस्त्रि शृण्वन्संमान्यलङ्कारमणीन्निरूप्य ।
हर्म्यस्थकन्योज्झितपुष्पलाजं स राजमार्गं नृपतिः प्रपेदे ॥ ४९ ॥

स्वगोचरमिति ॥ स नृपती रावणः संमान्यलङ्कारमणीं संमाननीयलङ्कानगरीमेव रमणीं प्रियां निरूप्यावलोक्य अधिस्त्रि स्त्रीमध्ये स्वगोचरं स्वविषयकं जल्पं वृत्तान्तं शृण्वन् सन् हर्म्यस्थकन्योज्झितपुष्पलाजम् प्रासादस्थितकुमारीप्रक्षिप्तानि पुष्पाणि लाजा भृष्टव्रीहयो यत्र तं राजमार्गं प्रपेदे प्राप ॥ भारतीये—संमान्यलंकारमणीन् संमानिनः सम्यक् मां लक्ष्मीमनन्ति प्राणन्ति पुष्टिं नयन्ति तथाभूतान् अलंकारभूतान् मणीन् निरूप्य नृपतिर्युधिष्ठिरः ॥ श्लेषः ॥ उपजातिः ॥

आर्द्रां बालाश्चिक्षिपुस्तस्य शेषामुच्चैरूढा येन सा धूर्वरायाः ।
आलोकान्तं कीर्तिलक्ष्मीप्रतापैरुच्चै रूढायेन साधूर्वरायाः ॥ ५० ॥

आर्द्रामिति ॥ रूढा येन रूढो जगत्ख्यातः अयः शुभावहो विधिर्यस्य तेन, येन नृपेण वरायाः शोभनायाः, उर्वरायाः सर्वशस्याढ्यभूमेः, सा, उच्चैर्महती, धूः, आलोकान्तं लोकत्रयं यावत्, कीर्तिलक्ष्मीप्रतापैः साधु लोकप्रशंसाविषयत्वान्मनोहारि यथा स्यात्तथा उच्चैर्वाढम् ऊढा । तस्य राज्ञस्तदुपरि बाला मुग्धा आर्द्रां शेषां देवनिर्माल्यं चिक्षिपुः ॥ शालिनी ॥

विभीषणाभ्युन्नतकुम्भकर्णमुख्यैर्महानागबलैर्युतेन ।
पराक्रमेणेन्द्रजितोद्धतेन प्रत्यभ्युदीये हरिणेक्षणेन ॥ ५१ ॥

विभीषणेति ॥ विभीषणाभ्युन्नतकुम्भकर्णमुख्यैः, महानागबलैर्महानागतुल्यबलैः, युतेन युक्तेन, पराक्रमेण शत्राक्रमणकर्त्रा, उद्धतेन गर्वपर्वताधिरूढेन, हरिणेक्षणेन मृगचक्षुषा, इन्द्रजिता प्रत्यभ्युदीये प्रत्यभ्युत्थितम् ॥ भारतीये—विभीषणानि अभ्युन्नतास्तुङ्गाः कुम्भाः कर्णाः मुखानि येषां तानि तैर्विभीषणाभ्युन्नतकुम्भकर्णमुख्यैः (बहुव्रीह्युत्तरं शाखादित्वात्स्वार्थे यः) महानागबलैर्गजेन्द्रसैन्यैर्युतेन, पराक्रमेण प्रतापत इन्द्रजिता, उद्धतेन हरिणा नारायणेन ईक्षणेन अवलोकनेन प्रत्यभ्युदीये ॥ श्लेषः ॥ उपजातिः ॥

अत्र स्नुताधिकमनोजवधूतमालपत्रप्रयुक्तकुसुमाञ्जलिसिक्तमूर्तिः ।
अत्रस्नुताधिकमनोजवधूतमालमाल्येन तेन सहितः स्वगृहं विवेश ॥ ५२ ॥

अत्रेति ॥ अत्र अवसरे स्नुताधिकमनोजवधूतमालपत्रप्रयुक्तकुसुमाञ्जलिसिक्तमूर्तिः

स्रुतेन स्वेदोद्गमेनोपलक्षितो मनोजः कंदर्पो यासां ताभिर्वधूभिः तमालपत्रैः प्रयुक्तेन कुसुमाञ्जलिना सिक्ता मूर्तिर्यस्य सः, रावणः, युधिष्ठिरश्च, अत्रस्नुताधिकमनोजवधूतमालमाल्येन न त्रसनशीलभावेनाधिकेन मनोजवेन धूतानि मालमाल्यानि येन तेन, तेन इन्द्रजिता नारायणेन च सहितः सन् स्वगृहं स्वनिवासयोग्यगृहं विवेश ॥ वसन्ततिलका ॥

सुसहायतया सुसहायतया मधुरं मधुरञ्जितयाजितया ।
शमितः शमितः सहितः सहितः प्रतिवासरवासरतिं प्रययौ ॥ ९३ ॥

सुसहायेति ॥ सुसहायतया शोभना सहायता रक्षकता यस्यां तया, मधुरमत्यन्तपेशलं यथा स्यात्तथा मधुराञ्जितया मधुना वसन्तेन मद्येन वा रञ्जितया आह्लादितया, अजितया अपराजितया सुसहायतया शोभनेन मित्रसमूहेन सहितः संयुतः, शं कल्याणमितः प्राप्तः, शमितः शान्तचित्तः, सहितः हितेन संयुतः, रावणः युधिष्ठिरश्च प्रतिवासरवासरतिं प्रतिदिनं वासे रतिं प्रीतिं प्रययौ ॥ तोटकवृत्तम् ॥

तां श्रीवधूं चिन्तयतान्यभोग्यां तेन स्वसात्कर्तुमपायमानाम् ।
न शीतमुष्णं न मतं सुखाय स्वावस्थयातप्यत केवलं सः ॥ ९४ ॥

तामिति ॥ तां लोकविख्याताम्, अन्यभोग्यां राघवभोग्याम्, अपायमानां स्वसंनिधितोऽपगच्छन्तीम्, श्रीवधूं जानकीं स्वसात्कर्तुं स्वाधीनीकर्तुं चिन्तयता चिन्ताकुलेन तेन रावणेन सुखाय, शीतं श्रीगन्धकमलकर्पूरादिवस्तु न मतं नेष्टम्, उष्णं कस्तूरिकादि न मतम्। केवलं स रावणः स्वावस्थया अतप्यत ॥ भारतीये—अन्यो दुर्योधनः श्रीवधू राज्यलक्ष्मीरेव वधूः, तेन युधिष्ठिरेण ॥ श्लेषः ॥ उपजातिः ॥

त्रेपे नृपाणां समवस्थयोच्चैः सेहे न दुर्योधनकामबाधाम् ।
बालाङ्गनापाङ्गकृतापहासं रहस्यसौभाग्यमलं निनिन्द ॥ ९५ ॥

त्रेप इति ॥ रावणः, नृपाणां राज्ञां समवस्थया उच्चैरतिशयेन त्रेपे, तथा दुर्योधनकामबाधां दुःखेन योद्धुं शक्यस्य कंदर्पस्य पीडां न सेहे। रहसि एकान्ते बालाङ्गनापाङ्गकृतापहासं बालाङ्गनाभिर्मुग्धाङ्गनाभिः अपाङ्गेन कृतोऽपहासो यस्य तत् असौभाग्यमलं दौर्भाग्यरजः निनिन्द ॥ भारतीये—असौ युधिष्ठिरः रहसि दुर्योधनकामबाधां गान्धारीतनयाभिलापखेदम्। बालाङ्गनापाङ्गकृतापहासं बालैः शिशुभिरङ्गनाभिः कान्ताभिः अपाङ्गं निन्द्यं यथा भवति तथा कृतोऽपहासो यस्येत्येवं यथा स्यात्तथा भाग्यम् अलमतिशयेन ॥ श्लेषः ॥

न गुणैर्वधूभिरमितो रमितो न विलेपनं निजगृहे जगृहे ।
विभवेषु नो वशमितः शमितः स गतो यतित्वमुदितो मुदितः ॥९६॥

नेति ॥ गुणैः शौण्डौदार्यादिगुणैः अमितोऽगाधः, राजा वधूभिर्न रमितः क्रीडितः। तथा निजगृहे स्वमन्दिरे विलेपनं चन्दनादिना न जगृहे। विभवेषु वश न इतः। श-

मितः शान्तचेताः अमुदितो ग्लानः उदितः अभ्युदयं गतः स यतित्वं गतः ॥ प्रमिताक्षरावृत्तम् ॥

स वैरिणा श्रीमदनेन राजा निगूहमानो हृदयं विदीर्णम् ।
अगाधगम्भीरमुदात्तसत्त्वमाकारमग्र्यं बिभरांबभूव ॥ ९७ ॥

स इति ॥ स राजा रावणः वैरिणा श्रीमदनेन श्रीकंदर्पेण विदीर्णे विदारितं हृदयं निगूहमानः दुर्जनहासभयाद्गोपायन् सन् अगाधगम्भीरमकलनीयं, निक्षोभम्, उदात्तसत्त्वमुत्कटबलम्, अग्र्यं प्रधानम् आकारं कोपप्रसादादिज्ञापिकां शारीरप्रकृतिं बिभरांबभूव ॥ भारतीये—अनेन वैरिणा दुर्योधनेन विदीर्णं श्रीमत् हृदयम् ॥ श्लेषः ॥ उपजातिः ॥

स सदसि हृषीकेशेनोच्चैर्बलेन गरीयसा
परमतनयेनायं भ्रातृव्रजेन च संगतः ।
विलुलितकथः शस्त्रे शास्त्रे कलासु कथासु च
प्रभुरगमयत्कंचित्कालं धनंजयमूर्जयन् ॥ ९८ ॥

इति धनंजयविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये रावणपाण्डवलङ्काद्वारवतीप्रवेशकथनो नामाष्टमः सर्गः समाप्तः ।

स सदेति ॥ सोऽयं प्रभू रावणः सदसि सभायां गरीयसा गरिष्ठेन अजय्येन बलेन सैन्येन, उच्चैरत्यर्थं हृषीकेशेन इन्द्रियाधीनेन भोगाभिलाषुकेण परमतनयेन प्रधानापत्येन मेघनादेन, भ्रातृव्रजेन बिभीषणादि भ्रातृसमूहेन च संगतः सन्, शस्त्रे शास्त्रे (जातावेकवचनम्) कलासु नृत्यगीतादिषु कथासु पूर्ववृत्ताख्यानेषु च विलुलितकथः विहितविचारणश्च सन् धनं जयं च ऊर्जयन् उपार्जयंश्च सन् कंचित्कालम् अगमयत् प्रापितवान् ॥ भारतीये—हृषीकेशेन नारायणेन गरीयसा बलेन बलभद्रेण परमतनयेन परं केवलं मत इष्टः नयो नीतिर्येन तथाविधेन परेषां शत्रूणां मतो ज्ञातो नयो येन तादृशेन वा भ्रातृवर्गेण भीमादिना च संगतः सन् धनंजयमर्जुनम् ऊर्जयन् प्रौढिं नयन् ॥ श्लेषः ॥ हरिणीवृत्तम् ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीच्छोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां रावणपाण्डवलङ्काद्वारवतीप्रवेशकथनो नामाष्टमः सर्गः ।

---

नवमः सर्गः ।

तस्मिन्काले जरासंधो वैरामोघभिया युतः ।
चित्तस्थमनुजं पश्यन्दूरतः पुरुषोत्तमम् ॥ १ ॥

तथा विराधितं वैरिभीमहानियमोद्यतम् ।
उद्युक्त्याश्वासयन्ख्यातस्तं कौरव्यंशुभावहः ॥ २ ॥
पृथ्व्याः पातालङ्कान्तः श्रीगृहं प्राप्य भूषणम् ।
सीताचिन्ताकुलः कार्यं दुःखमालोचयन्स्थितः ॥ ३ ॥
अज्ञातचरितं शत्रुं श्रीवधूहरणोद्यतम् ।
विरित्सन्विधुना धौते सौधे शीतेऽप्यतप्यत ॥ ४ ॥

(चतुर्भिः कुलकम्)

तस्मिन्नित्यादि ॥ तस्मिन् काले सीताहरणसमये, जरासंधो जरया वार्धक्येन असंधा असंबन्धो यस्य सः, अघभिया पापभयेन युतः, दूरतः चित्तस्थं मनोगतं पुरुषोत्तमं लक्ष्मणनामानम् अनुजं कनिष्ठभ्रातरम् पश्यन्, वैरिभीमहानियमोद्यतं वैरिभ्यां खरदूषणाभ्यां भियां भये सति महानियमे 'वैरिवधपर्यन्तं स्रक्चन्दनादि न उपभोक्ष्ये' इत्याकारके व्रते उद्यतं तं विराधितं खरदूषणनिर्घाटितं चन्द्रोदरपुत्रं तथा लक्ष्मणवत् उद्युक्त्या महाविचारणया आश्वासयन्, कौ क्षितौ ख्यातः, रव्यंशुभावहः सूर्यकरकान्तिधारी भास्वति किरणसत्तां हन्ति स वा, सीताचिन्ताकुलो जानकीहरणचिन्तया व्याकुलः सन् पृथ्व्याः भूषणं पातालङ्कान्तः पातालङ्कामध्ये श्रीगृहं विलासमन्दिरं प्राप्य दुःखं, यथा स्यात्तथा आलोचयन् अन्तर्मुखाकारवृत्त्या व्यालोकमानः सन् स्थितो रामोऽज्ञातचरितमविज्ञातचेष्टं, श्रीवधूहरणोद्यतं जानकीहरणोद्यमं, शत्रुं रावणाभिधं विरित्सन् संहर्तुमिच्छन् विधुना चन्द्रेण धौते सुधीकृते शीते शीतलेऽपि अतप्यत ॥ भारतीये—तस्मिन्काले शरत्समये, वैरामोघभिया वैरेण अमोघया भिया युतः, चित्तस्थमनुजं मनोगतमनुष्यं, पुरुषोत्तमं नारायणं, दूरतः दूरस्थं पश्यन्, वैरि-भीम-हानि-यमोद्यतं वैरिभूत-भीमसेनप्राणत्यागे व्रतोद्यमपरं विराधितं पाण्डवेभ्यो द्रुह्यन्तं, तं कौरव्यं दुर्योधनम्, उद्युक्त्या उच्चविचारणेन आश्वासयन्, शुभावहः शुभमावहति शुभं न वहति वा, पृथ्व्या भूमेः पाता, कान्तः कमनीयः, सीताचिन्ताकुलः भूमिस्थितिचिन्ताकुलः सन्, आललं मनोहरं, भूषणं श्रीगृहं लक्ष्मीरूपगृहं प्राप्य कार्यम् आलोचयन् दुःखं यथा स्यात्तथा स्थितः, जरासंधो तन्नामा नारायणप्रतिकूलः । श्रीवधूहरणोद्यतं लक्ष्मीललनापहारोद्यतम् । विधुना कर्पूरेण ॥ श्लेषः ॥ सर्गेऽस्मिन्ननुष्टुप्छन्दः ॥

सत्यग्रेसरसीतापहारिण्येषेत्यलोकयत् ।
यां यां तया तयारत्या दूनः परमकाष्ठया ॥ ५ ॥

सत्येति ॥ एषा सत्यग्रेसरसीतापहारिणी सतीनां पतिव्रतानामग्रेसरायाः सीताया अपहारिणी, इति प्रकारेण यां यामलोकयद् दृष्टवान् तया तया परमकाष्ठया अतिशयितया अरत्या रामो दूनः ॥ भारतीये—सती मनोहारिणी, तापहारिणी, एषा सरसी अग्रे वर्तते इति

यां यां सरसीम् अलोकयत् परमकाष्ठया परमोत्कर्षप्राप्तया अरत्या अप्रीतिमत्या तया तया सरस्या जरासंधः दूनः ॥ श्लेषः ॥

स्तनभारोऽधिकगुरुर्मध्यस्थो बलिविभ्रमः ।
तथापि साधुसंयोगात्तं न जहुः पुरेऽङ्गनाः ॥ ६ ॥

स्तनेति ॥ यद्यपि स्तनभारः अधिकगुरुर्घनपीनोन्नतः, बलिविभ्रमो बलित्रयोल्लासो मध्यस्थो मध्यदेशवर्ती, सकलजनमनोहारकोऽस्ति । तथापि तद्द्वयोऽपि कामिन्यस्तं रामं जरासंधं वा साधुसंयोगात् पुरे न जहुः ॥ शत्रुपराजयमन्तरेण मनोहार्यपि न रोचते इति भावः ॥

कल्याणनिक्कणा वीणा श्रुती नृत्यं विलोचने ।
हरिचन्दनमप्यङ्गं तानि तस्य न पस्पृशुः ॥ ७ ॥

कल्याणेति ॥ वीणा-नृत्य-चन्दनानि श्रोत्र-लोचन-शरीराणां सुखाय नासन् ॥

मत्तवारणमारुह्य संदशन्दशनच्छदम् ।
जातु भ्रूभङ्गविक्षेपमीक्षांचक्रे दिगन्तरम् ॥ ८ ॥

मत्तेति ॥ जातु कदाचित् दशनच्छदमोष्ठं संदशन् मत्तवारणं बालाणकम् आरुह्य भ्रूभङ्गविक्षेपं भ्रूभङ्गभङ्गुरललामं यथा स्यात्तथा दिगन्तरम् ईक्षांचक्रे ॥ भारतीये—मत्तवारणं मत्तदन्तिनम् ॥

कदाचित्कृतनेपथ्यं स तुरङ्गमधिष्ठितः ।
उपरुद्धः क्षणं तस्थौ तैः सुमित्रात्मजादिभिः ॥ ९ ॥

कदाचिदिति ॥ स रामः कदाचित् कृतनेपथ्यं कल्पितसङ्ग्रामरङ्गं, तुरङ्गं चित्तम् अधिष्ठितः सन् तैः सुमित्रात्मजादिभिः लक्ष्मणविराधितप्रभृतिभिः उपरुद्ध आवृतः सन् क्षणं तस्थौ । भारतीये—कृतनेपथ्यं विहितभूषणं तुरङ्गमश्वम्, सुमित्रात्मजादिभिः सुसुहृत्पुत्रप्रभृतिभिः ॥ श्लेषः ॥

प्रौढे मन्त्रिणि तद्राज्यं प्राज्यं क्षिप्त्वा विराधिते ।
भोगेषु विरतोऽरातिघातदीक्षामुपाददे ॥ १० ॥

प्रौढ इति ॥ प्रौढे अजय्ये मन्त्रिणि हेयोपादेयतत्त्वविवेचके विराधिते चन्द्रोदरपुत्रे प्राज्यं सर्वाङ्गपूर्णं तद्राज्यं पाताललङ्कास्थां तदीयराजधानीं क्षिप्त्वा दत्त्वा भोगेषु ताम्बूलमाल्यादिषु विरतो विरक्तः स रामोऽरातिघातदीक्षां रावणवधदीक्षाम् उपाददे ॥ भारतीये—अविराधिते अनुकूले ॥ श्लेषः ॥

अन्यदा साहसगतेर्विघातेन सदागतेः ।
उद्धूतभूपरागेण विलोलितगृहाश्रमः ॥ ११ ॥

उत्सन्नगौरवकुलः पुंनागोल्लासवर्जितः।
निरन्तरवितापात्मा निजभूमहिमोज्झितः॥ १२॥
येन श्रीरुद्धता मुक्ताफलसंघातपत्रजा।
तेन श्रीवृक्षमात्रेण किंचिदालक्षितोदयः॥ १३॥
उद्गिरन्निव संतापमभ्यग्रामन्दमाकुलम्।
सुग्रीवोपेतदारं तं नृपतिं शुचिराययौ॥ १४॥

(चतुर्भिः कुलकम्)

अन्यदा अन्यस्मिन् काले उद्भूतभूपरागेण उद्भूतो भूपस्य रागो येन तेन सदागतेरप्रतिहतशासनस्य साहसगतेर्विटसुग्रीवस्य विघातेन विलोलितगृहाश्रमः परित्यक्तगृहस्थाश्रमस्त्यक्तभार्यः, उत्सन्नगौरवकुलः विध्वस्तमाहात्म्यकान्वयकः, पुंनागोल्लासवर्जितः प्रधानपुरुषानन्दवर्जितः, निरन्तरवितापात्मा सततसंतप्तात्मा, निजभूमहिमोज्झितः स्वीयक्षितिमाहात्म्याभ्यामुज्झितः, येन उद्धतोल्बणा फलसंघातपत्रजा फलानां भोगोपभोगलक्षणानां संघातेन संपत्त्या पत्रैर्गजतुरगादिभिश्च जाता, श्रीर्लक्ष्मीर्मुक्ता। यद्वा मुक्ताफलसंघातपत्रजा मुक्ताफलानां संघो यत्र तस्मादातपत्राज्जाता श्रीः शोभा उद्धता विध्वस्ता। तेन श्रीवृक्षमात्रेण दक्षिणस्तनोपरिशुभलक्षणविशेषेण, किंचित्स्वल्पम् आलक्षितोदयः, शुचिरकुटिलः सुग्रीवः संतापम् उद्गिरन् इव सन्, दमाकुलं दण्डनीतिव्यग्रम्, अपेतदारमपगतभार्यं तं नृपतिं रामम् अभ्यग्रामसंमुखं यथा स्यात्तथा आययौ॥ भारतीये—उद्भूतभूपरागेण उद्भूतः भुवः परागो येन तेन, साहसगतेः शीघ्रप्रवर्तमानस्य, सदागतेर्वायोः, विघातेनोपद्रवेण, विलोलितगृहाश्रमः विक्षिप्तमन्दिरतपस्विवसतिः, उत्सन्नगौरवकुलः नाशितसितबकुलः, पुंनागोल्लासवर्जितः पुंनागानां वृक्षविशेषाणामुल्लासेन पल्लवितकुसुमितभावेन वर्जितः, निरन्तरवितापात्मा अनन्तेन रवितापेन युतात्मा, निजभूमहिमोज्झितः स्वीयबाहुल्येन दूरीकृतशीतः, येन फलसंघातपत्रजा फलसमूहपर्णजाता उत्कटा शोभा मुक्ता तेन श्रीवृक्षेण पिप्पलवृक्षेण, संतापमुद्गिरन् इव शुचिर्ग्रीष्मः, अभ्यग्रामन्दम् अभिनवजवम्, आकुलं व्यग्रं, सुग्रीवोपेतदारं शोभनग्रीवायुक्तकलत्रकम्, तं नृपतिं जरासंधम्॥ श्लेषः॥

निपीड्यासनमावेद्य स्वं साहसगतिं तथा।
प्रवृद्धमायासमयं स प्रतापमपप्रथत्॥ १५॥

निपीड्येति॥ स सुग्रीवः, आसनं निपीड्य उपविश्य स्वं स्वीयं साहसगतिं विटसुग्रीवम् आवेद्य निरूप्य प्रवृद्धमायासमयं विस्तारितकौटिल्यकालम् विटसुग्रीवस्य प्रतापम् अपप्रथत् प्रथयामास॥ भारतीये—स ग्रीष्मः साहसगतिं साहसी गतिर्यस्य तादृशं स्वम् आवेद्य असनं वीजवृक्षं निपीड्य प्रवृद्धं प्रौढिमन्तम्, आयासमयम् आयासप्रचुरम्, स्वस्य प्रतापम् अपप्रथत्॥ श्लेषः॥

जातं रणरणोपेतं सांराविणमितस्ततः ।
प्रभञ्जनोद्यतं तस्य मदाघातकरं महत् ॥ १६ ॥

जातमिति ॥ रणरणोपेतं शस्त्रध्वनिसंयुक्तं प्रभञ्जनोद्यतं विध्वंसनोपेतं मदाघातकरं मद्विनाशकरं, महत् गरिष्ठं तस्य वालिनः, सांराविणं समन्ततो ध्वनितम्, इतस्ततः सर्वतः, जातम् ॥ भारतीये—तस्य ग्रीष्मस्य, रणरणोपेतम् शब्दानुगतशब्दोपेतं प्रभञ्जनोद्यतं महावातकृतं मदाघातकरमूष्मातिशयेन हर्षविनाशकरम् ॥

मज्जनेषु मनो गूढं विपरीतजलात्मसु ।
प्रकृत्या यः पुरस्तेषां समापातयदङ्गिनाम् ॥ १७ ॥

मज्जनेष्विति ॥ तेषाम् अङ्गिनां प्राणिनां पुरः अग्रेसरः, यः सुग्रीवविटः, प्रकृत्या स्वभावेन विपरीतजलात्मसु धर्म्यपथविरुद्धजडात्मसु, मज्जनेषु मदयन्ति । 'मदी हर्षग्लेपनयोः' । तेषु जनेषु, गूढं मनः समापातयत् समासक्तवान् ॥ भारतीये—प्रकृत्या पुरः पुलो महान् यो ग्रीष्मस्तेषां प्राणिनां मनो गूढं निविडं यथा स्यात्तथा, विपरीतजलात्मसु पक्षिव्याप्तवारिपूर्णेषु, मज्जनेषु वाप्यादिस्नानस्थानेषु ॥

उच्चैरंहाः प्रतापेन कालः साक्षाद्भयानकः ।
तथामेयं पुरं देशं विश्वं विषमयोजयत् ॥ १८ ॥

उच्चैरिति ॥ उच्चैरंहा विपुलवेगः, साक्षात् काल इव भयानकः प्रतापेन विषमयो गरलमयो यः विश्वमशेषम् अमेयं पुरं नगरं देशं विषयम् अजयत् ॥ भारतीये—तीव्रवेगः, प्रतापेन अत्यूष्मणा भयानकः कालो ग्रीष्मः अमेयं गणनातीतम् पुरं देशं विश्वं लोकं कर्म विषं जलम् जलाय अयोजयत् प्रेरयामास ॥

उत्तुङ्गश्यामलकुचा तेन रम्या प्रियालकैः ।
वनाधिदेवतालक्ष्मीः सर्वेषां पश्यतां हृता ॥ १९ ॥

उत्तुङ्गेति ॥ तेन वालिना उत्तुङ्गश्यामलकुचा पीनकृष्णस्तनी, अलकैः कुटिलकेशै रम्या, वनाधिदेवता आलयाधिदेवतारूपा प्रिया भार्या लक्ष्मीः सर्वेषां भूचरखेचराणां पश्यतां सतां हृता ॥ भारतीये—तेन ग्रीष्मेण उत्तुङ्गश्यामलकुचा अत्युच्चकृष्णलकुचवृक्षवती, प्रियालकै राजादनै रम्या मनोहरा वनाधिदेवतालक्ष्मीर्वनस्याधिदेवतैव लक्ष्मीर्हृता ॥

चन्दनस्यन्दसान्द्राङ्गी मल्लिकामालभारिणी ।
तारेन्दुवदना वाला सापि तेनोपतापिता ॥ २० ॥

चन्दनेति ॥ तेन साहसगतिना, चन्दनस्यन्दसान्द्राङ्गी श्रीखण्डलेपलिप्ताङ्गी, मल्लिकामाल्यधारिणी मल्लिकाया मालां बिभर्ति तच्छीला, इन्दुवदना चन्द्रानना वाला मुग्धा अपि सा तारा उपतापिता ॥ भारतीये—चन्दनस्यन्दसान्द्राङ्गी चन्दनस्यन्दवत्कोमला, माल्यभारिणी पुष्पभारवती तारेन्दुवदना शारदचन्द्रोज्वला वाला नूलप्ररोपिता सा मल्लिकापि ॥

साकृतोच्छ्वसितावश्यं महिषी सकलाकुला।
सुश्रृङ्गारार्यतापाङ्गविभ्रमात्तं जलाशयम् ॥ २१ ॥

साकृतेति ॥ हे आर्य, उच्छ्वसिता प्राणभूता, सकला कलायुता, आकुला व्यग्रा, सुशृङ्गारा प्रशस्तभूषणा, सा लोकप्रसिद्धा, महिषी साहसगतेर्वालिनः पट्टराज्ञी ताराभिधाना, जडाशयं मूढाशयम्, तं साहसगतिं वालिनम्, तापाङ्गविभ्रमात् तापाङ्गस्य विशेषेण भ्रमणात्, वश्यं वशवर्तिनम् अकृत चकार ॥ भारतीये—कृतोच्छ्वसिता विहितोच्छ्वसना सकला समस्ता, आकुला धर्माधिक्येन व्यग्रा, सुश्रृङ्गा सा महिषी सैरिभपत्नी अपाङ्गविभ्रमात्तं कटाक्षविक्षेपक्रोडीकृतं यथा स्यात्तथा जलाशयं सरोवरम्, अवश्यम् आरार्यत कुटिलं गतवती ॥ श्लेषः ॥

सैकतेषु प्रियोपेता न तत्संचारभीरवः।
संचरन्ति स्मराजीषुनिबद्धा राजहंसकाः ॥ २२ ॥

सैकेति ॥ तत्संचारभीरवः तस्य साहसगतेः संचाराद्भीरवः, राजहंसकाः क्षत्रियसमूहाः, स्मराजीषुनिबद्धाः कंदर्पसङ्ग्रामशरनियन्त्रिता अपि प्रियोपेता भार्यायुताः सन्तः सैकतेषु न संचरन्ति ॥ भारतीये—तत्संचारो ग्रीष्मसंचारः, राजीषु श्रेणिषु निबद्धा नियमितगात्राः राजहंसका मुक्ताहारपरिच्छदपक्षिसमूहाः न संचरन्ति स्म ॥ श्लेषः ॥

लोको वितपमानेन तप्तस्तेन गृहं गृहम्।
अनुप्रवेशं निभृतमध्यास्तेहितकाम्यया ॥ २३ ॥

लोक इति ॥ वितपमानेन दीप्यमानेन तेन साहसगतिना तप्तः क्लेशितो लोको गृहं गृहं अनुप्रवेशं प्रविश्य ईहितकाम्यया मनोवाञ्छया निभृतं निश्चलम् अध्यास्त ॥ भारतीये—तेन ग्रीष्मेण, हितकाम्यया सुरताभिलाषेण, अध्यास्ते ॥ श्लेषः ॥

मातरिश्वैकवृत्तेऽस्मिन्कालान्तरवितापिनि।
तप्तं नाथहरिकुलं निलीनं वृक्षकुक्षिषु ॥ २४ ॥

मातरिश्वेति ॥ हे नाथ, मातरि जनन्यां श्वैकवृत्ते शुन इव एकं वृत्तं यस्य तादृशि, कालान्तरवितापिनि समयान्तरप्रतपनशीले, अस्मिन् साहसगतौ सति, तप्तं दुःखितं हरिकुलं वानरकुलं वृक्षकुक्षिषु निलीनम् ॥ भारतीये—मातरिश्वैकवृत्ते वायौ एकं वृत्तं जीवनं यत्र तत्र, कालान्तरवितापिनि प्रलयतुल्यसूर्यतापयुते, अस्मिन्ग्रीष्मे, नाथहरिकुलं वृषसमूहः वृक्षच्छायायाम् ॥ श्लेषः ॥

परोत्तापनशीलस्य पांसुलस्य चितौजसः।
दुर्वृत्तं दुःसहं तस्य दुर्जनस्येव लक्षितम् ॥ २५ ॥

परोत्तापेति ॥ परोत्तापनशीलस्य परपीडनशीलस्य, पांसुलस्य पुंश्चलस्य सदोषस्य धूलिमतश्च, चितौजसः दुष्टपराक्रमस्य दुष्टतेजसश्च ॥

गृहवापीषु सोपानपङ्क्तयस्तस्य तापतः।
पानीयपथसंचारैर्विमुक्ताः प्रतिवासरम् ॥ २६ ॥

गृहेति ॥ तस्य साहसगतेः, तापत उपद्रवात्, पानीयपथसंचारैः जलनालिकासदृशसंचारैः सततनिर्गमप्रवेशैः गृहवापीषु गृहेष्वेव वापीषु, सोपानपङ्क्तयः प्रतिवासरं विमुक्ता जायन्ते ॥ भारतीये—तस्य ग्रीष्मस्य, पानीयपथसंचारैः कल्लोलैः, गृहवापीषु गृहतुल्यदीर्घिकासु ॥ श्लेषः ॥

विहाय स्वानि सद्मानि तत्प्रचारविशङ्कया।
दिनं गमितवन्तोऽन्ये वनदुर्गेषु निद्रया ॥ २७ ॥

विहायेति ॥ तस्य साहसगतेर्ग्रीष्मस्य च। वनं विपिनं जलं च। साहसगतेर्भयं ग्रीष्मस्य स्वरूपं वर्णितम् ॥

संतापवद्दिनं जातं निशा क्रशिमयोजिनी।
अहो प्रतापो यत्तस्य बाधानिष्ठं दिवानिशम् ॥ २८ ॥

संतापेति ॥ संतापवत् संतापयुक्तं तापयुक्तं च, क्रशिमयोजिनी कृशतां योजयति कृशतया युज्यते च या, बाधानिष्ठं पीडाजनकम् ॥

उद्दीपितोऽर्यमायाभिर्निजप्रकृतिभिर्जनम्।
अतापयदसावेवं तीव्राणां हीदृशी गतिः ॥ २९ ॥

उद्दीपित इति ॥ हे अर्य, निजप्रकृतिभिरुद्दीपित उग्रः, असौ साहसगतिर्मायाभिर्जनमेवम् अतापयत्। तीव्राणां गतिरीदृशी भवति ॥ भारतीये—याभिर्निजप्रकृतिभिः, अर्यमा सूर्य उद्दीपितः, ताभिरेव असौ ग्रीष्मः ॥ श्लेषः ॥

तथावस्थं तमालोक्य तथा च क्रीडनोचितम्।
रिपुमुद्बाधितुं पापच्छिद्रामोघधियोद्यतः ॥ ३० ॥

तथेति ॥ पापच्छिद् पापहारको रामस्तथावस्थं तं सुग्रीवम् आलोक्य तथा तथावस्थम् क्रीडनोचितं जनोपद्रवेण खेलनयोग्यम्, रिपुं साहसगतिम् उद्बाधितुम्, व्यापादयितुम् अमोघधिया पापबुद्ध्या उद्यतः ॥ चक्री जरासंधः, तं शुचिसमयम्, आलोक्य, ईडनोचितं स्तुतियोग्यं, रिपुं नारायणं पापच्छिद्रामोघधिया पापद्वारेष्वप्रतिहतबुद्ध्या ॥ श्लेषः ॥

पश्यन्निव पुरः शत्रुमुत्पतन्निव खं मुहुः।
निगिलन्निव दिक्चक्रमुद्गिलन्निव पावकम् ॥ ३१ ॥
संहरन्निव भूतानि कृतान्तो विहरन्निव।
ग्रीष्माद्यर्कपदार्थेषु चतुर्थ इव कश्चन ॥ ३२ ॥

प्रमत्तानेकपालोलमुच्चैरथनिरन्तरम् ।
प्रचण्डतरसामन्तं द्विषो दण्डमयोजयत् ॥ ३३ ॥

(त्रिभिः कुलकम्)

पश्यन्नित्यादि ॥ अथ पुरोऽग्रतः, शत्रुं पश्यन्निव, खं गगनं मुहुरुत्पतन्निव, दिक्चक्रं निगिलन्निव, पावकमुद्गिलन्निव, भूतानि संहरन् इव, विहरन् क्रीडन् कृतान्त इव, ग्रीष्माग्न्यर्कपदार्थेषु कश्चन चतुर्थ इव, उच्चैरत्यर्थं प्रमत्तानेकपालः प्रकृष्टाभिमानाननेकान् पालयति, स रामः प्रचण्डतरसा प्रकृष्टवेगेन अलमत्यर्थम् अमन्तं रोगवन्तं दण्डं दण्डनीतिं द्विषः शत्रोः निरन्तरं सातत्येन अयोजयत् । यद्वा दण्डमयः प्रमत्तानेकपालः प्रमत्तान्प्रमादिनो जनान् अपायात्पालयति स रामः प्रचण्डतरसाम् तीव्रवेगानाम् अन्तं नाशकरं यथा स्यात्तथा द्विषः शत्रून् अजयत् ॥ भारतीये—प्रमत्तानेकपालोलं प्रमत्तैः प्रक्षीवैरनेकपैर्गजैरालोलं चञ्चलम्, प्रचण्डतरसामन्तं प्रचण्डतराः सामन्ता यत्र तादृशम्, उच्चैरथनिरन्तरम् उच्चैर्महान्तो रथा निरन्तरा यत्र तादृशम्, दण्डं सैन्यम् द्विषः शत्रुमुद्दिश्य अयोजयत् ॥ श्लेषः ॥

अधिष्ठितोऽस्त्रविद्याभिर्वीरश्रीलक्ष्मणान्वितः ।
विजजृम्भे तमुद्देशं विक्षेपो व्याप्य विद्विषः ॥ ३४ ॥

अधिष्ठित इति ॥ अस्त्रविद्याभिः यन्त्रमुक्त-पाणिमुक्त-पाणियुक्तेति त्रिविधैरस्त्रैः विद्याभिः शास्त्रैश्च अधिष्ठितः समाश्रितः, वीरश्रीलक्ष्मणान्वितः जयलक्ष्म्युपलक्षितलक्ष्मणेनान्वितः, विक्षेपः परित्यक्तकालयापनः, रामः, तं साहसगतिम् उद्देशम् उद्दिश्य, विद्विषः शत्रून् व्याप्य विजजृम्भे प्रज्वलति स्म ॥ भारतीये—वीरश्रीलक्ष्मणा जयलक्ष्मीचिह्नेनान्वितः, तं नारायणम् ॥ श्लेषः ॥

वज्रावर्तं धनुर्मित्रमिवाकृष्य निपीडितम् ।
तं नातिसंदधे को वा नम्रात्मा व्यभिचारकः ॥ ३५ ॥

वज्रेति ॥ आकृष्य निपीडितम्, वज्रावर्तं तन्नाम धनुः 'मित्रमिव' तं रामं न अतिसंदधे वञ्चयति स्म । नम्रात्मा व्यभिचारको व्यभिचारी कः । कोऽपि न ॥ भारतीये—वज्रावर्तं वज्रस्येवावर्तो यस्य तं दण्डं सैन्यम् ॥

समासवदसौ लोपं दाहं मदनबाणवत् ।
विध्वंसघटनां राहुरिव कर्तुं समुद्यतः ॥ ३६ ॥

समासेति ॥ असौ रामो दण्डश्च, समासवत् लोपम्, मदनबाणवत् कंदर्पशरवत् दाहम्, राहुरिव विध्वंसघटनां चन्द्रार्कग्रासं विनाशयोजनां च, कर्तुं समुद्यतः ॥ श्लेषः ॥

अस्त्राणि यन्त्रमुक्तानि तस्मिन्देशे समन्ततः ।
निर्घाता इव निष्पेतुर्घोरसंहारहेतवः ॥ ३७ ॥

अस्त्राणीति ॥ तस्मिन्देशे किष्किन्धाख्ये, सौराष्ट्राख्ये च ॥

कलत्रपुत्रमित्राणि गृहीत्वा तत्र ते जनाः।
यथायथं पलायन्ते भाविभद्रं हि जीवितम् ॥ ३८ ॥

कलत्रेति ॥ तत्र किष्किन्धायां सौराष्ट्रे च ॥ अर्थान्तरन्यासः ॥

ततो बलेन बाल्येऽपि सहजेन कृतायतिः।
सर्वार्जुनमयोदात्तनायकाभरणान्वितः ॥ ३९ ॥
परदारग्रहाविष्टः स्पष्टमायोजितायुधः।
दिव्यान्वयोऽत्र सुग्रीवरूपः कोपारुणेक्षणः ॥ ४० ॥
कृत्वोच्चैरथवेगेन केशवस्त्रातिसंयतिम्।
निर्ययौ साहसगतिः सभीमः संयुगं प्रति ॥ ४१ ॥

(त्रिभिः कुलकम्)

तत इत्यादि ॥ अथानन्तरं ततस्तन्नगराद्, बाल्येऽपि सहजेन अकृत्रिमेण बलेन पराक्रमेण कृतायतिर्विहितप्रसिद्धिः, सर्वार्जुनमयोदात्तनायकाभरणान्वितः सर्वैः समस्तैरर्जुनमयैः सुवर्णविकारभूतैरुदात्तनायकैर्दीप्युत्कटैराभरणैरन्वितः, परदाराग्रहाविष्टः परकीयदारेष्वाग्रहेणाविष्टः, स्पष्टमायो व्यक्तकौटिल्यः, जितायुधोऽभ्यस्तशस्त्रः, दिव्यान्वयो दिव्यानां देवानां संततिः, सुग्रीवरूपः सुग्रीवतुल्यरूपधारी, कोपारुणेक्षणः क्रोधलोहितलोचनः, भीमो भयानकः स लोकप्रसिद्धः साहसगतिर्वालिनामा, उच्चैरत्यर्थं, केशवस्त्रातिसंयतिं केशानां चिहुराणां वस्त्राणां वाससां च अतिसंयतिम् अतिशयेन बन्धनं कृत्वा वेगेन संयुगं प्रति निर्ययौ ॥ भारतीये—ततो द्वारकायाः, कृतायतिर्विहितोत्तरकालफलः, सर्वार्जुनमयोदात्तनायकाभरणान्वितः सर्वैरर्जुनमयैर्धनंजयहेतुकैरुदात्तनायकैरुग्रस्वामिभिरेव आभरणैरन्वितः, परदाराग्रहाविष्टः परेषां शत्रूणां दारे विदारणे आग्रहाविष्टः, स्पष्टम् आयोजितायुधः आत्मसात्कृतायुधः, दिव्यान्वयो मनोहरवंशः, सुग्रीवरूपः शोभनग्रीवायुतरूपः, साहसगतिः आ ईषत् हसेन हासेन सहिता गतिर्यस्य स्मितपूर्वगामी, सभीमः भीमेन वृकोदरेण सहितः, केशवः त्रातिसंयतिं सन्नाहबन्धनं कृत्वा उच्चैरथवेगेन उच्चैः स्यन्दनरंहसा सहजेन बन्धुना बलेन बलभद्रेण सह ॥ श्लेषः ॥

निषेकदिवसः कच्चिदुपालिङ्गन्नु किंचन।
प्राणिनामपमृत्युः स्विदिति लोकं विशङ्कयन् ॥ ४२ ॥
आलीढपदविन्यासमध्यमध्युषितं जगत्।
अमंस्तोपनतं विश्वं सहसाकृष्टकार्मुकः ॥ ४३ ॥ (युग्मम्)

निषेकेति ॥ नु अहो, कच्चित् कोमलामन्त्रणे प्राणिनां निषेकदिवसो मरणदिनं किंचन उपालिङ्गन्, स्वित् प्राणिनामपमृत्युः इति एवंप्रकारेण लोकं विशङ्कयन् विशेषेण शङ्कां

जनयन्, सहसा आकृष्टकार्मुकः साहसगतिः केशवो भीमो वा विश्वं जगत् उपनतमानुषङ्गिकम्, आलीढपदविन्यासमध्यम् आलीढेन दक्षिणजङ्घाप्रसारणपूर्वकवामजङ्घासंकोचरूपस्थानकविशेषेण पदविन्यासयोर्मध्यम् अध्युषितम् अमंस्त ॥

ऋजूपकारि निर्व्याजं कृच्छ्रेष्वव्यभिचारिणम्।
स मित्रमिव निर्दोषं दूरं चिक्षेप मार्गणम् ॥ ४४ ॥

ऋज्विति ॥ स साहसगतिः केशवश्च, ऋजूपकारि निर्व्याजं ऋजुं सरलं उपकारिणम् निश्छद्मानम् (कर्मधारयः), कृच्छ्रेषु व्यसनेषु अव्यभिचारिणमवञ्चकम्, निर्दोषं किट्टमलरहितं मार्गणं बाणं [मित्रमिव] दूरं चिक्षेप ॥ मित्रं तु ऋजु, उपकारि, निर्व्याजं निष्कपटं, निर्दोषं निष्पापं, दूरं (स्वकार्यसाधनाय) ॥

कोटिशः कुंजरबलं शरपञ्जरमध्यगम्।
रामभद्रं जनोऽद्यापि वनस्थितमिवैक्षत ॥ ४५ ॥

कोटिश इति ॥ कोटिशः कोटिकोटिसंख्यापरिमितो लोको जनः कुंजरबलं कुंजराणामिव बलं यस्य, तं रामभद्रं राघवं शरपञ्जरमध्यगं बाणश्रेणीमध्यगतम् अद्यापि वनस्थितमिव ऐक्षत ॥ वनस्थितं तु, कुंजरबलं कुंजेषु रवं प्रतिध्वनिं लाति तम्, शरपञ्जरमध्यगं जलस्थानमध्यास्थितम् ॥ भारतीये—रामभद्रं रामं मनोज्ञं सर्वलक्षणसंपूर्णम्, कोटिशः कुंजरबलं नागानां सैन्यम् ॥

दष्टदन्तच्छदं बद्धभ्रूभङ्गं मुक्तहुंकृति।
ग्रहाविष्टमिवानिष्टं घोरं युद्धमिहाभवत् ॥ ४६ ॥

दष्टेति ॥ दष्टदन्तच्छदमित्यादीनि त्रीणि युद्धमित्यस्य क्रियाया वा विशेषणानि ॥

अपसस्रे जनैरुस्राः सस्रेरन्तर्हिताः शरैः।
मुक्तकेशा इवाभूवन्दिग्दारा धूमकेतुभिः ॥ ४७ ॥

अपसेति ॥ जनैःअपसस्रे अपसृतम्, शरैः सस्रेः सूर्यस्य उस्राः किरणाः अन्तर्हिताः, दिग्दारा दिगङ्गनाः धूमकेतुभिः मुक्तकेशा इव अभूवन् ॥

नष्टं भीतैः स्थितं धीरैः स्पष्टं दृष्टं सुरासुरैः।
भीमेन बलरामेण गर्जितं सव्यसाचिना ॥ ४८ ॥

नष्टमिति ॥ भीतैर्नष्टमदृष्टिपथं गतम्, धीरैः स्थितम्, सुरासुरैः स्पष्टं यथा स्यात्तथा दृष्टम्, भीमेन भयानकेन, सव्यसाचिना सव्यं वामं सचते प्रणतीक्रियते इत्येवंशीलेन वामप्रदेशप्रणताङ्गविन्यासेन, बलरामेण बलिना रामेण गर्जितम् ॥ भारतीये—भीमेन वृकोदरेण, बलरामेण बलभद्रेण, सव्यसाचिना अर्जुनेन ॥

स दुरानमकोदण्डो मायावी विद्रुतो हतः।
नरघोराहवे जातः कुले शूरोऽपि को जयेत् ॥ ४९ ॥

स दुरेति ॥ दुरानमकोदण्डो दुःखेनानमनशीलः कोदण्डो यस्य स मायावी ससाहसगति-र्विद्रुतः पलायितः सन् आहवे संख्ये हतः। रघो राज्ञः कुले जातः कः शूरः न जयेदपि तु जयेदेव ॥ भारतीये—दुरानमको दुःखेन जेतुमशक्यः। दण्डः सैन्यं हतः सन् विद्रुतः। नरघोराहवे नरस्यार्जुनस्य घोराहवे कुले जातः शूरोऽपि को जयेत्। अपि तु न ॥

केशवो बलदेवश्च न पौरैरेव केवलम्।
प्रत्युद्यातस्तथा तेषां रोमाञ्चैः संचितैरपि ॥ ५० ॥

केशव इति ॥ केशवो लक्ष्मणो नारायणश्च, बलदेवो रामो बलभद्रश्च, तेषां पौराणाम्, संचितैः पुष्टिं गतैः ॥

चलत्पताकामुद्बद्धतोरणां तामविक्षताम्।
द्वारकां गोपुरद्वारैः किष्किन्धनगरीमिव ॥ ५१ ॥

चलदिति ॥ द्वारकाम् इव ॥ भारतीये—किष्किन्धनगरीम् इव ॥

सुग्रीवः सपदि पराक्रमेण कन्यां वैकुण्ठः परिहृषितः शुभां सुभद्राम्।
कल्याणीं स बहुमतो जितारयेऽसै दित्सन्नक्रमत तथा धनंजयाय ॥ ५२ ॥

इति धनंजयकविविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये मायासुग्रीवनिग्रहजरासंधबलविद्रावणं नाम नवमः सर्गः समाप्तः ॥

सुग्रीव इति ॥ पराक्रमेण प्रतापेन कुण्ठो मन्दः, परिहृषितः परिहृष्टः, बहुमतः बहूनां नलनीलजाम्बवादीनां मतः स सुग्रीवः, जितारये जितोऽरिर्येन तादृशे, अस्मै रामाय जयाय जयनिमित्तं शुभां शुभलक्षणाम्, सुभद्रां शोभनानि भद्राणि कल्याणानि, यस्यास्तादृशम्, कल्याणीं तन्नामानं कन्यां तथा धनं दित्सन् अक्रमत प्रवर्तते स्म ॥ भारतीये—सुग्रीवः शोभनग्रीवः, वैकुण्ठो नारायणः, धनंजयाय अर्जुनाय, सुभद्रां तदाख्याम् ॥ प्रहर्षिणीवृत्तम् ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीच्छोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां मायासुग्रीवनिग्रहजरासंधबलविद्रावणं नाम नवमः सर्गः ॥

---

## दशमः सर्गः।

अन्यदा रसमिवैक्षवं वचश्चित्तहारि हरिवंशनायकम्।
दण्डगर्भमपि भोगलोलुपं कोप्युपेत्य पुरुषोत्तमोऽवदत् ॥ १ ॥

अन्यदेति ॥ कोपी कोपनशीलः, पुरुषोत्तमो लक्ष्मणः तन्नामा दूतश्च, भोगलोलुपं विषयसुखलम्पटम्, हरिवंशनायकं सुग्रीवं नारायणं च, उपेत्य समीपमेत्य, ऐक्षवमिक्षुविकारं

रसामिव दण्डगर्भं दण्डप्रधानं दण्डान्तःस्थमपि चित्तहारि हृदयंगमं वचो वाक्यम् अन्यदा अन्यस्मिन्काले अवदत् ॥ सर्गेऽस्मिन्नयोद्धता स्वागता च वृत्तम् ॥

श्रीमतां श्रुतवतां कुलजानां त्वय्युपस्कृतमिदं नतु दृष्टम् ।
सत्यमुन्नतिमतां हि गुरूणां मेरुरेव विकृतो न कदाचित् ॥ २ ॥

श्रीमतामिति ॥ धनवतां ज्ञानिनां शुद्धान्वयानां मध्ये त्वयि, इदं प्रत्यक्षगोचरम्, उपस्कृतं वैकृतं सत्यं न दृष्टम् । हि यतः उन्नतिमतां तुङ्गानां गुरूणां मध्ये मेरुरेव कदापि न विकृतः ॥

यौवनं तव न वैकृतं गतं मन्मथोऽपि समभावमास्थितः ।
त्वं परं युवजरन्गुणानिमान्नापवादपदवीमजीगमः ॥ ३ ॥

यौवनमिति ॥ हे युवजरन्, तव यौवनं वैकृतं न गतम्, मन्मथः कंदर्पोऽपि समभावम् आस्थितः । परं केवलं त्वम् इमान् गुणान् अपवादपदवीं न अजीगमः ॥

सद्गुणास्तव नृपैः सुगृहीतास्ते तथापि न भवन्ति भवद्वत् ।
तोयदाः खलु जलं जलधीनां बिभ्रतोऽपि न तथापि गभीराः ॥ ४ ॥

सद्गुणा इति ॥ नृपैः यद्यपि तव सद्गुणाः सुगृहीताः, तथापि ते राजानः, भवद्वत् न भवन्ति । जलधीनां जलं बिभ्रतोऽपि तोयदा गभीरा न स्युः ॥

त्वं हिमाद्रिरपि तां सरस्वतीं त्वं रविश्च कमलाकरग्रहम् ।
त्वं विधुश्च भुवनाभिनन्दथुं धत्थ इत्थमपरो न कश्चन ॥ ५ ॥

त्वमिति ॥ सरस्वतीं वाणीं नदीं च, कमलाकरग्रहं लक्ष्मीहस्तग्रहणं पद्माकरशोषणं च, भुवनाभिनन्दथुं लोकाभिनन्दनम् ॥

आश्रयस्त्वमसि सर्वलघूनां सेविता भवसि सर्वगुरूणाम् ।
छन्दसस्तव च वृत्तिमुदारां वर्णयन्ति कवयश्चरितेषु ॥ ६ ॥

आश्रय इति ॥ लघवः सरलाकृतय एकमात्रकाः निराश्रयदीन दुःस्थितभाग्यदूरवर्तिनश्च, गुरवो वक्राकृतयो द्विमात्रका सकलशास्त्रोपदेष्टारश्च, चरितेषु प्रस्तारोचितवार्तासु चरित्रेषु च ॥

दुर्जनेऽप्यनुनयः स्वभावतः सज्जने तु विनयो विशेषतः ।
तत्त्वमेवमभिमानिनं मम स्वामिनं किमिति नानुवर्तसे ॥ ७ ॥

दुर्जनेऽपीति ॥ अनुनयः प्रीतिः, विनयः प्रश्रयः । तत् तस्मात् एवं वक्ष्यमाणप्रकारेण अभिमानिनं मम स्वामिनं रामं नारायणं च किमिति कुतो नानुवर्तसे ॥

तादृशं प्रशमितं ननु वैरं तेन ते कृतमिदं न लघीयः ।
कंसमाहतमरिं भुवि वित्तं नेह संसरसि स स्मरणीयः ॥ ८ ॥

तादृशमिति ॥ ननु अहो तेन रामेण ते सुग्रीवस्य तादृशं ताराहरणप्रायम् वैरं प्रशमितम् । इदं लघीयो लघुतरं न कृतम्। त्वं भुवि वित्तं विख्यातं कमनिर्वचनीयं समाहतं व्यापादितम् अरिं साहसगतिं न संस्मरसि । स शत्रुः स्मरणीयो भवता । एतेन 'न स संकुचितः पन्था येन वाली हतो गतः । समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥' इति स्वाम्याज्ञा प्रश्राविता ॥ भारतीये—तेन कंसेन ते नारायणस्य तत् इदं वैरं प्रशमि लघीयो न कृतम् । तादृशमजय्यम् आहतं व्यापादितं कंसम् अरिम् ॥

श्रीवधूहरणवैरबन्धतः संप्रति भ्रुकुटिभङ्गुराननः ।
मा रुषन्मम पतिः समेत्य तं पादयोः पत समाहिताञ्जलिः ॥ ९ ॥

श्रीवधिवति ॥ संप्रति श्रीवधूहरणवैरबन्धतो जानकीहरणवैरानुबन्धात्, भ्रुकुटिभङ्गुराननः मम पती रामः मा रुषत् रुष्टो मा भूत् । अतः कारणात् समाहिताञ्जलिः कुड्मलीकृतकरः सन् त्वं तं रामं समेत्य पादयोः पत ॥ भारतीये—श्रीवधूहरणवैरबन्धतः लक्ष्मीरेव वधूः । मम पतिः जरासंधः । तं जरासंधम् ॥

अग्रतो भव शुभे पथि तिष्ठ प्रश्रयं भज जहीहि निजौजः ।
स्वामिनः श्रुतिपथातिथिभावं प्रापय प्रियजनैः प्रियवार्ताम् ॥ १० ॥

अग्रतविति ॥ स्वामिनो रामस्य जरासंधस्य च, प्रियजनैः सविश्रम्भजनैः ॥

वाचमेवमुपकर्ण्य कर्णयोः कर्कशामकुशयोः कशोपमाम् ।
क्षोभमब्धय इवाययुस्तया वात्यया सदसि वानराधिपाः ॥ ११ ॥

वाचमिति ॥ वानराधिपाः सुग्रीवप्रभृतयः शाखामृगस्वामिनः, एवम् उक्तप्रकारेण अकुशयोर्न्याय्यात्मविषयग्रहणप्रवीणयोः कर्णयोः श्रोत्रयोः कर्कशां कठोरां कशोपमामश्वादिताडनरज्जूपमाम्, वाचम् उपकर्ण्य तया वार्तया 'वात्यया अब्धय इव' सदसि सभायां क्षोभम् आययुः ॥ भारतीये—नराधिपा बलभद्रादयो नरेन्द्रा अर्जुनस्वामिका वा॥

श्रीदशार्हकुलजाः किल केचिन्मानिनः स्थितिविघातभयेन ।
क्रोधवह्निशिखया स्वयमन्तर्दाहदूनहृदयाः क्रममायुः ॥ १२ ॥

श्रीदेति ॥ किल अरुचौ लोकोक्तौ वा, श्रीदशार्हकुलजा श्रीदशां भाग्यावस्थाम् अर्हन्ति ते कुलजा नलनीलादयः, श्रियोपलक्षितानां 'समुद्रविजय–अक्षोभ–तिमिरसागर–हिमवद्–विजय–अचल–आरण–पूरण–अभिचन्द्र–वसुदेव'–इति दशार्हाणां कुले जाताश्च॥

भोजकाः सुखनिबद्धसंपदः स्वेदसेकनिचिताङ्गयष्टयः ।
केऽपि कोपशिखिशान्तये बभुर्मुक्तवारिकलशा इवोपरि ॥ १३ ॥

भोजेति ॥ सुखनिबद्धसंपदः सुखसंयुक्तविभूतेः, भोजका भोक्तारः ॥ भारतीये—सुखनिबद्धसंपदः सुखाय संभृता संपद्यैस्ते, भोजका भोजकुलोत्पन्नयादवाः ॥

आशुशुक्षणिरिवाशु स कश्चिद्भूपतिः प्रबलयादवजन्मा।
प्रज्वलन्कपिशतान्वितकायः सह्यते स्म परुषो न रुषान्यैः ॥ १४ ॥

आश्विति ॥ प्रबलया रुषा परुषो निष्ठुरः, कपिशतान्वितकायः कपीनां शतै रचितः कायो यस्य स भूपतिः 'दवजन्मा अरण्योद्भव आशुशुक्षणिर्वह्निरिव' ज्वलन् अन्यैः न सह्यते स्म ॥ भारतीये—कपिशतान्वितकायः कपिशतया पिङ्गलवर्णेनान्वितः कायो यस्य सः, प्रबलयादवजन्मा प्रबलश्चासौ यादवजन्मा च ॥

केऽपि वृष्णिकुलजाः समागताः साम्यमम्बुधिगभीरचेतसः।
आसनानि न बभञ्जुरूर्जिताः क्वापि किं भुवि चलन्त्यभीरवः ॥ १५ ॥

केऽपीति ॥ कुलजाः कुलीनाः वृष्णि इन्द्रे साम्यं समागताः, अम्बुधिगभीरचेतसो जलधिरिव गभीरं चेतो येषां ते ॥ भारतीये—अम्बुधिगभीरचेतसः सत्पुरुषस्य, साम्यं समागताः, वृष्णिकुलजा वृष्णेर्यादवविशेषस्य कुले जाताः ॥

स्विन्नवान्स हरिचन्दनदेहः कम्पवाँश्चटुलपाटलदृष्टिः।
क्षोभमात्मनि नियन्तुमशक्तः कामकातर इवाजनि भीमः ॥ १६ ॥

स्विन्नेति ॥ हरिचन्दनदेहो हरिचन्दनस्य वानरस्य देहः, हरेर्नारायणस्य चन्दनलिप्तो देहो वा, हरिचन्दनेन लिप्तो देहो यस्य स वा, भीमो भयानको वृकोदरो वा ॥

अस्त्यशक्यमपि दूरमर्जुनः कार्यमित्युपरि धूनयञ्शिरः।
गौरवेण गुरु गन्धमादनः सामजस्य निजसौष्ठवं ययौ ॥ १७ ॥

अस्त्येति ॥ गन्धमादनस्तन्नामा वानरः 'हे दूरम दुःखेन रम्यते यः, दुःखिता रमा जानकी यस्य स वा, नोऽस्माकम्, ऋजु प्राञ्जलमपि कार्यं किमशक्यमस्ति' इति उपरि गुरु शिरो धूनयन् सन् सामजस्य गजस्य गौरवेण निजसौष्ठवं स्वकीयप्रौढिमानं ययौ ॥ भारतीये—गौरवेण गन्धमादनस्तत्तुल्यः अर्जुनः पार्थः किं दूरमपि कार्यमशक्यमस्ति ॥

योनलोभरमितः कदनेषु स्थेमवृत्तिरवहद्भुवि कीर्तिम्।
पाण्डुमद्र्युचितमुन्नतिभावं सोऽवलम्ब्य नकुलप्रभुरस्थात् ॥ १८ ॥

योनेति ॥ यः स्थेमवृत्तिः स्थिरतरवृत्तिः सन् कदनेषु भरं तत्परतामितो गतः सन् भुवि कौ पाण्डुं शुभ्रां कीर्तिमवहत्। स कुलप्रभुर्वंशपतिः कुं लान्ति आददते तेषां कुलानां राज्ञां प्रभुर्वा, स नलस्तन्नामा कीशोऽद्र्युचितं पर्वतोचितमुन्नतिभावमुन्नतत्वमवलम्ब्य (किम्) न अस्थात् अस्थादेव ॥ भारतीये—यः कदनेष्वनलो जातवेदाः सन् भरमितः। स नकुलप्रभुः चतुर्थपाण्डवः पाण्डुमद्र्युचितं पाण्डोर्मद्र्याश्चोचितम् ॥

तं विलोक्य सहदेवविक्रमं बिभ्रतं कुमुदमायतायतिम्।
जृम्भमाणमभिमानसंश्रयं तत्र तत्रसुरितस्ततो जनाः ॥ १९ ॥

तमिति ॥ देवविक्रमं सुरप्रतापं सह बिभ्रतं धरन्तमायतायातिं विस्तीर्णकीर्तिमभिमानसंश्रयं गर्वमन्दिरं जृम्भमाणं प्रवर्तमानं कुमुदं वानरं विलोक्य जना इतस्ततस्तत्रसुः ॥ भारतीये—आयतायतिं दीर्घोत्तरफलां कुमुदं पृथ्वीहर्षं बिभ्रतं सहदेवविक्रमं पञ्चमपाण्डवबलम् ॥

तं समुद्रविजयं प्रतापतः शूरतैकपरमञ्जनोद्भवम् ।
सुप्रतिष्ठितमवेक्ष्य लज्जितः सोऽखिलोऽभवदुपप्लुतो नृपः ॥ २० ॥

तं सेति ॥ लज्जितः सोऽखिलो नृपः प्रतापतो रविजयं रवेः सूर्यस्येव जय उत्कर्षो यस्य तं, रविं जेन जवेन याति तं, रविजं सुग्रीवं याति अनुचरति तं सुग्रीवानुचरं वा, शूरतैकपरं क्षात्रधर्मैकनिष्ठमञ्जनोद्भवं हनुमन्तं प्रतिष्ठितमवेक्ष्य समुत् सहर्ष उपप्लुत उपद्रुतोऽभवत् जातः ॥ भारतीये—शूरतैकपरमं शूरतया एका परा मा यस्य तं, जनोद्भवं जनानामुद्भवोऽभ्युदयो यस्मात् तं, समुद्रविजयं यादवकुलं प्रतिष्ठितमवेक्ष्य सोऽखिल उपप्लुत उपद्रुतो नृपो लज्जितोऽभवत् ॥

इत्यपायवदुपायवन्नयैरेकतश्चलितमन्यतः स्थिरम् ।
राजकार्यमिव राजपुत्रकं दुर्धरं सुधरमप्यजायत ॥ २१ ॥

इत्येति ॥ इत्युक्तप्रकारेणैकत एकस्मिन्स्थानेऽपायवन्नयैर्दण्डवन्नीतिभिश्चलितम्, अन्यतोऽन्यत्रस्थाने उपायवन्नयैः सामवन्नीतिभिः स्थिरं, राजपुत्रकं राजपुत्रसमूहः । राजकार्यमिव । सुधरमपि दुर्धरमजायत ॥

कोपरक्तकपिलालसदृष्टिस्तां सभां ननु चलाङ्गलशोभी ।
वारयन्निति स दूतगुणाढ्यं तं जगाद मृदु वानरराजः ॥ २२ ॥

कोपेति ॥ कोपरक्तकपिलालसदृष्टिः कोपेन रक्तेषु कपिषु लालसा दृष्टिर्यस्य सः, गलशोभी कण्ठमनोहरः, स वानरराजः सुग्रीवश्चलां चपलां तां सभां वारयन् दूतगुणाढ्यं दूतस्य गुणैः 'मानी धीरश्च शुण्डीरस्तेजस्वी विक्रमी तथा । वपुष्मान्नीतिमान्वाग्मी दूतः स्यादष्टभिर्गुणैः ॥' इत्युक्तैराढ्यं तं लक्ष्मणं मृदु यथा स्यात्तथा इति वक्ष्यमाणं जगाद ॥ भारतीये—कोपरक्तकपिलालसदृष्टिः कोपेन रक्ता कपिला अलसा दृष्टिर्यस्य सः, लाङ्गलशोभी बलभद्रो नरराजः । तं पुरुषोत्तमनामानं जरासंधदूतम् ॥

अन्तरङ्गमनुभावमाकृतिः संयमो गुरुकुलं श्रुतं शमः ।
वागियं च तव तात सौष्ठवं साधु सेधयति मार्दवं क्षमा ॥ २३ ॥

अन्तरेति ॥ सेधयति ज्ञापयति । ज्ञानार्थत्वान्नात्वम् ॥

रूपमेव तव शीलमुदारं स्थेयसीं प्रकृतिमुन्नतिभावः ।
स्वामिभक्तिमुचितामनुरागः सूचयत्यनुनयं नयमार्गः ॥ २४ ॥

रूपेति ॥ [स्पष्टम् ।]

वेलया विहितकार्यसाधनं धैर्यविक्रममगाधतां गुरुम् ।
विभ्रतस्तव पयोनिधेरपि क्षोभमेकमपहाय नान्तरम् ॥ २५ ॥

वेलयेति ॥ वेलया कालविशेषेण विहितकार्यसाधनं कृतं कार्यस्य साधनं येन तादृशं धैर्यविक्रमं धैर्यं विक्रमं च गुरुम् अगाधतां च विभ्रतस्तव पयोनिधेः एकं क्षोभमपहाय अन्तरं भेदो नास्ति । पयोनिधिस्तु वेलया मर्यादया ॥

उन्नतोऽसि विशदोऽसि हिमानीगौरवं समुपयञ्शिशिरोऽसि ।
हन्त ते हिमवतश्च कथं वागर्हिता दहनवृत्तिरियं स्यात् ॥ २६ ॥

उन्नतविति ॥ त्वं गौरवं समुपयन् हि निश्चयेन मानी असि । हन्त कष्टं दहनवृत्तिः संतापजननी इयं ते वाग् अर्हिता पूजिता कथं स्यात् ॥ हिमवांस्तु हिमानीगौरवं हिमसंहतिगरिमाणं समुपयन् शिशिरोऽस्ति अतस्तस्य गर्हिता निन्द्या दहनवृत्तिः कथं वा स्यात्॥ तुल्योपमा ॥

संविधाय बहुमानमुच्चकैर्विप्रियं यदभिधीयते गिरा ।
अम्बु शीतमभिवृष्य चित्रया तद्वितप्यत इवोत्कटातपम् ॥ २७ ॥

संविधायेति ॥ उच्चकैर्बहुमानं संविधाय यत् गिरा विप्रियमभिधीयते, तत् शीतम् अम्बु अभिवृष्य चित्रया नक्षत्रेण उत्कटातपं यथा स्यात्तथा वितप्यते इव ॥ उपमोपालम्भः ॥

ज्ञायते च भवतः पतिरुच्चैर्विक्रमेण भुवनं विजिगीषुः ।
देशकालबलबोधपरीक्षा पौरुषेऽपि ननु सा परिचिन्त्या ॥ २८ ॥

ज्ञायेति ॥ पौरुषे सत्यपि सा देशकालबलबोधपरीक्षा ननु निश्चयेन परिचिन्त्या ॥

पञ्जरे किल करोति किं शुकः पक्षवानपि विदेशमागतः ।
किं शुचावसमये शिखावलः कोकिलश्च मधुरं स कूजति ॥ २९ ॥

पञ्जर इति ॥ कोकिलमयूरयोः कूजनसमयस्तु वसन्तप्रावृषौ ॥ अनेन तेषामपि देशकालबोधानामन्वयव्यतिरेको वर्णितौ ॥

देशकालकलया बलहीनः किं व्यवस्यति युतोऽपि शृगालः ।
स त्रयेण सहितश्च्युतबोधः किं न याति शरभस्तनुभङ्गम् ॥ ३० ॥

देशेति ॥ देशकालकलया देशकालज्ञानेन युतोऽपि शृगालो बलहीनः किं व्यवस्यति । अत्र बलव्यतिरेको वर्णितः । त्रयेण देशकालबलेन सहितः स शरभश्च्युतबोधः सन् तनुभङ्गम् किं न याति ॥ अत्र बोधव्यतिरेको व्याख्यातः ॥

बुद्धिसत्त्वबलभाग्ययोग्यतां सर्वतः प्रकृतिरागमात्मनः ।
यः परस्य च न चिन्तयत्ययं यातृयेयसमये विनश्यति ॥ ३१ ॥

बुद्धीति ॥ य आत्मनः स्वस्य, परस्य शत्रोश्च, बुद्धिसत्त्वबलभाग्ययोग्यतां बुद्धेर्हिताहि-

तज्ज्ञानस्य, सत्त्वस्य अन्तरङ्गतेजसः, बलस्य सैन्यस्य, भाग्यस्य दैवस्य, योग्यतां सामग्रीं प्रकृतिरागं प्रकृतीनां स्वाम्यमात्यादिसप्तप्रकृतीनां रागं स्नेहं च सर्वतः सामस्त्येन न चिन्तयति ॥ अयं यातृयेयसमये गन्तृगम्यकाले विनश्यति ॥

इत्युपायमविचार्य तवार्यः केवलं बलवतीरितकोपः।
विश्रुतः समरणोद्यमचेता मामृजुप्रकृतिकः प्रतिभाति ॥ ३२ ॥

इत्युपेति ॥ तव लक्ष्मणस्य अर्यो रामः इति पूर्वोक्तम् उपायम् अविचार्य अबुद्ध्वा बलवति प्रबले केवलम् ईरितकोपः प्रेरितकोपः, विश्रुतो विख्यातः, समरणोद्यमचेताः समं युगपद् रणस्योद्यमे चेतो यस्य तादृक्, मां प्रति ऋजुप्रकृतिकः सरलस्वभावो भाति ॥ भारतीये—बलवति बलभद्रयुते कृष्णे, ईरितकोपः। विश्रुतः विगतं श्रुतं यस्य हेयोपादेयज्ञानविकलः, स जरासंधो मरणोद्यमचेता मरणस्योद्यमे चेतो यस्य इति मां प्रतिभाति ॥

दृष्टवान्न स दशास्यतेजसो भूभृतः खलु निरुन्धतीं दिशः।
तिग्मतां यदुदयानुबन्धिनस्तद्व्यवस्यति वृथा तवाधिपः ॥ ३३ ॥

दृष्टेति ॥ यत् यस्मात्कारणात्, स रामस्तवाधिपो भूभृतः पृथिवीपोषकस्य, उदयानुबन्धिन उदयमनुबध्नातीत्येवंशीलस्य, दशास्यतेजसो रावणप्रतापस्य, दिशो निरुन्धतीम् तिग्मतां तीक्ष्णतां न दृष्टवान्। तत् तस्मात्कारणात् वृथा व्यवसति उत्सहते ॥ भारतीये—सः यदुदयानुबन्धिनो यदूनां यादवानां दयामनुबध्नातीत्येवंशीलस्यास्य भूभृतो ना, रायणस्य तेजसो दश दिशो निरुन्धतीं तिग्मताम् ॥

अन्तकोऽपि वरुणोऽपि कुबेरो वासवोऽपि स यमेव भयार्तः।
पश्यति प्रकुपितं प्रहरन्तं स्वप्नदर्शनकृपाणतलेषु ॥ ३४ ॥

अन्तेति ॥ स लोकप्रसिद्धोऽन्तको वरुणः कुबेर इन्द्रोऽपि प्रकुपितं प्रहरन्तं यमेव स्वप्नदर्शनकृपाणतलेषु स्वप्नेषु खड्गतलेषु च भयार्तः सन् पश्यति ॥

योऽन्यमर्यमणमप्यतिक्रमप्रक्रमं न सहते प्रतापिनम्।
नागमन्तमनयन्महोद्धतिं यो जगन्नयबलेन तायते ॥ ३५ ॥

योऽन्यमिति ॥ योऽन्यं प्रतापिनं सप्रभावम् अतिक्रमप्रक्रमम् अतिक्रमं प्रक्रामति अतिक्रमस्य प्रक्रमो यस्य तम् अर्यमणमपि न सहते। तथायस्तं प्रसिद्धम् आगमं राजविद्यां महोद्धतिं परमोत्कर्षं न अनयत, तथा यो जगत् नयबलेन नीतिसामर्थ्येन न तायते पालयति ॥ भारतीये—प्रतापिनं धर्मकरम्, यो महोद्धतिं गर्विष्ठं नागं कुवलयापीडगजं कालियफणीन्द्रं च अन्तं नाशम् अनयत्। नयबलेन जगद् यस्तायते ॥

यः पूतनामादरमुक्तवृत्तिं घोराञ्चलामाकृतिदारुणां ताम्।
बालोऽप्यपीडत्कुपितोऽरिमूर्तिं स्पर्द्धेच्छया वः किमनेन सार्धम् ॥३६॥

यः पूतेति ॥ पूतनामा पवित्रनामा यो बालोऽपि कुपितः सन् दरमुक्तवृत्तिं दरेण भयेन

मुक्ता वृत्तिः प्रजापालनलक्षणा यया तां घोरां तीव्रां चलां चपलां आकृतिदारुणाम् आकृत्या कोपप्रसादजनितधर्मेण दारुणां सोढुमशक्याम् अरिमूर्तिं शत्रुमूर्तिम् अपीडत्, अनेन सार्धं वो युष्माकं स्पर्धया किम् ॥ भारतीये—अरिमूर्तिं शत्रुरूपिणीम्, आदरमुक्तवृत्तिम् घोराञ्चलां पूतनाम् ॥ इन्द्रवज्रावृत्तम् ॥

योलङ्केशीत्यायतिमायाद्दिशि तीव्रां वैरी नामाघानि स येन प्रजिघांसुः ।
ये देवानां धाम समक्षं च विमानं तेजोवृत्त्या वैश्रवणीयं हरति स्म ॥३७॥

योलङ्केति ॥ यस्तीव्रां कष्टलब्धां लङ्केशी इति आयतिं प्रख्यातिम् आयात्, येन प्रजिघांसुः स वैरी नाम प्रसिद्धौ अघानि, यो देवानां समक्षं प्रत्यक्षं तेजोवृत्त्या वैश्रवणीयं कुबेरसंबन्धि धाम लङ्काख्यं विमानं पुष्पकसंज्ञं च हरति स्म ॥ भारतीये—यः अलमत्यर्थं केशी इति आयतिम् । वैरी मधुकैटभादिः । देवानां विमानमसंख्यं धाम तेजः । श्रवणीयं श्रोतव्यम् ॥ मत्तमयूरं छन्दः ॥

वैरन्तुङ्गोवर्धनमिच्छन्ननु दृष्ट्वा कीर्त्यैकैलासं गतमुच्चैःस्थितिमुग्रः ।
तं यो लोकं वायुरिवोर्ध्वं धरति स्म त्रुट्यत्तन्तूभूतभुजंगं भुजदण्डैः॥३८॥

वैरेति ॥ ननु आश्चर्ये । तुङ्गो मानी, उग्रस्तीव्रः, यो रावणः वैरं दृष्ट्वा वर्धनम् इच्छन् सन् कीर्त्यै यशसे, उच्चैःस्थितिं गतं तं कैलासं पर्वतम्, वायुरूर्ध्वं लोकम् इव भुजदण्डैः, त्रुट्यत्तन्तूभूतभुजंगं त्रुट्यन्तस्तन्तूभूता भुजंगा यत्र कर्मणि यथा स्यात्तथा, धरति स्म ॥ भारतीये—कीर्त्या उग्रो यो नारायणः वै निश्चयेन रन्तुं क्रीडितुं इच्छन् गोवर्धनं पर्वतं दृष्ट्वा तं पर्वतं कीर्त्या सह, वा एकैलासं एकः केवल ऐलानामिलाभवानां कुजानां वृक्षाणाम् आसः क्षेपणं यत्र कर्मणि भवेत्तथा ॥

यस्य द्विषां शृङ्खलखंकृतानि प्रबोधतूर्यध्वनिमङ्गलानि ।
य ईदृशं प्रार्थयतेऽत्र साक्षाद्वैश्वानरः साहसिकः स एव॥ ३९ ॥

यस्येति । यस्य रावणस्य द्विषां शत्रूणां शृङ्खलखंकृतानि, [यस्य] प्रबोधतूर्यध्वनिमङ्गलानि आसन् ईदृशं रावणं यः पुरुषोऽत्र युद्धे प्रार्थयते स साहसिको हठप्रवृत्तिः साक्षात् वैश्वानरो वह्निरेवास्ति ॥ भारतीये—वै निश्चये स नरः श्वा ॥ उपजातिः ॥

किं विग्रहेणोभयजन्मनाशादन्योन्यमालिङ्ग्य भुजोपरोधम् ।
सुखेन जीवाम निजानुकूलं विवाहसंबन्धपरम्पराभिः ॥ ४० ॥

किमिति ॥ उभयजन्म कुलद्वयम् ॥

इति तस्य निशम्य तीव्रभूयं भुवनेशासनहारिणा बभाषे ।
परुषं पुरुषोत्तमेन पत्यौ न सुभृत्यः क्षमते क्षिपां हि जात्यः ॥ ४१ ॥

इतीति ॥ भुवनेशासनहारिणा भुवनेशानां नलनीलादीनाम् आसनं हरति तच्छीलेन पुरुषोत्तमेन लक्ष्मणेन तस्य सुग्रीवस्य इति उक्तप्रकारेण तीव्रभूयं तीव्रतां निशम्य परुषं

यभापे ॥ हि यतः जाल्मः सुभृत्यः पत्यौ स्वामिविषये क्षिपामाक्षेपं न क्षमते ॥ भारतीये— भुवने जगति, शासनहारिणा लेखवाहिना, पुरुषोत्तमेन तन्नामकजरासंधदूतेन ॥ औपच्छन्दसिकं वृत्तम् ॥

त्वमिहात्थ यथा तथा स नो चेत्सुभटः प्राणपरिव्यये सहिष्णुः।
किमिहोत्सहतेऽधिपो ममाहुर्निजशूरेषु हि विप्रियं प्रियं वा ॥ ४२ ॥

त्वमिहेति ॥ त्वम् इह स्वभवने यथा तथा यदृच्छया आत्थ ब्रवीषि, चेत् यदि स मत्स्वामी, सुभटः, प्राणपरिव्यये प्राणत्यागे, सहिष्णुश्च न स्यात्, इह युद्धे मम अधिपः किम् उत्सहते। हि यतः निजशूरेषु आत्मना धीरेषु विप्रियं प्रियं वा आहुर्वदन्ति सूरयः ॥

यदेप राज्ञः प्रथमं परिग्रहस्तदाहवेऽन्यैर्न हतो हतैरपि।
समापतन्तं मृगयुर्मदोद्धतं न राजवध्यं हि शृणाति शूकरम् ॥ ४३ ॥

यदेपेति ॥ यत् यस्मात् एप रावणो नारायणश्च राज्ञः परिग्रहो भोग्यः, तत्तस्मात्कारणात् आहवे युद्धे हतैः पीडितैरपि अन्यैः शत्रुभिर्न हतो मारितः। हि यतः मृगयुः पापर्द्धिकः समापतन्तं संमुखमागच्छन्तं मदोद्धतं मदोत्कटम् अपि राजवध्यं शूकरं न शृणाति हिनस्ति ॥ वंशस्थं वृत्तम् ॥

ऊढवान्यदपि गण्डशैलकं तन्न कारणमुदारमुन्नतेः।
भूरिभारवहनं क्रमेलकः श्लाघ्यते युधि वधं तु सिन्धुरः ॥ ४४ ॥

ऊढेति ॥ गण्डशैलकं गिरिच्युतस्थूलोपलसमूहं यदपि ऊढवान् आरूढवान्, तत् उदारम् उन्नतेः कारणं न। क्रमेलक उष्ट्रो भूरिभारवहनं कर्तुं श्लाघ्यते, सिन्धुरो गजस्तु युधि वधं कर्तुं श्लाघ्यते ॥ रथोद्धता वृत्तम् ॥

वरमिह ततः सारामेया क्रियेत विधेयता
नतु लघुजरा संधेयास्मिन्प्रतापिनि वक्रता।
क्वचिदपि न वः स्वामी साहायकं प्रति नाथति
सुपथगमनप्रारम्भाय प्रभोरयमुद्यमः ॥ ४५ ॥

वरमिति ॥ ततः तस्मात्कारणात् या इह रामे विधेयता प्राञ्जलत्वम्, क्रियेत विधीयेत् सा वरम्। प्रतापिनि अस्मिन् रामे लघुजरा लघ्वी जरा यस्यास्तादृक् नश्वरी वक्रता कुटिलता तु न संधेया संधातव्या। स्वामी क्वचिदपि [विषये] वो युष्माकं साहायकं प्रति न नाथति याचते। 'नाथते' इति पाठे तु साहायकं प्रति साहायकं लक्षीकृत्य वः युष्माकं नाथते यूयं सहाया भूयास्तां इत्याशास्ते। 'आशिपि नाथः' इति सूत्रेण कर्मणि षष्ठी। प्रभोः अयम् उद्यमः सुपथगमनप्रारम्भाय न्यायमार्गानुसरणप्रारम्भाय, अस्ति ॥ भारतीये—या सारा अमेया विधेयता अस्मिन् जरासंधे लघु शीघ्रं विधीयेत, सा वरम्। वक्रता नासावस्ति। वो युष्माकं स्वामी साहायकं प्रति क्वचिदपि न नाथते। नाथत एव। सुपथगमनप्रारम्भाय अमायानुसरणप्रारम्भाय ॥ हरिणीवृत्तम् ॥

नाथोऽभ्युपेत्य विनयेन ततोऽनुनेय-
स्तस्य द्विषामिव दशा भवतां च मा भूत्।
इत्याशु धीप्सितमुदीर्य ययौ स देशं
श्रीसाधनं जयधियां खलु विक्रमोक्तिः ॥ ४६ ॥

इति धनंजयकविविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये लक्ष्मणसुग्रीवजरासंधदूतनारायणान्योन्यविवादकथनो नाम दशमः सर्गः समाप्तः।

नाथोऽभ्युपेत्येति । ततस्तस्मात्कारणात् नाथो विनयेन अभ्युपेत्य अनुनेयः । भवतां दशा द्विषामिव मा भूत् । इति उक्तप्रकारेण धीप्सितं दम्भवाक्यं वक्तुमिष्टम् उदीर्य स आशु देशं स्थानं ययौ । जयधियां विक्रमोक्तिः श्रीसाधनं खलु ॥ भारतीये—देशं स्वविषयम् ॥ वसन्ततिलकावृत्तम् ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीच्छोटीलालात्मजश्रीवदरीनाथविरचितायां द्विसंधानकाव्यटीकायां लक्ष्मणसुग्रीवजरासंधदूतनारायणान्योन्यविवादकथनो नाम दशमः सर्गः ॥

---

एकादशः सर्गः।

यस्यां नाथाः सप्रभावानराणां हित्वास्थानीं तां ययौ मन्त्रशालाम्।
क्षुण्णैः कैश्चिन्नीतिमानेकपीनां विद्यास्वर्घ्यो दीप्रभावासुदेवः ॥ १ ॥

यस्यामिति ॥ नीतिमाने नीतौ माने च अर्घ्यः पूज्यः कपीनां देवः सुग्रीवः, सप्रभाः तेजस्विनो वानराणां नाथाः यस्यामासन्, तामास्थानीं सभां हित्वा दीप्रभावासु दीप्रः संशयमलपरित्यागतया विशदो भावो हेयोपादेयलक्षणविवेचकपरिणामो यासु तादृक्षु विद्यासु क्षुण्णैः कृताभ्यासैः कैश्चित्परिमितैर्मन्त्रिभिः सह मन्त्रशालां ययौ ॥ भारतीये—नीतिमान् दीप्रभाः दीप्रा भा यस्य तादृक्, वासुदेवः, सप्रभावाः प्रभावसहिताः नराणां नाथाः समुद्रविजयादयः, एकपीनां स्कन्धोपपीडमुपविष्टैः सामन्तादिभिरविच्छिन्नतया संभृताम् आस्थानीम् ॥ सर्गेऽस्मिञ्शालिनीवृत्तम् ॥

शान्तारावे शारिकाद्यप्रवेशे देशे मन्त्रं पञ्चकं शास्त्रशुद्धैः।
इत्यारेभे मन्त्रिभिर्दृष्टशौचैर्दूरं दीर्घं ध्यायतां कार्यसिद्धिः ॥ २ ॥

शान्तारेति ॥ [सुग्रीवो नारायणश्च] शुकसारिकादिभिर्भिन्नो मन्त्रो दृष्टः । दृष्टशौचैः । शौचश्चात्र शत्र्वादिभिरमेलनं केवलं स्वामिकार्यतत्परता कुलीनता च ॥

अप्रारम्भात्कार्यमाकौशलाद्वा स्थानत्यागात्कामतः शेषतो वा।
नातिक्रान्तं प्राप्यते यौवनं वा तेनालोच्यं वोऽनुबन्धैश्चतुर्भिः ॥ ३ ॥

अप्रारेति ॥ कार्यमप्रारम्भादाकौशलादनैपुण्यात् स्थानत्यागात् कामतो यदृच्छातः शेषतः

क्रोधादितो अतिक्रान्तं यौवनमिव न प्राप्यते। तेन चतुर्भिरनुबन्धैः 'अर्थोऽर्थानुबन्धी, अर्थोऽनर्थानुबन्धी, अनर्थोऽर्थानुबन्धी, अनर्थोऽनर्थानुबन्धी,' इत्येवंरूपैः कार्यमालोच्यम् ॥

शिष्टैर्जुष्टं रक्षितं दण्डनीत्या दृष्टं चोच्चैर्यच्च पुण्यग्रहेण।
कार्यद्वारं श्रीगृहद्वारभूतं तस्मिन्मूढं दिग्विमूढं निराहुः ॥ ४ ॥

शिष्टैरिति ॥ यत्कार्यद्वारं शिष्टैर्जुष्टं सेवितम् दण्डनीत्या रक्षितम्, उच्चैरत्यर्थं पुण्यग्रहेण दैवानुग्रहेण दृष्टम्, तत् श्रीगृहद्वारभूतं लक्ष्मीमन्दिरद्वारभूतमस्ति, तस्मिन् मूढं (नरम्) दिग्विमूढं दिशाविमूढमाहुः ॥

तच्चैकैकं यन्मुखेनैककेन प्राप्तं योज्यं ग्रासवद्भावि पथ्यम्।
नानाद्वारैरापतद्वा हृषीकैर्दृश्यस्पृश्यादीव तद्ग्राह्यमेभिः ॥ ५ ॥

तच्चैकैकमिति ॥ यदेककेन मुखेन प्राप्तमेकैकं ग्रासवत् पथ्यं भावि तत् कार्यं योज्यम्। अथवैभिर्नानाद्वारैर्मन्त्रस्य पञ्चावयवैरापतदागच्छत् [अपि] तत् कार्यम्। हृषीकैः स्पर्शनरसनघ्राणलोचनश्रवणैरिन्द्रियैः दृश्यस्पृश्यादीव। पृथक् पृथक् स्वस्वविषयः स्वेन स्वेनैव गृह्यते, तद्वत् ग्राह्यम्। न तु सांकर्यं प्रसञ्जनीयम् ॥

तत्सर्वं वारभ्यमल्पाल्पमेव स्वीकर्तव्यं कर्म कालक्षमं चेत्।
गौराहारं हृद्यमाहृत्य विश्वं कामं रोमन्थायतेऽनुक्रमेण ॥ ६ ॥

तदिति ॥ अथवा चेद्यदल्पाल्पं स्तोकं स्तोकमेव कर्म कालक्षमं भवेत्, तदा सर्वमारभ्यं स्वीकर्तव्यम्। गौर्विश्वं सर्वं हृद्यमाहारं तृणादि कामं यथेष्टमाहृत्यानुक्रमेण रोमन्थायते चर्वितस्य चर्वितं करोति ॥

कार्यस्यादौ यः प्रयुङ्क्ते न नीतिं गच्छन्त्यस्य स्वादुभावं न भोगाः।
नूनं धात्राप्येतदर्थं जनानां जिह्वास्येषु स्थापिता नोदरेषु ॥ ७ ॥

कार्येति ॥ [स्पष्टम्।]

कस्यात्यन्तं मित्रमेकान्ततो वा शत्रुः कृत्यं शत्रुमित्रत्वहेतुः।
यस्यारम्भान्नातिवर्तेत सख्यं वैरं वारात्येन तत्कर्म कुर्युः ॥ ८ ॥

कस्येति ॥ अत्यन्तमतिशयेनाजन्मपर्यन्तं कस्यापि मित्रं स्यात्। न कस्यापीति भावः। अथवा शत्रुरेकान्ततो नियमेनास्ति, न कस्यापि। कृत्यं कर्मैव शत्रुमित्रत्वकारणमस्ति। अतो यस्य कर्मण आरम्भात् सख्यं नातिवर्तेत नापगच्छेत्। आरात्येन शत्रुसमूहेन वैरं ना जनो अतिवर्तेत। तत् कर्म कुर्युः ॥

अभ्यादत्ते कार्यजं योनिजं वा प्राप्तं मित्रं शत्रुमप्राप्तमेव।
तस्य श्लाघ्यं जन्म कृत्वावधानं किं तूत्तापोरावणीयोऽपि चिन्त्यः ॥ ९ ॥

अभ्यादत्त इति ॥ यः कार्यजं कर्मजन्यं योनिजमन्वयपरम्परागतं वा प्राप्तं वर्तमानं

मित्रम् प्राप्तं भाविनमेव शत्रुमभ्यादत्ते प्रतिगृह्णाति, तस्य जन्म श्लाघ्यम् । अतः कारणात् किंतु अनुशये अवधानं तत्परतां कृत्वा रावणीयो रावणसंबन्धुत्तापोऽपि चिन्त्यः ॥ भारतीये—अणीयः सूक्ष्मतरम् अवधानं कृत्वा अरावुत्तापश्चिन्त्यः ॥

यद्वंशस्य प्राभवं लोकरूढं यः शौरीयं धाम संहर्तुमीशः ।
बद्धस्पर्धोऽनेन विद्वेषभाजा सार्धं मित्रैर्गोत्रनाशं समेति ॥ १० ॥

यद्वंशस्येति ॥ यो रामो लोकरूढं जगत्प्रसिद्धं यद्वंशस्य रावणान्वयस्य प्राभवं माहात्म्यम्, शौरीयं[1] सूर्यसंबन्धि शूरसमूहसंबन्धि वा धाम तेजः, (च) संहर्तुमीशः । विद्वेषभाजा विरोधभाजानेन रामेण बद्धस्पर्धो रावणो मित्रैः सार्धं गोत्रनाशं समेति ॥ भारतीये—यो जरासंधो यद्वंशस्य यदूनामंशस्य नारायणस्य, शौरीयं नारायणीयं विद्वेषभाजा विदां पण्डितानां वेपमाकारं भजता ॥

स्वस्यारेश्चायोधयन्मित्रमित्रं मित्रं पार्ष्णिग्राहमाक्रन्दकं च ।
नन्वासारावप्युपायैर्जिगीषुः शक्त्यासिद्ध्याभ्युद्यतो हन्त्यरातिम् ॥ ११ ॥

स्वस्येति ॥ शक्त्या 'प्रभुशक्तिर्भवेदाद्या मन्त्रशक्तिर्द्वितीयका । तृतीयोत्साहशक्तिश्चेत्याहुः शक्तित्रयं बुधाः ॥' इत्युक्तशक्तित्रयेण, सिद्ध्या पुण्यपाकेनाभ्युद्यतः सामस्त्येनोत्थितो जिगीषुः स्वस्यात्मनो मित्रमित्रेणारेः शत्रोर्मित्रमित्रम्, मित्रेण मित्रम्, पार्ष्णिग्राहेण 'जिगीषोः पृष्ठतः पार्ष्णिग्राहाक्रन्दावुपस्थितौ । तदासारौ तु विज्ञेयौ मध्यस्थौ पार्श्वयोरपि ॥' इत्युक्तलक्षणेन पार्ष्णिग्राहम्, आक्रन्दकेनाक्रन्दकम्, आसाराभ्यामासारावप्यायोधयन् सन् उपायैः सामादिभिश्चतुर्भिः अरातिं हन्ति ॥

रक्षोपायः शक्यते केन कर्तुं कः क्रुद्धेऽस्मिन्वामयीहेत योद्धुम् ।
उद्योक्तव्यं नैष कालः क्षमाया योज्यो योगक्षेमसिद्ध्यै हि दण्डः॥१२॥

रक्षोपेति ॥ वामे प्रतिकूलेऽस्मिन् रावणे क्रुद्धे सति केन रक्षोपायः कर्तुं शक्यते, को योद्धुमीहेत । तस्मादुद्योक्तव्यं युद्धायोद्यमः कार्यः । एष कालः क्षमाया न । योगक्षेमसिद्ध्यै योगस्यालब्धलाभस्य क्षेमस्य लब्धपरिरक्षणस्य च सिद्ध्यै दण्डः सैन्यं योज्यः ॥ भारतीये—अस्मिन् मयि विष्णौ ॥

इत्येतस्मिन्नुक्तवत्येतदेवं धीरोदात्तं धर्मजन्मा बभाषे ।
गाम्भीर्येणानूनभाजाम्बवोऽसौ राशिः सत्त्वस्याश्रयः शौर्यवृत्तेः ॥१३॥

इत्येतेति ॥ धर्मजन्मा धर्मोपलक्षितं जन्म यस्य तादृक्, अनूनभाः प्रचुरकायकान्तिः, सत्त्वस्य गाम्भीर्येण राशिः, शौर्यवृत्तेराश्रयोऽसौ जाम्बव ऋक्षराज एतस्मिन् सुग्रीवे एतदेवमुक्तवति सति धीरोदात्तं यथा स्यात्तथेति वक्ष्यमाणं बभाषे ॥ भारतीये—अनून-

---

१. 'शूरश्चारुभटे सूर्ये' इति विश्वप्रकाशात् 'सुभटे शूरः सूर्ये च दन्त्योऽपि' इत्यूष्मविवेकात्सूर्येऽपि तालव्यादिः.

भाजा प्राचुर्यं भजता गाम्भीर्येण सत्त्वस्य आम्भवो राशिः समुद्रः, धर्मजन्मा युधिष्ठिरः ॥ एतस्मिन् कृष्णे ॥

कर्मोपायं प्रक्रमं तत्फलाप्तिं साधूदाख्यत्पौरुषेणानुविद्धम् ।
वस्तूदात्तं भूरिवागल्पसारा स्वल्पे दृश्यं दर्पणे हि स्थवीयः ॥ १४ ॥

कर्मोपेति ॥ जाम्बवान् युधिष्ठिरश्च पौरुषेण अनुविद्धमनुस्यूतं वस्तूदात्तमर्थसमृद्धं, कर्मोपायं बलदुर्गराष्ट्रविन्यासादिविषयमात्मीयं प्रक्रमं षड्गुणविषयं तत्फलाप्तिं कार्यारम्भात्कार्यफलं, साधु यथा स्यात्तथा स्यात्, उदाख्यदुदाहरत् । भूरिवाग् प्रचुरवचनमल्पसाराल्पार्था तुच्छा भवति । हि यतः स्वल्पेऽपि दर्पणे स्थवीयः स्थूलतरं दृश्यं भवति ॥

किं व्यायामो यो विहीनः शमेन व्यायामं यः प्रेक्षते किं शमस्तौ ।
योगक्षेमस्यैतयोः षड्गुणास्ते योनिस्तेभ्यः स्थानवृद्धिक्षयाः स्युः ॥ १५ ॥

किमिति ॥ यः शमेन क्षमासाधनेन स्वर्गफलेन विहीनः, स किं व्यायामः कार्यारम्भाणां योगाराधनलक्षणः, यः शमः व्यायामं प्रेक्षते स किं शमः । तौ शमव्यायामौ योगक्षेमस्य योनिः, एतयोः शमव्यायामयोः षड्गुणाः संधिविग्रहयानासनसंश्रयद्वैधीभावलक्षणाः योनिः । तेभ्यः षड्गुणेभ्यः स्थानवृद्धिक्षयाः स्युः ॥

तद्यातव्यं तत्प्रकृत्यानुकूल्यं दैवं मार्त्यं कर्मनिर्माणशक्तिम् ।
ध्यात्वा कृत्याकृत्यपक्षान्गृहीत्वा वाग्दानाभ्यामुद्यतेनाभिषेण्यम् ॥ १६ ॥

तदिति ॥ तत् तस्मात्कारणात्, उद्यतेन जिगीषुणा, तत्प्रकृत्यानुकूल्यं शत्रुप्रकृतीनां स्वाम्यमात्यादीनामानुकूल्यं, दैवं भाग्यं, मार्त्यं नयानयलक्षणं, कर्मनिर्माणशक्तिं कार्यनिष्पत्तियोग्यतां, ध्यात्वा वाग्दानाभ्यां कृत्याकृत्यपक्षान् भेद्याभेद्यपक्षान् गृहीत्वा आदाय अभिषेण्यं सेनया सह यातव्यम् ॥

साम्ना मित्रारातिघातौ भवेतां दण्डेनारं केवलं नैव मैत्री ।
सान्त्वे दण्डः साम दण्डे न वह्नेर्दाहोऽस्त्येकः शैत्यदाहौ हिमस्य ॥ १७ ॥

साम्नेति ॥ साम्ना मित्रं शत्रुघातश्च भवेताम्, दण्डेन केवलम् आरं शत्रुता स्यात्, न मैत्री । अतः सान्त्वे साम्नि दण्डः, दण्डे साम न प्रयोज्यम् । वह्नेरेको दाहोऽस्ति, हिमस्य शैत्यदाहौ भवतः ॥

तीक्ष्णो नादः साधयेद्यन्म्रदीयान्मूलं नाप्नोत्यग्निरापः खनन्ति ।
किंच प्राप्यं वक्रशीलो न यावद्यात्यवर्जुस्तावदभ्येत्य भुङ्क्ते ॥ १८ ॥

तीक्ष्ण इति ॥ यत् कार्यं म्रदीयान् साधयेत्, अदस्तीक्ष्णस्तीव्रो न साधयेत् । यतः अग्निर्मूलं (वृक्षस्य) न आप्नोति, आपस्तु मूलं खनन्ति । किं च यावत् वक्रशीलः प्राप्यं वस्तु न याति, तावदेव ऋजुरभ्येत्य प्राप्यं भुङ्क्ते ॥

साम्नारब्धे शात्रवे किं चरैर्वा भेद्या दूतैरेव तस्योपजाप्याः।
भिन्नं राज्यं सुप्रवेशं मणिं वा वज्रोत्कीर्णं निर्विशेत्किं न तन्तुः॥१९॥

सान्नेति॥ साम्ना शात्रवे शत्रुसमूहे आरब्धे चरैः किम्, तस्य शत्रोरुपजाप्याः कर्णेजपाः साम्ना भेद्याश्चेत् दूतैरेव किम्। भिन्नं राज्यं। वज्रोत्कीर्णं मणिं वा इव। सुप्रवेशं यथा स्यात्तथा तन्तुः किं न निर्विशेत्। विशेदेव॥

नानामार्गः पांसुलो दीर्घसूत्रः शत्रुः पन्थाश्चाप्तगत्यागमेन।
यत्तत्क्षेपं जायते तत्कदा वा गम्यो नीचैश्चक्षुरप्रक्रमेण॥ २० ॥

नानेति॥ नानामार्गः समृद्धासमृद्धप्रायः, पांसुलः पापभूयिष्ठः, दीर्घसूत्रो भाविकार्यफलसंपदन्वेषी शत्रुर्यदा आप्तगत्यागमेन आप्तानामवञ्चकानां यातायातेन, तत्क्षेपं तेषामवञ्चकाप्तानां क्षेपस्तिरस्क्रियाविशेषो यत्र कर्मणि यथा स्यात्तथा जायते, (तर्हि) कदा कदापि अविचारित एव नीचैर्न्यायमार्गहीनैः क्षुरप्रक्रमेण बाणश्रेण्या, नीचैश्चक्षुरप्रक्रमेण नीचैश्चक्षुषां तेषामाप्तानाम् अप्रक्रमेण गम्यो वैरिभिर्ध्येयो भवति। नानामार्गः प्राञ्जलाप्राञ्जलप्रायादिबहुप्रकारः, पांसुलो रेणूत्करसहितः, दीर्घसूत्रो दूरतरः पन्था अपि आप्तगत्यागमेन सघृणयातायातेन तत्क्षेपं ततस्तस्माद्देशात्क्षेपः क्षेपणीयानां कण्टकादीनां दूरीकरणं यत्र कर्मणि यथा स्यात्तथा जायते तर्हि कदाप्यविचारेणैव नीचैश्चक्षुरप्रक्रमेण अधोनयनव्यापारमन्तरेणैव गम्यः। कण्टकादिमति तु नयनव्यापारमन्तरा पीडा स्यादिति॥

अप्यज्ञात्वारावणावार्यशक्तिं के मे तन्त्रावापयोश्चेत्यमत्वा।
नो स्थातव्यं देशकालानपेक्षं शय्योत्थायं धावतां कार्यसिद्धिः॥२१॥

अपीति॥ रावणावार्यशक्तिं रावणस्याप्रतिषेध्यशक्तिमप्यज्ञात्वा, मे मम तन्त्रावापयोः तन्त्रे स्वप्रकृत्युत्पत्तिविधानलक्षणे आवापे परशक्तीनामात्मनि विषयेऽध्यारोपलक्षणे चापि के सन्ति इति अमत्वा देशकालानपेक्षं देशकालावनपेक्ष्य नो स्थातव्यम्। शय्योत्थायं शय्यात उत्थाय धावतां नराणां कार्यसिद्धिर्भवति॥ भारतीये—हे आर्य, अणौ अपि अरौ शत्रौ शक्तिम्॥

इत्याकूतं तस्य भीमोहितस्य ज्ञात्वालापैरञ्जनानन्दनोऽसौ।
इत्थंकारं पथ्यमर्थं जगाद न्याय्यं नोपेचिक्षिषन्ते हि सन्तः॥ २२ ॥

इतीति॥ असौ अञ्जनानन्दनो हनूमान् भीमोहितस्य भिया मोहितस्य भीममूहितं यस्येति वा तस्य ऋक्षराजस्य इति आकूतमाशयम् आलापैर्ज्ञात्वा इत्थंकारमित्थं वक्ष्यमाणरीत्या पथ्यं न्यायानपेतम् अर्थं जगाद। हि यतः सन्तः न्याय्यं न उपेचिक्षिषन्त उपेक्षितुमिच्छन्ति॥ भारतीये—रञ्जनानन्दनो रञ्जनया चित्ताह्लादनोपायलक्षणया नन्दयति तादृक् भीमो वृकोदरो हितस्याव्यभिचारिणस्तस्य युधिष्ठिरस्य॥

न्यूना वाणी नोपकुर्याज्जडानामुन्मूढानां चाधिकोद्वेजनाय।
न स्तोकेयं तावकी नातिरिक्ता वस्तूपात्तान्वेति लावण्ययुक्तिम्॥२३॥

न्यूनेति ॥ न्यूना अल्पाक्षरा वाणी जडानां नोपकुर्यात्। अधिकाल्पसारोन्मूढानामुद्वेजनाय भवति। इयं तावकी वाणी न स्तोका तुच्छा, नातिरिक्ता रिक्तमतिक्रान्ता प्रचुरा, वस्तूपात्ता परमार्थयुक्तियुक्ता लावण्ययुक्तिं प्रामाण्यघटनामन्वेत्यनुयाति ॥

संदिग्धेऽस्मिन्सत्पथे कापथौघैः पाश्चात्यानां पूर्वजैः पत्रपातः।
सोऽस्त्येवार्द्रो यः कृतः सन्नयाख्यस्तद्व्यामोहः किं वृथैव क्रियेत ॥२४॥

संदिग्ध इति ॥ कापथौघैर्दुर्जनमार्गसंघातैः संदिग्धेऽस्मिन् सत्पथे सन्मार्गे सति पूर्वजैर्यः पत्रपातः कृतः, स पत्रपातः सन्नयाख्यः सती समीचीना नयस्याख्या यस्य तादृगार्द्रो नूतनः पाश्चात्यानां पश्चाद्भवानामस्त्येव, तत्तस्माद् व्यामोहः किं वृथैव क्रियेत ॥

संतिष्ठन्ते सान्त्वमात्रेण नान्ये लिप्सन्तेऽर्थं ते न माद्यन्त्यदाने।
कुप्यन्त्यन्ते दत्रिमाद्वैरबन्धाद्वैरं मन्ये दत्रिमं तल्लघीयः ॥ २५ ॥

संतिष्ठेति ॥ ये अर्थं द्रव्यं लिप्सन्ते ते अन्ये शत्रवः सान्त्वमात्रेण न संतिष्ठन्ते न विरमन्ति, अदाने न माद्यन्ति तुष्यन्ति, अन्ते परिणामे दत्रिमात् दाननिर्वृत्तात् वैरबन्धात् कुप्यन्ति। तत् तस्माद्दत्रिमं दाननिर्वृत्तं वैरं लघीयोऽश्लाघ्यं मन्ये ॥

भेत्तुं नारिः शक्यतेऽरातिगृह्या भेद्या भिन्नेष्वेषु वैरी विभिन्नः।
किं भेदोक्त्या किं विभिन्नैः शफैर्वा गौरेवाश्वः किं त्वभिन्नैर्न वाह्यः॥२६॥

भेत्तुमिति ॥ यद्यरिर्भेत्तुं न शक्यते तदारातिगृह्याः शत्रुपक्षा भेद्याः, तेषु भिन्नेषु वैरी विभिन्न एव। अथवा भेदोक्त्या किम्। विभिन्नैः शफैः खुरैः किं गौरेव वाह्यः, अभिन्नैः खुरैः किम् अश्वो न वाह्यते। वाह्य एव ॥

कृत्याकृत्येष्वन्यदीयेषु योज्ये स्याद्दण्ड्योऽन्यः सामभेदोपदाने।
कल्प्येऽन्यस्मिन्कः परो दण्ड्यमानः शूराः शत्रौ कुर्वते तेन दण्डम्॥२७॥

कृत्येति ॥ अन्यदीयेषु परकीयेषु सामन्तमण्डलादिषु कृत्याकृत्येषु भेद्याभेद्येषु योज्ये सामभेदोपदाने साम-भेद-दानसमाहारे सति। अन्यः शत्रुर्दण्ड्यः स्यात्, अन्यस्मिञ्शत्रौ दण्डनीये कल्प्ये परः शत्र्वतिरिक्तः कोदण्ड्यमानो भवेत्। तेन शूराः शत्रौ दण्डं कुर्वते ॥

कोऽपि क्षोभीभूतलङ्केशवारी राजन्नासीद्व्याप्तवानित्यचिन्त्यम्।
शस्त्रं शास्त्रं विक्रमं कौलपुत्र्यं तस्यैवानुप्रेक्षसे नास्य विष्णोः ॥ २८ ॥

कोऽपीति ॥ हे राजन् सुग्रीव, जाम्बव, वा त्वया क्षोभीभूतलङ्केशवारी क्षुब्धरावणवारणशीलो व्याप्तवान् कोऽपि नासीदित्यचिन्त्यं न चिन्तनीयम्। त्वं तस्य रावणस्यैव शस्त्रं शास्त्रं विक्रमं कुलीनतां चानुप्रेक्षसे। अस्य विष्णो रामस्य नानुप्रेक्षसे ॥ भारतीये—राजन् युधिष्ठिर, कोऽपि क्षोभी केशवारिर्भूतलं व्याप्तवान् ना आसीत्। तस्य जरासंधस्य ॥

यः साम्राज्यं प्राज्यमध्यक्षमेषां त्वं नार्याद्यं नोऽग्रहीद्वेत्सि किं तम्।
सश्रीरामेणाहतो माधवेन द्रष्टव्योऽयं केन चान्येन साध्यः ॥ २९ ॥

य इति । यो रावणः एषां रामस्य (प्रभुत्वाद्बहुवचनम्) प्राज्यं प्रौढं नार्याद्यं सीताप्रधानमध्यक्षं सर्वविख्यातं साम्राज्यम् । सीताव्यतिरेकेणायोध्यायां पुनर्गमनाभावः सूचितः । अग्रहीत् तं रावणं किं त्वं नो वेत्सि । सोऽयं रावणो माधवेन लक्ष्मीपतिना श्रीरामेणाहतो मारितस्त्वया द्रष्टव्यः । अन्येन केन साध्यः ॥ भारतीये—हे आर्य, आद्यं प्रधानमेषां नोऽस्माकमध्यक्षं प्रत्यक्षम् । श्रीरामेण श्रीरामा रमणी यस्य तेन, सश्रीरामेण श्रिया रामेण बलभद्रेण सहितेन माधवेन नारायणेन । अयं जरासंधः ॥

दीप्त्यानिष्टं यस्य निष्टब्धमारं ख्यातोऽवद्यन्यश्चरित्रैरवद्यम् ।
युष्मादृक्षा बाहवो यस्य पक्षास्तत्त्रैलोक्यं जय्यमस्यावलोक्यम् ॥ ३० ॥

दीप्त्येति ॥ यस्य दीप्त्या कन्त्या आरं मणीनां समूहः कर्म अनिष्टं यथा स्यात्तथा निष्टब्धं निष्टप्तम् निरस्तम् यश्चरित्रैराचरणैरवद्यं गर्ह्यमवद्यन्नवखण्डयन् ख्यातः प्रसिद्धः, यस्य युष्मादृक्षाः पक्षा बाहवो वर्तन्ते, तत् तस्मादस्य रामस्य कृष्णस्य वा जय्यं जेतु शक्यं त्रैलोक्यमवलोक्यं विचारणीयम् ॥

इतीदमाकर्ण्य स पावनंजयेरतोऽत्रपार्थस्य विरित्सया रिपोः ।
उदीर्णमुच्चैःफलदोहलायुधस्तथासदृक्षः पुनरब्रवीद्वचः ॥ ३१ ॥

इतीति ॥ अतोऽनन्तरम्, फलदोहलायुधः फले विपक्षक्षोदलक्षणे दोहलमायुधं यस्य तादृक्, स ऋक्षो जाम्बव इत्युक्तप्रकारेणात्रपार्थस्य न त्रपामर्थयते तादृशः पावनंजयेः पवनंजयः केसरी तत्पुत्रस्य रिपोर्विरित्सया मारणेच्छयोच्चैरतिशयेनोदीर्णमुक्तामिदमाकर्ण्य पुनः तथा सत् समीचीनं वचोऽब्रवीत् ॥ भारतीये—असदृक्षोऽनुपमो जये रतः उच्चैःफलद उच्चैःफलानि ददाति तादृक् हलायुधो बलभद्रः । पावनं पवित्रम् ॥ वंशस्थं वृत्तम् ॥

आक्रीडशैलाः कुलपर्वतास्ते वाप्यः समुद्रा जगदङ्गणं तत् ।
दिशः समस्तास्तव लङ्घनानां भवन्ति कीर्तेरपि न प्रभूताः ॥ ३२ ॥

आक्रीडेति ॥ तव कीर्तेस्ते जगद्विख्याताः कुलपर्वताः, आक्रीडशैलाः क्रीडाक्षोणीधराः, समुद्राः, वाप्यः क्रीडाकमलदीर्घिकाः, तत् जगदङ्गणम् समस्ता दिशः, लङ्घनानामनर्गलफलकेलीनां प्रभूताः प्रचुराः न भवन्ति ॥ उपजातिः ॥

बलीयसोऽपि द्विषतां निहन्तुरवद्यवृत्तेरपि कीर्तिभाजः ।
मातेव नीतिर्विपदां निहन्त्री नेया न सा कामदुघावधूतिम् ॥ ३३ ॥

बलीयस इति ॥ बलीयसः अतिशयेन गजतुरंगमानुचरचरणलक्षणबाह्यशक्तित्रयलक्षणाभ्यन्तरबलवतः द्विषतां शत्रूणां निहन्तुः, अवद्यवृत्तेः निरवद्याचरणशीलस्य, अपि कीर्तिभाजः तव त्वया, कामदुघा कामधेनुः, माता इव विपदां निहन्त्री सा नीतिः अवधूतिमवधीरणाम् न नेया । कर्मणि प्रधाने प्रत्ययः । 'कृत्यानां कर्तरि वा' इति षष्ठी ॥

विद्याबलेन विभवेन पराक्रमेण
चिन्त्यस्त्वया बलवता बलवान्विपक्षः।
दण्डारणिप्रकृतिरग्निरिवान्तरुत्थ-
स्तापं तनोति हि महानुभयोर्विमर्दः॥ ३४॥

विद्येति॥ बलवता त्वया विपक्षः शत्रुरपि विद्याबलेन आन्वीक्षिकीत्रयीवार्तादण्डनीतिलक्षणराजविद्याचतुष्टयबलेन, विभवेन विभूत्या, पराक्रमेण पौरुषेण, बलवान् चिन्त्यः। हि यतः महान् विमर्दः सङ्ग्रामः। दण्डारणिप्रकृतिः अन्तरुत्थः अग्निरिव। उभयोस्तापं तनोति॥ वसन्ततिलका वृत्तम्॥

नयस्य शौर्यस्य धनस्य कीर्तेर्वाग्देवतायाः सततं श्रियश्च।
मध्यस्थभावेन कृताभिवृद्धिर्विभीषणः किं विदितो न भीष्मः॥ ३५॥

नयस्येति॥ भीष्मः भयजनकः। विभीषणो रावणानुजः॥ भारतीये—विभीषणः विशेषेण भयानकः। भीष्मः कौरवपितामहः॥ उपजातिः॥

त्वं श्रीमहामङ्गल कुम्भकर्णं कन्याकुमारं वर वीरलक्ष्म्याः।
समं रथो यस्य मनोरथश्च पूर्णस्तथाशासु कथं न वेत्सि॥ ३६॥

त्वमिति॥ हे श्रीमहामङ्गल, हे वीरलक्ष्म्या वर, त्वं कन्याकुमारं कन्येव(?)परिणीतः(?)कुमारस्तादृशं कुम्भकर्णं न कथं वेत्सि। यस्य रथो मनोरथश्च समं युगपदाशासु दिक्षु पूर्णः॥ भारतीये—हे कुम्भ गजमूर्धांश प्रधान, कन्याकुमारम् अपरिणीतायामेव कुन्त्यां सूर्याज्जातम्, कर्णम् राधेयम्॥

द्विषन्मारीचोद्यप्रबलरथवेगो दिशि दिशि
स्वयं गर्जन्द्रोणो रणशिरसि केनाथ विधृतः।
सदाप्युच्छ्वासेनोच्छ्वसिति भुवनं यस्य सकलं
स कैर्वार्यो दुर्योधन इह बलेनेन्द्रजिदसौ॥ ३७॥

द्विषदिति॥ अथ एतावत्कालपर्यन्तम्, द्विषन् प्रबलरथवेगः प्रबलो रथस्य वेगो यस्य तादृक् सन् दिशि दिशि द्रोणो मेघ इव स्वयं गर्जन् मारीचो रावणमातुलः, रणशिरसि सङ्ग्रामभूमौ केन विधृतः। न केनापि। यस्योच्छ्वासेन सकलं भुवनमपि सदोच्छ्वसिति सोऽसौ दुर्योधनो दुःखेन योद्धुं शक्य इन्द्रजिद् रावणात्मज इह सङ्ग्रामे कैर्बलेन वार्यः॥ भारतीये—द्विषन्मारी शत्रुनाशी चोद्यप्रबलरथवेगः चोद्य आश्चर्यविषयः प्रबलो रथस्य वेगो यस्य तादृक् सन् दिशि दिशि स्वयं गर्जन्। द्रोणः कौरवाचार्यः। बलेन शरीरसामर्थ्येन। इन्द्रजित् इन्द्रस्य जेता। दुर्योधनो गान्धारीपुत्रः॥ शिखरिणी वृत्तम्॥

एभिः शिरोभिरतिपीडितपादपीठः
सङ्ग्रामरङ्गशवनर्तनसूत्रधारः ।
तं कंसमातुल इहारिगणं कृतान्त-
दन्तान्तरं गमितवान्न समन्दशास्यः ॥ ३८ ॥

एभिरिति ॥ समातुलो मातुलेन मारीचेन सहितो, दशास्यो रावणस्तं प्रसिद्धं कमरिगणं शत्रुगणं कृतान्तदन्तान्तरं यमदशनमध्यं न गमितवान् । अपि तु सर्वम् ॥ भारतीये—स प्रसिद्धः । मन्दशास्यः मन्दाः शास्या यस्य तादृक् । कंसमातुलो जरासंधो न गमितवानिति काकौ ॥ वसन्ततिलका ॥

विगणय्य परस्य चात्मनः प्रकृतीनां समवस्थितिं पराम् ।
अमुयोपचिताः कयापि चेद्द्विषतेऽसूयियिषन्ति सूरयः ॥ ३९ ॥

विगणेति ॥ परस्य शत्रोरात्मनस्य परामुत्कृष्टां प्रकृतीनां स्थितिं विगणय्य ज्ञात्वा अमुया प्रकृतिस्थित्या कयापि चेदुपचिता वृद्धिंगताः, तर्हि सूरयो द्विषते असूयियिषन्ति ॥ वैतालीयं छन्दः ॥

तत्संहारो मा स्म भूद्बन्धुतायाः सिद्धादेशव्यक्तये सिद्धशैलम् ।
नीत्वा विष्णुं तं परीक्षामहेऽमी ज्ञात्वा दण्डं साम वा योजयामः ॥ ४० ॥

तदिति ॥ तत् तस्मात् कारणात् बन्धुताया बन्धुसमूहस्य मैत्र्या वा संहारो मा भूत् । अमी वयं सिद्धशैलं कोटिशिलां नीत्वा सिद्धादेशव्यक्तये श्रुतज्ञानोपदेशाय तं विष्णुं रामं नारायणं वा परीक्षामहे । ज्ञात्वा परीक्ष्य दण्डं साम वा योजयामः ॥ शालिनी ॥

इत्यस्य वाचमभिनन्द्य भरोत्थितानां
राज्ञां गलाङ्गदगलद्बुलिकाच्छलेन ।
मन्त्रस्य कल्पितमिवाजनि मल्लिकाना-
माराधनंजयपरं मुकुलोपहारैः ॥ ४१ ॥

इति धनंजयकविविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये सुग्रीवजाम्बवाञ्जनानन्दन-नारायणपाण्डवादिमन्त्रकथनो नामैकादशः सर्गः समाप्तः ।

इत्यस्येति ॥ इति पूर्वोक्तामस्य जाम्बवस्य बलभद्रस्य च वाचं वाणीमभिनन्द्य संस्तुत्य भरोत्थितानां राज्ञां गलाङ्गदगलद्बुलिकाच्छलेन कण्ठकेयूरक्षरन्मौक्तिकव्याजेन मन्त्रस्य मल्लिकानां मुकुलोपहारैः कलिकोपहारैः कल्पितमिव जयपरं जयं पिपर्ति तदाराधनमजनि॥ वसन्ततिलका वृत्तम् ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीच्छोटीलालात्मजश्रीबदरीनाथविरचितायां
द्विसंधानकाव्यटीकायां सुग्रीवजाम्बवाञ्जन-नारायणपाण्डवादि-
मन्त्रकथनो नामैकादशः सर्गः ॥

द्वादशः सर्गः ।

अथ वानराधिपतिभिः प्रबलैः परमः पुमान्बलयुतोऽनुगतः ।
श्रुतविक्रमप्रशमिभिः प्रययौ विनयैर्विभूतिमिव सिद्धशिलाम् ॥ १ ॥

अथेति ॥ अथ मन्त्रनिर्णयानन्तरं प्रबलैः प्रकृष्टसामर्थ्यैः श्रुतविक्रमप्रशमिभिः शास्त्र-पौरुषोपशमवद्भिर्वानराधिपतिभिः सुग्रीवप्रभृतिभिरनुगतः, बलयुतः शरीरसामर्थ्ययुक्तः, परमः पुमाल्लक्ष्मणः सिद्धशिलां कोटिशिलाभिधां दृषदम् । विनयैर्विभूतिमिव । प्रययौ ॥ भारतीये—नराधिपतिभिः समुद्रविजयादिभिः । बलयुतो बलभद्रयुक्तः । परमः पुमान् नारायणः ॥ सर्गेऽस्मिन्प्रमिताक्षरा वृत्तम् ॥

अनुजग्मुरेनमनुकूलतया हरिवंशजाः सुखचरा बहवः ।
व्यवसायमायनिचया इव तं किममी न वाततनयप्रमुखाः ॥ २ ॥

अनुजेति ॥ सुखचराः शोभनाकाशगामिनो बहवो वाततनयप्रमुखाः हनुमत्प्रमुखाः हरिवंशजा वानरान्वयोत्पन्ना अमी तमेनं लक्ष्मणमनुकूलतया । आयनिचया द्रव्यप्रवेश-द्वाराणि व्यवसायमुद्योगमिव । किं नानुजग्मुः । अनुगतवन्त एव ॥ भारतीये—सुखचराः शर्मगामिन आतत-नय-प्रमुखा विस्तीर्णनीतिप्रमुखा हरिवंशजा यादवकुलप्रसूताः ॥

रविमण्डलोत्थित इवान्य इव स्वयमन्यजन्म गतवानिव सः ।
नरभीमयोजनसुदुःसहया प्रभया परिष्कृततनुः शुशुभे ॥ ३ ॥

रवीति ॥ रविमण्डलोत्थितः सूर्यबिम्बोत्पन्न इव, अन्य इव, स्वयमन्यजन्म जन्मान्तरं गतवान् इव, इत्युत्प्रेक्षया नरभीमयो नराणां भयहेतुर्जनसुदुःसहया जनैरतिशयेन सोढुम-शक्यया, प्रभया परिष्कृततनुर्भूषितदेहः स लक्ष्मणः शुशुभे ॥ भारतीये—नरभीमयोजन-सुदुःसहया नरस्यार्जुनस्य भीमस्य वृकोदरस्य च योजनेन योगेन सुदुःसहया, स नारायणः॥

विशदं यशोऽखिलदिशं निखिलां भुवमायतिः स्तुतिकथां महिमा ।
समतीयिवत्सममिदं सकलं भुजयोः शिरोऽस्य समतीतवतोः ॥ ४ ॥

विशदमिति ॥ अस्य भुजयोः शिरः (उन्नतस्कन्धत्वात्) समतीतवतोः सतोः, विशदं यशोऽखिलदिशं समस्ता दिशः, आयतिर्विख्यातिर्निखिलां भुवम्, महिमा स्तुतिकथाम् समं युगपद् इदं सकलं समतीयिवत् ॥

किमु मे भुजेन भुवनस्य भरं वहतः शिला बहिरियं जगतः ।
दधतो भुवं किमु नगस्य भरस्तरुरित्ययं स्मयमियाय मुहुः ॥ ५ ॥

किम्विति ॥ भुजेन भुवनस्य भरं वहतो मे इयं शिला जगतो बहिः किमु, भुवं दधतो मे अयं नगस्याद्रेर्भरस्तरुश्च बहिः किम्विति स्वयं गर्व मुहुरियाय ॥

विनिपातितं विनिहतं प्रथमं क्वचिदात्मनोद्धृतमदः सुहृदाम् ।
अधुनात्मसाहसमसौ सहसा ददृशे व्रजन्निव निरूपयितुम् ॥ ६ ॥

विनीति ॥ असौ सुहृदां प्रथमं प्रथमसदृशमदः, आत्मसाहसं धैर्यमात्मना क्वचित् अधुना विनिपातितं विनिहतं वा इति निरूपयितुं सहसा शीघ्रं व्रजन्निव ददृशे ॥

सघनागमो निजशुचिः सुरभिर्वनपुष्पगः समहिमोग्रजवः ।
सरसां शरच्छविमितः शिशिरो मरुदन्वगात्तमृतुमूर्तिरिव ॥ ७ ॥

सघनेति ॥ सघनागमो घनागमेन मन्दगत्या सहितो वर्तमानः, स प्रसिद्धो घनागमः प्रावृट् च । निजशुचिर्निजेनात्मना शुचिः पवित्रः, ग्रीष्मश्च । वनपुष्पगः सुरभिः वनपुष्पगत्वेन सुरभिः कान्तारकुसुममकरन्दबिन्दूत्करवासनावासिततनुः, वनपुष्पज्ञेयो वसन्तश्च । समहिमा महिम्ना सहित उग्रजव उत्कटवेगः, समहिमः समं हिमं यस्येति शीतली अग्रजवः प्रधानवेग इति वा समहिमोग्रजवः समोऽहर्निशतुल्यो हिमस्योग्रोऽसह्यो, जवो यस्मिन् स हेमन्तः । सरसां रसिकां शरच्छविं जलरूपतामितः सीकरबहुलः, सरसां सरोवराणां छविं स्वच्छतामितः प्रापयिता शरत्कालः । शिशिरः शीतलः शिशिरनामा च ॥

क्वचनातिपातमटवीमटवीं सधुनीं धुनीमभिनिवेशमगात् ।
स लतागृहान्वसतिरम्यतया तरसाभिपादमभिपादमगात् ॥ ८ ॥

क्वचनेति ॥ सोऽगात् पर्वतात् क्वचनाटवीमटवीं वनंवनमतिपातमतिपत्य सधुनीं धुनीं नदी मिलिताम् नदीमभिनिवेशमभिनिविश्य वसतिरम्यतया मन्दिररमणीयतया लतागृहान् अभिपादमभिपादमभिपद्याभिपद्य तरसा शीघ्रमगाद्गतवान् ॥

पथि पाण्डुराजकुलवृद्धिमतः किल केशवं मुखरयन्ककुभः ।
इति भीमसेन उचितावसरं सरसं जगाद स मरुत्तनयः ॥ ९ ॥

पथीति ॥ अतोऽस्मात्कारणात् किल लोकोक्तौ शास्त्रोक्तौ वा भीमसेनो भयानकबलः स मरुत्तनयो हनूमान् ककुभो दिशो मुखरयन् प्रतिशब्दयन् पाण्डुराजकुलवृद्धिं पाण्डुरस्य अजकुलस्य दशरथादिपुरुषकुलस्य वृद्धिर्यस्मात् तादृशं पाण्डु निर्मलम् इति क्रियाविशेषणं वा राजकुलवृद्धिं केशवं लक्ष्मणं इति वक्ष्यमाणमुचितावसरं सरसं जगाद ॥ भारतीये—मरुत्तनयो वायुपुत्रो भीमसेनो वृकोदरः, पाण्डुराजकुलवृद्धिं पाण्डुनामकराजकुलस्य वृद्धिर्यस्मात्तं केशवं नारायणम् ॥

शशिनस्तुलां समुपयाति कुलं भवतो यतेरुपशमश्च विधाम् ।
तव पौरुषं स्वसदृशं भुवनं भ्रमदव्यपेक्ष्य भुजयोरजरत् ॥ १० ॥

शशीति ॥ भवतः कुलं शशिनस्तुलाम्, उपशमो यतेर्विधाम्, समुपयाति । तथा तव पौरुषं भुवनं भ्रमत् सत् स्वसदृशमव्यपेक्ष्यादृष्ट्वा भुजयोरजरत् जीर्णम् ॥ एतेन शत्रूणामभावेन युद्धाभावो दर्शितः ॥

तव पूर्वजेन यदुनोपनताः किमरातयो नरघुणा निहताः ।
सकलं जगद्वशगतं कृतवान्स कया शिलोद्धरणडम्बनया ॥ ११ ॥

तवेति ॥ यत् यस्मात्कारणादु अहो, तव पूर्वजेन रघुणा किमरातयो नोपनता न निहताः । निहता एव । स रघुः सकलं जगत् कथा तव शिलोद्धरणडम्बनया वशगं कृतवान् ॥ भारतीये—यदुना यादवकुलाद्यपुरुषेण, नरघुणा नरकीटा अरातयः ॥

जनमाकलय्य भुवि सांशयिकं भवतस्तथाप्युचितमुद्यमनम् ।
तदिदं द्विषां हि पलितंकरणं विजयश्रियश्च सुभगंकरणम् ॥ १२ ॥

जनमिति ॥ यद्यपि त्वं भुवि जनं सांशयिकं संशयापन्नमाकलय्यालोकय । तथापि भवत उद्यमनमुद्यम उचितम् । हि स्फुटं तदिदमुद्यमनं द्विषां पलितंकरणम्, विजयश्रियः सुभगंकरणम् अस्ति ॥ 'आढ्यसुभग-' इति च्व्यर्थे ख्युन् ॥

कुलपर्वताः कुलपराभवतः समवैमि तेऽद्य निजमुन्नमनम् ।
कलयन्ति फल्गु विलयं मनुते सवितोदयास्तमयसानुमतोः ॥ १३ ॥

कुलेति ॥ कुलपर्वता मेर्वादयस्ते तव कुलपराभवतः कुलात्पराभवतो निजं स्वकीयमुन्नमनं फल्गु व्यर्थं कलयन्ति मन्यन्ते । इति हेतोः । अथ सांप्रतं सवितोदयास्तमयसानुमतोरुदयाद्यस्ताद्र्योर्विलयं मनुते । एतेन स्वस्य निराश्रयत्वशङ्कया सखेदता मता भवति । इत्यहं समवैमि जाने ॥

तदितो निरूपय पयोधरयोस्तटयोर्भरेण मृदुमन्दगतिम् ।
बलिशोभितां सरितमश्वमुखीमपि सारसानुगमनाकुलिताम् ॥ १४ ॥

तदित इति ॥ तस्मादितः स्थानात् । पयोधरयोर्जलधारिणोस्तटयोः कूलयोर्भरेण मृदुमन्दगतिं पेशलालसप्रवाहाम्, तटयोरुच्छ्रितयोः । 'तट उच्छ्राये' । पचाद्यच् । पयोधरयोः स्तनयोर्भरेण भारेण मृदुमन्दगतिं पेशलालसगमनां च । बलिशोभितां तरङ्गभूषितां, जठरराजित्रयविराजितां च । सारसानुगमनाकुलितां सारसानां लक्ष्मणानामनुगमनेन पश्चाद्गत्या आकुलिताम्, सारेणोत्कृष्टेन सानुषु गमनेनाकुलितां च । सरितं नदीम् अश्वमुखीं किंनरीं च निरूपयावलोकय ॥

इह सैकतं तरणितप्तमिदं परिहृत्य हंसकुलमेति सरः ।
विरला वसन्ति च सति व्यसने किमु पक्षपातनिरता हि पुनः ॥ १५ ॥

इहेति ॥ इह देशे इदं हंसकुलं कर्तृ तरणितप्तं सूर्यतापितं सैकतं सिकताप्रचुरं परिहृत्य त्यक्त्वा सर एति । व्यसने निवासनिपाते आपत्तौ सति विरला वसन्ति । पक्षपातनिरता गृह्यत्वाभिनिवेशिनः परिच्छदानां पाते निरताः पुनः किमु ॥

परतो नतं जघनपार्ष्णिभराद्बहु पूर्वतः कुचभरात्किमपि ।
पुलिनेषु सूचयति तत्पदयोरमराङ्गनागमनमत्र पदम् ॥ १६ ॥

परत इति ॥ जघनपार्ष्णिभरात् जघनयोः पार्ष्ण्योश्च भरात् भारात् बहु यथा स्यात्तथा

परतः पश्चाद्भागे नतम्, कुचभरात् स्तनभारात् किमप्यल्पं यथा स्यात्तथा पूर्वतो नतं तत्पदयोरमराङ्गनाचरणयोः पदं स्थानं कर्तृ पुलिनेषु सैकतेष्वमराङ्गनागमनं सूचयति ॥

अमुतश्च पुष्पशयनं रचितं नवयावकाङ्कितपदं त्रिदशैः ।
रुधिरारुणं कुसुमबाणचितं मदनस्य पञ्चकमिव ज्वलति ॥ १७ ॥

अमुत इति ॥ अमुतोऽमुष्मिन्प्रदेशे त्रिदशैर्देवै रचितं विहितं नवयावकाङ्कितपदं नूतनालक्तकचिह्नितचरणं पुष्पशयनं कुसुमशय्या । रुधिरारुणं रक्तशोणितं कुसुमबाणचितं प्रसूनशरव्याप्तं मदनस्य कंदर्पस्य पञ्चकं रणस्थलमिव । ज्वलति भाति ॥

स्तनतापसूनमवनम्रनलं बिशपत्रमत्र कुसुमास्तरणे ।
किमुतोज्झितान्यमनसा विगुणा सुरयोषिता विरहवल्लकिका ॥ १८ ॥

स्तनेति ॥ अत्र कुसुमास्तरणे, स्तनतापसूनं कुचतापशुष्कम् (अतएव) अवनम्रनलं म्लाननालं बिशपत्रं पद्मिनीदलम् अस्ति । अन्यमनसा विरहेण खिन्नचित्तया सुरयोषिता अमररमण्या विगुणा त्रुटिततन्त्रीर्विरहवल्लकिका वियोगवीणोज्झिता त्यक्ता किमुत ॥

मृगनाभिजं परिमलं द्विरदः करिदानगन्धमनुयाति हरिः ।
इह जन्तुरेवमपरोऽपि परं विनिहन्तुमेव समनुव्रजति ॥ १९ ॥

मृगेति ॥ परिमलेनैव तत्तद्भ्रान्त्या तस्य तस्य विनिहन्तुं धावनम् ॥

सरसीह मज्जति करिण्यलिनां परिधिः कराग्रनिभृतः स्फुरति ।
जलदेवतार्थमिदमुद्गतवत्क्षणमातपत्रमिव बर्हमयम् ॥ २० ॥

सरसीति ॥ इह सरसि, करिणि मज्जति सति, कराग्रनिभृतः शुण्डादण्डाग्रस्थितो अलिनां परिधिः परिवेषः । जलदेवतार्थमुद्गतवदुदितं क्षणं बर्हमयं पिच्छमयम् आतपत्रं छत्रमिव । स्फुरति ॥

सबलाकिका नवतृणा जगती मृदु निर्झरं वहति वाति मरुत् ।
सविताऽऽवृतश्च विपिनैरिह किं जलदागमः सततसंनिहितः ॥ २१ ॥

सबलाकीति ॥ इह सबलाकिका बलाकया बिसकण्टिकया सहिता, नवतृणा नूतनतृणा जगती पृथ्वी मृदु निर्झरं वहति, मरुद्वायुर्वाति, सविता च विपिनैरावृतः । तथा च जलदागमः प्रावृट्कालः किं सततसंनिहितोऽस्ति ॥

द्विपदन्तपत्रमदमौक्तिकवद्दधतः श्रवोभुजगलं शबरान् ।
करिणां न केवलमसून्मनुवे हरतोऽमुतः सकलसारमपि ॥ २२ ॥

द्विपेति ॥ अमुतोऽमुष्मिन्देशे द्विपदन्तपत्रमदमौक्तिकवत् गजानां दन्तपत्रमदमौक्तिकव्याप्तं श्रवोभुजगलं कर्णबाहुकण्ठं यथाक्रमं दधतः शबरान् केवलं करिणामसून् प्राणान् हरतो न मनुवे । किंतु सकलसारम् अपि हरतः ॥

अभिषेचकं निपतता हरिणा पुरतः क्रमेण पदयोर्द्विरदः ।
स्थितवानिहोन्नमितकुम्भकरः क्षणमङ्कुशेन विनिरुद्ध इव ॥ २३ ॥

अभीति ॥ अभिषेचकं पुच्छमूलं लक्षीकृत्य पुरतः पदयोश्चरणयोः क्रमेण निपतता हरिणा सिंहेनोन्नमितकुम्भकर ऊर्ध्वनीतकुम्भकरो द्विरदः क्षणमङ्कुशेन विनिरुद्ध इव । स्थितवान् ॥

तरवो न सन्त्यफलिनो न लताः कुसुमोज्झिता न विरतस्तुतयः ।
सरितोऽलिहंसशुककोकिलकध्वनिवर्जितोऽत्र न परोऽस्ति रवः ॥ २४ ॥

तरव इति ॥ स्पष्टम् ॥

इह भान्ति मण्डपभुवः सलताः सवितर्दिका गिरिपतत्सलिलाः ।
वनदेवताभिरपदिश्य मिथः पथिकान्प्रपा इव शुचौ रचिताः ॥ २५ ॥

इहेति ॥ इह सलताः सवितर्दिका उपवेशनस्थानसहिता गिरिपतत्सलिला गिरिभ्यः पतत् सलिलं यत्र तादृशो मण्डपभुवः । वनदेवताभिः पथिकानपदिश्योद्दिश्य मिथः परस्परं शुचौ ग्रीष्मे रचिताः प्रपा इव । भान्ति ॥

पतितस्तरोः शकुनिविष्टिचितः शबरैरितोऽर्कशपथक्रियया ।
उपयुक्तमुक्तसिततण्डुलकैरवभाति कीर्ण इव पर्णचयः ॥ २६ ॥

पतित इति ॥ तरोः पतितः शकुनिविष्टिचितो विहंगामेध्ययुक्तः पर्णचयः । शबरैः पुलिन्दैः [कर्तृभिः] अर्कशपथक्रियया सूर्यार्चाविधिनोपयुक्तमुक्तसिततण्डुलकैरुपयोगीकृतोज्झितश्वेततण्डुलसमूहैः कीर्णो भृत इव । अवभाति ॥

कुसुमं धनुर्मधुलिहोऽस्य गुणः शुककूजितं समरतूर्यरवः ।
मदनस्य साधनमिदं प्रचुरं सुलभं न साध्यमिह तद्विपिने ॥ २७ ॥

कुसुममिति ॥ यस्मात् कुसुमं धनुः, मधुलिहो भ्रमरा अस्य धनुषो गुणो ज्या, शुककूजितं समरतूर्यरवः सङ्ग्रामतूर्यध्वनिः जायते इति मदनस्य कंदर्पस्य साधनं प्रचुरम् (अतएव) सुलभम् । तस्मादिह विपिने न किंचित् साध्यम् ॥

त्रिदिवेच्छया व्रतमिहत्यजनैः क्रियते न मुच्यत इदं दिविजैः ।
तदिदं वनं दिवमवैमि दिवं शतशीर्णकल्पतरुशेषहताम् ॥ २८ ॥

त्रिदिवेति ॥ इहत्यजनैरिहभवैर्जनैः । [अव्ययात्त्यप् ।] त्रिदिवेच्छया स्वर्गेच्छया व्रतं क्रियते, दिविजैः स्वर्गजैर्देवैरिदं न मुच्यते, तस्मादिदं वनं दिवं स्वर्गम्, दिवं द्यां शतशीर्णकल्पतरुशेषहताम् देवानामत्र वने वासात् स्वीयफलाभक्षणेन भाराक्रान्ततया शतं यथा स्यात्तथा शीर्णानां कल्पतरूणां शेषेण हताम् अवैमि जाने ॥

इति संकथां निशमयन्सुहृदः स निशामयन्सपदि तत्तदयम्।
समराघवक्रमधुराजगती रतिमाप येन समवाप शिलाम्॥ २९॥

इतीति॥ येन लक्ष्मणेन, समराघवक्रमधुरा समा राघवस्य रघुसंबन्धिनः क्रमस्य धूर्जगती पृथिवी रतिमाप। सोऽयमिति पूर्वोक्तां सुहृदो हनूमतः संकथां वार्तां निशमयञ् शृण्वंस्तत्तत्पदार्थजातं सपदि निशामयन् पश्यन् शिलां समवाप॥ भारतीये—येन नारायणेन समराघवक्रमधुराजगतिः समरे अघस्य पापस्य वक्रस्य कुटिलस्य मधोर्दैत्यस्य राजगती राज्यम्, रतिं नाशमाप। सुहृदो भीमस्य॥

ऋषिकोटिभीत इति जन्यभिया स्वगले निबध्य मदनेन नदीम्।
प्रविविक्षुणा खलु कुतश्चिदियं न शिलाहृतेति कलितं हरिणा॥३०॥
प्रभविष्यतः कलियुगाद्भयतो न खलूपगोप्य भुवि धर्मनिधिम्।
यतिभिः शिलोपरिकृतेयमिति प्रवितर्कितं हलधरेण तदा॥ ३१॥

ऋषीति॥ ऋषिकोटिभीत इति जन्यभिया जनापवादभयेन स्वगले शिलां निबध्य नदीं प्रविविक्षुणा मदनेन रतिपतिना कुतश्चिदियं शिला नाहृता। अपि त्वाहृतैव। इत्येवं प्रकारेण हरिणा लक्ष्मणेन कृष्णेन च कलितम्। प्रभविष्यतो भाविनः कलियुगात् तद्धेतुकाद् भयतो भयात् भुवि भूमौ धर्मनिधिमुपगोप्य गोपयित्वोपरीयं शिला खलु निश्चयेन यतिभिः कर्तृभिः न कृता। अपि तु कृतैवेति तदा तत्काले हलधरेण रामेण बलभद्रेण च प्रवितर्कितम्॥

हरिणा जिनाभिषवणोन्मनसा जनताविदूर्यमुपपादयितुम्।
निकटान्न पाण्डुकशिलागपतेः खलु साहृतेत्यवहितं हरिभिः॥ ३२॥

हरिणेति॥ जिनाभिषवणोन्मनसा जिनदेवस्याभिषेकं कर्तुमनसा हरिणेन्द्रेण जनताविदूर्यं जनसमूहनिकटतामुपपादयितुमगपतेर्मेरोर्निकटात्समीपात् सा पाण्डुकशिला खलु निश्चयेनाहृता इति हरिभिर्वानरैर्यादवैर्वावहितम्॥

उपवीणयन्दृषदि सिद्धपदं निलयान्निलिम्पनिवहो निरगात्।
न महः क्षणं विषहते स्म हरेर्बलवत्तरोऽस्ति बलिनोऽप्यथवा॥ ३३॥

उपवीति॥ सिद्धपदं जिनेश्वरयश उपवीणयन् वीणयोपगायन् निलिम्पनिवहो देवसमूहो निलयात् गृहाद् दृषदि तस्यां शिलायां निरगात्। तथा हरेर्लक्ष्मणस्य कृष्णस्य च महस्तेजः क्षणं न विषहते स्म। यतः बलिनोऽपि बलवत्तरोऽस्ति॥

गजगण्डघट्टितमदच्छुरितां गजशङ्कया मुनिशिलां नखरैः।
विलिखन्रसन्नभिपतञ्शरभः शरणं व्यगाहत गुहागहनम्॥ ३४॥

गजेति॥ गजगण्डघट्टितमदच्छुरितां करिकपोलसंघर्षमदजलविलिप्तां मुनिशिलां गजश-

ङ्क्या नखरैर्नखैर्विलिखन्, रसन् गर्जन्, अभिपतन् संमुखं गच्छन्, शरभः शार्दूलः गुहागहनं गुहावने दरीमुखं वा व्यगाहत प्राविक्षत ॥

तमुदीक्ष्य शैलमुपयन्रभसा ववृधे स्वयं स भुवनाभ्यधिकम् ।
करकन्दुकाद्गिरिमतीव लघुं पुरुषोत्तमोऽतिपरुषोऽजगणत् ॥ ३५ ॥

तमिति ॥ अतिपरुषो अतिनिष्ठुरः स पुरुषोत्तमो लक्ष्मणो नारायणश्च, तं शैलमुदीक्ष्य, रभसौत्सुक्येनोपयन् समीपमागच्छन्, स्वयमात्मना, भुवनाभ्यधिकं यथा स्यात्तथा ववृधे । गिरिं कोटिशिलानामानम्, करकन्दुकाद् हस्तगेन्दुकादतीव लघुमजगणत् ॥

जघनं निबध्य वसनेन घनं विनियम्य केशनिचयं शिरसि ।
भुवमुत्खनंश्चरणपार्ष्णितलैः स ववल्ग मल्ल इव वल्गु नदन् ॥ ३६ ॥

जघनमिति ॥ स लक्ष्मणो विष्णुर्वा वसनेन वस्त्रेण जघनं नितम्बं घनं यथा स्यात्तथा निबध्य शिरसि केशनिचयं विनियम्य दृढं नियन्त्र्य चरणपार्ष्णितलैर्भुवं भूमिमुत्खनन् वल्गु मनोहारि यथा स्यात्तथा नदन् सन् मल्ल इव ववल्ग चचाल ॥

पदघातजातदरि मुक्तधरं स धराधरं सुकृतवान्कृतवान् ।
विजहाति वा बलवता निहतः श्लथमण्डलः किल न कः पृथिवीम् ॥ ३७ ॥

पदेति ॥ सुकृतवान् पुण्यवान् स लक्ष्मणो विष्णुश्च धराधरं कोटिशिलानामकपर्वतं पदघातजातदरि पदयोर्घातेन जाता दरी यत्र तादृक्, मुक्तधरं मुक्ता त्यक्ता धरा पृथ्वी येन तादृक् यथा स्यात्तथा कृतवान् । बलवता निहतः श्लथमण्डलः सन् कः पृथिवीं न विजहाति ॥

स दरीमुखेन नतकुब्जतनुः प्रविशन्नधस्पदममुष्य गिरेः ।
समवैमि दर्शितवराहगतिर्गतवान्वराह इति नाम तदा ॥ ३८ ॥

सदेति ॥ नतकुब्जतनुर्नता कुब्जा तनुः शरीरं यस्य सोऽमुष्य गिरेरधस्पदमधोभागं दरीमुखेन प्रविशन् दर्शितवराहगति दर्शिता वराहस्येव गतिर्येन स लक्ष्मणः कृष्णश्च तदा वराह इति नाम गतवान् इति समवैमि ॥

उरसा निपीड्य भुजयोर्द्वितयं परितः प्रसार्य परिधार्य शिलाम् ।
समुदक्षिपद्वरविवाहशिलामिव गोमिनीं परिणिनीषुरसौ ॥ ३९ ॥

उरसेति ॥ गोमिनीं लक्ष्मीं परिणिनीषुः परिणेतुमिच्छुरसौ लक्ष्मणः कृष्णश्च, भुजयोर्द्वितयमुरसा निपीड्य परितः सर्वतः प्रसार्य शिलां कोटिशिलाम् । वरविवाहशिलामिव । समुदक्षिपत् समुच्चिक्षेप ॥

कृतपाणिपीडनविधिः प्रथमं पुरुषोत्तमेन समुद्धृततनुः ।
विरराज कोटिकशिला भयतः परिकम्पिता नववधूरिव सा ॥ ४० ॥

कृतेति ॥ पुरुषोत्तमेन लक्ष्मणेन विष्णुना नरप्रधानेन च। प्रथमं कृतपाणिपीडनविधिः कृतः पाणिना पीडनस्य विधिर्यस्याः सा, विहितपरिणयनविधाना च। समुद्धूतनुः समुद्धृतमूर्तिर्भयतः परिकम्पिता कोटिकशिला नववधूर्नवोढेव। विरराज ॥

परितः पतद्भुजगपङ्क्तिरसौ गलितान्त्रजालजटिलेव बभौ।
परिभिन्ननिर्झरजला हरिणा विधृतानिलेन घनमूर्तिरिव ॥ ४१ ॥

परित इति ॥ परितः सर्वतः पतद्भुजगपङ्क्तिः क्षरत्सर्पश्रेणिरसौ शिला। गलितान्त्रजालजटिला च्युतान्त्रमालारूपजटावलम्बिनीव। परिभिन्ननिर्झरजला स्रवन्निर्झरपानीया हरिणा लक्ष्मणेन कृष्णेन। अनिलेन वायुना घनमूर्तिरिव। विधृता ॥

दिवि दुन्दुभिः प्रणिननाद दिवः कुसुमाञ्जलिः प्रणिपपात तथा।
तमुदीक्ष्य विस्मयमिवोच्चलितास्तरवोऽपि पुष्पमभितश्चकरुः ॥ ४२ ॥

दिवीति ॥ तं लक्ष्मणं विष्णुमुदीक्ष्य विस्मयमाश्चर्यमुच्चलिता इव ॥

द्विषतां भयेन सुहृदां प्रमुदा द्युनिवासिनामतिशयेन हरेः।
अपि साहसैरभवदुद्भूषितं ननु वस्त्वनेकविधमेकविधम् ॥ ४३ ॥

द्विपतामिति ॥ एकविधमपि वस्त्वनेकविधं भयप्रमोदाश्चर्यसाहसबोधकमभवत् ॥

अवलोक्य तं कलकलं मुमुचुर्दिशि खेचरा जितशिलोद्धरणम्।
सहधर्ममानितनया विततं प्रविजेष्यसे रिपुमपीति जगुः ॥ ४४ ॥

अवलोक्येति ॥ सहधर्ममानितनया सहैव धर्मेण विनयलक्षणेन शिष्टपरिपालनदुष्टनिग्रहलक्षणेन वा मानितो नयो येषां ते खेचराः सुग्रीवादयो जितशिलोद्धरणं जितं शिलाया उद्धरणं येन तादृशं तं लक्ष्मणमवलोक्य दिशि दिक्षु कलकलं कोलाहलं मुमुचुः। तथा विततं रिपुं रावणाभिधमपि प्रविजेष्यसे इति जगुः ॥ भारतीये—खेचरा देवाः। तं कृष्णम्। सह युगपत् एककालम्। कलकलं मुमुचुः। धर्ममानितनयाः धर्मस्य पाण्डुनृपस्य मानिनस्तनया युधिष्ठिरप्रभृतयो विततमनवरतं यथा स्यात्तथा जगुः ॥

प्रतिरोप्यतां तदियमत्र शिला भवितासि शत्रुकुलनिर्दलनः।
प्रतिशुश्रुवानिति वचः सुहृदां समतिष्ठिपत्पुनरिमां स हरिः ॥ ४५ ॥

प्रतिरोप्येति ॥ स हरिर्लक्ष्मणः कृष्णश्च 'तत्तस्मादियं शिला अत्र यथास्थानं प्रतिरोप्यताम्, त्वं शत्रुकुलनिर्दलनो रिपुवंशावमर्दी भवितासि' इति सुहृदां वचः प्रतिशुश्रुवान् अङ्गीकृतवान् पुनरिमां समतिष्ठिपत् प्रतिरोपयामास ॥

सरसीजलप्लवहिमस्तमसौ द्विपदानसौरभमथानुभवन्।
मृगनाभिगन्धमपि गन्धवहः सभयं वनेचर इवाभिययौ ॥ ४६ ॥

सरसीति ॥ अथ सरसीजलप्लवेन हिमो द्विपदानसौरभं गजमदामोदम्, मृगनाभिगन्धं

कस्तूरीपरिमलमप्यनुभवन्नसौ गन्धवहो वायुः । वनेचर इव । तं लक्ष्मणं कृष्णं च सभयं यथा स्यात्तथाभिययौ ॥

उत्खातरोपणमिदं निजमेव पुंसां न्याय्यं व्रतं तदनुपालय पालनीयम् ।
इत्यग्रजस्य वचनं प्रतिमान्य तुष्टस्तुष्टाव सिद्धपदपङ्क्तिमसावुपेन्द्रः ॥ ४७ ॥

उत्खातेति ॥ निजं कुलाचारप्राप्तम्, न्याय्यं न्यायादनपेतं पुंसां नराणां पालनीयमत्याज्यमुत्खातरोपणमुत्खातानां रोपणमिदं तत् व्रतमनुपालयेत्यग्रजस्य रामस्य बलभद्रस्य वा वचनं प्रतिमान्य तुष्टः प्रसन्न उपेन्द्रो लक्ष्मणः कृष्णश्च सिद्धपदपङ्क्तिं मुक्तश्रेणीं तुष्टाव ॥ वसन्ततिलकावृत्तम् ॥

योऽधःस्थितोऽशोकतरोरभासीत्तद्वृक्षमूलीयमहाव्रतस्य ।
फलं यतिभ्यः प्रथयन्निवार्हन्वन्द्यः सुराणां स पुनः पुनातु ॥ ४८ ॥

योऽध इति ॥ यस्तद्वृक्षमूलीयमहाव्रतस्याशोकवृक्षमूलार्थस्य महाव्रतस्य फलं यतिभ्यः प्रथयन् कथयन् इवाशोकतरोरधःस्थितः सन्नभासीत् । सुराणां देवानां वन्द्योऽर्हन् पुनः पुनः पुनातु ॥ उपजातिः ॥

बोधाम्भोधौ यः समाधीन्दुवृद्धे सिद्धे रुच्यं कर्तुमिच्छन्निवर्द्धिम् ।
निन्ये मान्यं साधु रत्नत्रयं नः सिद्धः सिद्धां कार्यसिद्धिं करोतु ॥ ४९ ॥

बोधेति ॥ यः समाधीन्दुवृद्धे समाधिनेन्द्रियगोचरेण क्रोधमानमायालक्षणैर्वा जनितकालुष्यपरित्यागाच्चेतसः प्रसन्नतयैवेन्दुना चन्द्रेण वृद्धे बोधाम्भोधौ बोधेऽवगमविगमसजन्मनि ज्ञानातिशये एव समुद्रे सिद्धेर्मुक्तिलक्षणायाः रुच्यं भूषणं कर्तुमिच्छन्निव मान्यं माननीयं रत्नत्रयं सम्यग्दर्शनज्ञानचारित्रस्वभावं साधु यथा स्यात्तथा ऋद्धिं वृद्धिं निन्ये, स सिद्धो नोऽस्माकं सिद्धां पूर्वापरप्रमाणबाधापरित्यागाद्युक्तियुक्तचेतसां पुंसां प्रतीतिशिखरमारूढाम् कार्यसिद्धिं कार्यस्य मोक्षलक्षणस्य सिद्धिं प्राप्तिं ज्ञप्तिं वा करोतु ॥ शालिनी ॥

तथाचार्यं चर्यापरिणतमुपाध्यायमखिल-
श्रुतोपाध्यायं तं बहुविधतपःसाधनपरम् ।
स्तुवे साधुं साधु स्थितिजननिरोधव्यतिकरं
सदा पश्यत्प्राहुस्त्रितयमिदमेव त्रिपुरुषम् ॥ ५० ॥

तथेति ॥ तथा अर्हन्सिद्धयोः स्तवनप्रकारेण, चर्यापरिणतं चर्याभिर्ज्ञानदर्शनचरणतपोवीर्याचाररूपाभिः पञ्चभिः परिणतमात्मस्वरूपोपलब्धिलब्धमाचार्यं सूरिम्, तथा—अखिलश्रुतोपाध्यायं समस्तागमोपदेष्टारम्, उपाध्यायं पाठकम्, तथा—बहुविधतपःसाधनपरं बहुविधं बाह्याभ्यन्तरप्रकारं यत् तपश्च, तत्साधनं हेयं हेयतया, उपादेयमुपादेयतया, विवेचकं ज्ञानं च तत् परं परमोत्कर्षं प्राप्तं यस्य तम्, साधुं संसारसंसरणकारणसरागपरिणामबहिर्मुखतयान्तर्मुखाकारतयात्मानमवलोकमानं तद्रूपतया परिणमन्तं बहिर्भवेषु सं-

योगतामापन्नेषूदासीनत्वावलम्बिमुनिं स्तुवे स्तवीमि । धीमन्तः स्थितिजननिरोधव्यतिकरं ध्रौव्योत्पादव्ययसंबन्धं साधु पूर्वापरप्रमाणबाधापरित्यागेन प्रतीतिमन्दिरं यथा स्यात्तथा सदा सर्वदा पश्यत् । इदमेव त्रितयमाचार्योपाध्यायसाधुलक्षणं त्रिपुरुषं हरिहिरण्यगर्भहरात्मकं प्राहुः । शीलात्प्रच्यवमानानां शीले प्रत्यवस्थापकत्वात् विनेयानां कारुण्यबुद्ध्या प्रतिपालनात् विविधतपसा विविधकर्मभस्मीकरणाद्ब्रह्मविष्णुहरात्मकत्वमिति भावः ॥ शिखरिणी ॥

इत्युच्चकैः स्तुतिशतं विरचय्य विष्णुर्नामालिखन्सुरगणैर्जहसे शिलायाम् ।
द्वीपाम्बुराशिकुलपर्वतदेवलोकलोकान्तरेषु लिखितं किल केन वेति ॥ ९१ ॥

इतीति ॥ सुरगणैर्देवगणैरित्येवमुच्चकैरतिशयेन स्तुतिशतं विरचय्य रचयित्वा शिलायां नाम अलिखन् । विष्णुः 'द्वीपाम्बुराशिकुलपर्वतदेवलोकलोकान्तरेषु द्वीपसमुद्रमेर्वाद्यद्रिस्वर्गमनुष्यादिलोकेषु केन वा किल आश्चर्यं लिखितम्' इति जहसे हसितः ॥ वसन्ततिलका ॥

इत्थं हिरण्यकशिपूदयपक्षपाती नारायणः पथि बभूव निवर्तमानः ।
सिद्धाभिपूजनविशेषविवृद्धतेजाः श्रीवर्धनं जयकरं विनयं निराहुः ॥ ९२ ॥

इति धनंजयकविविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये लक्ष्मणवासुदेवयोः कोटिशिलोद्धरणकथनो नाम द्वादशः सर्गः समाप्तः ।

इत्थमिति ॥ इत्थमनेन प्रकारेण, सिद्धाभिपूजनविशेषविवृद्धतेजाः सिद्धाभिपूजनेन विशेषेण स्वाभाविकतेजस आधिक्येन विवृद्धं तेजो यस्य तादृक्, हिरण्यकशिपूदयपक्षपाती हिरण्यस्य स्वर्णस्य कशिपोर्ग्रासाच्छादनयोः । उदयस्याभ्युदयस्य पक्षपातोऽस्ति यस्य तादृक्, नारायणो लक्ष्मणः पथि मार्गे निवर्तमानो बभूव । युक्तं चैतत् । विनयं नम्रतां श्रीवर्धनं संपद्वर्धकं, जयकरं निराहुर्धीमन्तः ॥ भारतीये—हिरण्यकशिपूदयपक्षपाती हिरण्यकशिपोर्दैत्यस्य उभयपक्षं पातयति तच्छीलः । नारायणः कृष्णः ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीछोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां लक्ष्मणवासुदेवयोः कोटिशिलोद्धरणकथनो नाम द्वादशः सर्गः ।

---

## त्रयोदशः सर्गः ।

स श्रीशैलोदीर्णबलेन प्रजिहानः स्थित्यादौ त्यन्नाम निरूढं हरिणोक्तः ।
वैदेह्यर्थं योजयतैको व्यवसायं तद्दूरक्षः स्थानमरातेरभियातः ॥ १ ॥

स इति ॥ स्थित्यादौ जन्मकालमारभ्य, निरूढमागोपालाङ्गनाविख्यातम्, त्यत् 'हनूमान्' इति नाम प्रजिहानः प्राप्नुवानः, अदीर्णबलेन पुष्टसामर्थ्येन, वैदेह्यर्थं सीतार्थं व्यवसायं निश्चयं योजयता प्रेरयता हरिणा लक्ष्मणेनोक्त एक एकाकी, स श्रीशैलो हनूमान्, तत्

लोकप्रसिद्धम्, दूरक्षः दुष्टानि रक्षांसि यत्र तदराते रावणस्य स्थानमभियातः ॥ भारतीये—वै निश्चये देह्यर्थे पुरुपार्थे, स्थित्या निरूढं दौत्यं प्रजिहानः, दूरक्षः दुःखेन रक्षितुं शक्यः श्रीशैलस्तन्नामा दूतः अरातेर्जरासंधस्य ॥ सर्गेऽस्मिन्मत्तमयूरं छन्दः ॥

दुर्गं राष्ट्रं तीर्थमरण्यं व्रजमायज्ञानञ्शत्रोश्चारमबुद्धः स्वयमन्यैः ।
स स्वीकुर्वन्कृत्यमकृत्यं व्युपजापैः स्थाने स्थानं स्वप्नमपीच्छन्प्रयतोऽभूत् ॥ २ ॥

दुर्गमिति ॥ अन्यैः स्वयमबुद्धो ज्ञात एव शत्रोश्चारं गतिं जानन्, व्युपजापैः सामादिभिरकृत्यमभेद्यममात्यादिकम्, कृत्यं भेद्यं स्वीकुर्वन्नुररीकुर्वन् । [भेदं स्वीकारयन्निति भावः ।] स्थाने निरुपद्रवे देशे स्थानं स्थितिं स्वप्नं निद्रामपीच्छन् प्रयतोऽभूत् ॥

अध्वान्तेऽसौ चेतति वैरं प्रतिबध्नञ्ज्ञाता नीतेः संप्रतिमातामहतापम् ।
कुर्वन्धैर्येणावजितं तद्रिपुजातं साम्नायोज्य स्वामिनि सर्वंसहमेयः ॥ ३ ॥

अध्वान्त इति ॥ नीतेर्ज्ञातासौ हनूमानध्वान्ते मार्गमध्ये वैरं गर्भिण्यपि मे माता निर्दयेनानेन महेन्द्रेण स्वमन्दिरान्निष्कारितेति वैरं चेतसि प्रतिबध्नन् मातामहतापमञ्जनासुन्दरीतातस्य महेन्द्राचलेन्द्रस्य पश्चात्तापम्, संप्रति तत्कालं धैर्येणावजितं तद्रिपुजातं शत्रुसमूहं साम्ना आयोज्य स्वामिनि रामे सर्वंसहमाज्ञासहिष्णुम्, कुर्वन् सन्नैयो गतवान् ॥ भारतीये—संप्रतिमाता वर्तमानकालपरिच्छेदकोऽसौ श्रीशैलो दूतः । अध्वान्ते निर्मले चेतसि, महता धैर्येण । आपम् प्रचुरं सजलप्रदेशम् । ऐयः ॥

अव्यालोलङ्कामयमानो यश ओजो वाञ्छन्नुद्यन्नीतिविदार्यप्रियवेषः ।
प्रेप्सुः शालं राजगृहं तं समतीतश्चक्रे लङ्कामाकुलवृत्तिं परमाजौ ॥ ४ ॥

अव्यालोलमिति ॥ अव्यालोऽदुष्टः, लङ्कां तन्नामनगरीमयमानो गच्छन् सन्, उद्यन्नीति उद्यन्ती नीतिर्यत्र तादृक् यथा स्यात्तथा यश ओजः क्षात्रतेजश्च वाञ्छन् सन्, प्रियवेषः सतामाकारधारी, तं राजगृहं राजमन्दिरं प्रेप्सुः प्राप्तुमिच्छुः, शालं प्राकारं विदार्य समतीतः समतिक्रान्तः सन् हनूमान् आजौ संगरे परमतिशयेन लङ्कामाकुलवृत्तिं चक्रे ॥ भारतीये—अव्यालोलं स्थिरतरम्, यशः कामयमानः, ओजो वाञ्छन्, उद्यन्नीतिविद् उद्यतीं नीतिं वेत्ति स, आर्यप्रियवेष आर्याणां प्रियो वेषो यस्य तादृक्, राजगृहं तन्नामानं जलाशयं समतीतः संप्राप्तः स दूतः शालं मत्स्यविशेषम् आजौ समरभूमौ परं केवलं प्रेप्सुः तं शालं कामाकुलवृत्तिमभिलाषाकुलितचित्तम् अलमत्यर्थं चक्रे । यद्वा तं जलाशयं समतीतः राजगृहं राजमन्दिरम् उद्यन् गच्छन् शालं प्राकारं प्रेप्सुः परं शत्रुम् आजौ समरे कामाकुलवृत्तिमलं चक्रे ॥

दारुप्राकारोऽयमुताहो रथकक्ष्या किं वाश्चीयं वारिधिवेला परिखा श्वित् ।
सौधा जालोल्लासितधूमाः किमु मेघाः श्वेता नीलान्किं स वमन्तीति शशङ्के ५

दार्विति ॥ स हनूमान् दूतश्च 'अहो आश्चर्ये अयं दारुप्राकारः, उत रथकक्ष्या रथस-

मूहः, किं वा अश्वीयमश्वसमूहः, इयं वारिधिवेला समुद्रवेला, उत परिखा, इमे जालोल्लासितधूमाः सौधाः किमु श्वेता मेघा नीलान् वमन्ति' इत्येवंरीत्या शशङ्के ॥

निर्बद्धोच्चैरावतमुच्छीकरसेकं दृष्ट्वास्योच्चैरावणतुङ्गद्विपशालम् ।
जाता चेतस्यम्बुदबन्दीगृहशङ्का पुण्योपात्ता किं प्रभुशक्तिर्न करोति ॥ ६ ॥

निर्बद्धेति ॥ निर्बद्धोच्चैरावतं निर्बद्ध आलानित उच्च ऐरावतो यत्र तत्, उच्छीकरसेकम् उत् ऊर्ध्वं शीकराणां तुण्डोन्मुक्तजलकणानां सेको यत्र तत्, रावणतुङ्गद्विपशालं रावणस्य तुङ्गानां द्विपानां गजानां शालाम् । 'विभाषा सेना–' इति क्लीबता । दृष्ट्वा अस्य हनूमतः चेतसि अम्बुदबन्दीगृहशङ्का जलदानां कारागृहशङ्का उच्चैरत्यर्थं जाता । पुण्योपात्ता प्रभुशक्तिः किं न करोति ॥ भारतीये—निर्बद्धोच्चैरावतं निर्बद्धा उच्चा इरावतीभवा गजा यत्र तत्, उच्चैरावणतुङ्गद्विपशालम् उच्चामैरावणवत्तुङ्गानां द्विपानां शालाम् । अस्य श्रीशैलस्य ॥

दृष्ट्वा दम्याञ्शृङ्खलबन्धेन किशोरानेवं ह्येतैः संप्रति पीडामपि नीतैः ।
दम्यन्तेऽन्ये स्वाम्युपकारैर्नतु नाथा जात्यस्येत्थं वृत्तिरुदात्तेति स मेने ॥ ७ ॥

दृष्ट्वेति ॥ स हनूमान् श्रीशैलो वा दम्यान् किशोरान् अश्वबालकान् दृष्ट्वा 'शृङ्खलबन्धेन पीडां कदर्थनाम् नीतैर्गतैरपि एतैरश्वबालैः कर्तृभिः स्वाम्युपकारैः करणैः संप्रति सांप्रतम् हि निश्चयेन अन्ये शत्रवः एवं स्वमदनप्रकारेण दम्यन्ते' नतु नाथाः स्वामिनः । जात्यस्य इत्थमनेन प्रकारेण उदात्तोत्कटा वृत्तिरिति मेने ॥

उद्यत्कक्षा गोपुरशालध्वजमाला मत्तालम्बालम्बनबाला समृदङ्गाः ।
तस्याधावत्तुङ्गतुरंगावबभासे राजन्यानां कन्दुकभूमिर्नगरी वा ॥ ८ ॥

उद्यदिति ॥ तस्य हनूमतः श्रीशैलस्य च राजन्यानां राजपुत्राणां कन्दुकभूमिः कन्दुकक्रीडाभूमिः अथवा नगरी, उद्यत्कक्षा उद्यती कक्षा गोपुरप्राकारान्तर्भूमिर्यस्याः, गोपुरशालध्वजमाला गोपुरेषु कृत्स्नद्वारेषु शालेषु प्राकारेषु ध्वजानां माला यत्र, मत्तालम्बालम्बनबाला मत्तालम्बानामवष्टम्भनकाष्ठानामालम्बनं यासां ता बाला मुग्धा यत्र, समृदङ्गा समृद् अङ्गं यस्याः समर्दला वा, आधावत्तुङ्गतुरंगा आधावन्तस्तुङ्गास्तुरंगाः शीघ्रगामिनोऽश्वाश्च यस्याम्, एतादृक् अवबभासे ॥

यत्रोद्वेगे मूर्छति शोकेनयमस्त्री तस्थौ दुःस्थं चाशुभवानीशसमेत्य ।
त्यक्त्वालङ्काराज्यविभोगं धनदोऽपि द्वेषी कारागारमसौ तन्निचचाये ॥ ९ ॥

यत्रेति ॥ असौ हनुमान् यत्र कारागारे यमस्त्री कृतान्तभार्या उद्वेगे शोकेन मूर्छति वृद्धिं याति सति दुःस्थं यथा स्यात्तथा, ईशसमेत्या शिवयोग्या भवानी च आशु शीघ्रम्, असौ द्वेषी धनदोऽपि लङ्काराज्यविभोगमेतन्नगरीराज्यविभोगम् 'यमकश्लेषचित्रेषु बवयोर्डलयोर्न भिद् । नानुस्वारविसर्गौ च चित्रभङ्गाय कल्पितौ ॥' इति वचनेनानुस्वारत्यागेन

अलकाराज्यविभोगं तदीयनगरीराज्यभोगं त्यक्त्वा, तस्थौ तत् कारागारम्, निचचाये दृष्टवान्॥ भारतीये—असौ श्रीशैलो यत्र अस्त्री अस्त्रयुक्तः, अशुभवान्, धनदः बन्धनात्पूर्वमुत्कोचदाता अपि द्वेषी शत्रुः ईशसमेत्या ईशस्य जरासंधस्य समेत्या संमुखागमनेन, अलंकाराज्यविभोगम् अलंकारा भूषणानि आज्यवयः 'संभोगलालसा नित्यं घनपीनपयोधरा। षोडशाब्दा तु या नारी बुधैराज्यविरुच्यते॥' इत्युक्त्या कमनीयकामिन्यः भोगश्चैतेषां समाहारं त्यक्त्वा शोके उद्वेगे च मूर्छेति दुःस्थम्, अनयमयरहितं च यथा स्यात्तथा तस्थौ॥

सारङ्गर्द्धं संगतसत्त्वैरथयुक्तं रम्यं राजच्छत्रवितानैर्बहुफेनैः।
बद्धोत्सेधं नीरविशालं नृपमार्गे गच्छन्गङ्गासागरसङ्गं स्मरति स्म॥ १०॥

सारङ्गेति॥ स हनुमाञ्श्रीशैलश्च, सारङ्गर्द्धं गजेन्द्रसमृद्धं रथयुक्तं संगतसत्त्वैः सं समीचीनं न्यायमार्गानुयायि गतं गमनं येषां तैर्नीतिमार्गानुसारिभिः सत्त्वैः प्राणिभी रम्यं मनोहरम्, बहुफेनैः फेनकल्पैः डिण्डीरसदृशैः, राजच्छत्रवितानैः राज्ञामातपत्रसमूहैः शोभमानैरातपत्रैश्चन्द्रोपकैश्च वा, बद्धोत्सेधं विरचितशोभम्, नीरविशालं शालशृङ्गाणामत्युन्नतत्वान्निष्क्रान्तसूर्यप्राकारम्, नृपमार्गे गच्छन् सन्, सारङ्गर्द्धं चातकव्याप्तम्, अथ पक्षान्तरे। संगतसत्त्वैर्मिलितमीनादिजीवैर्युक्तम्, राजच्छत्रवितानैः राजत् छत्रवत् वितानं येषां तैः बहुफेनैः प्रचुरडिण्डीरैः बद्धोत्सेधम्, नीरविशालं नीरवीणां जलपक्षिणां शालो गमनं यत्र तादृशं गङ्गासागरसङ्गम् स्मरति स्म॥

सांध्यं रागं रत्नमयूखैर्विदधानं क्षीराम्भोधेः सैकतमुद्यन्मकरीकम्।
सैंहं पीठं निर्जयदास्थायुकमुच्चैरक्षोभीतं मागधसेव्यं व्यलुलोकत्॥ ११॥

सांध्यमिति॥ रत्नमयूखैः सांध्यं संध्याभवं रागं विदधानम्, उद्यन्मकरीकम् उद्यन्तो मकरीका यत्र तं क्षीराम्भोधेः सैकतं सिकतामयप्रदेशं निर्जयत् उच्चैरुन्नतं सैंहं पीठं सिंहासनम्, आस्थायुकम्, रक्षोभीतं राक्षसैः परिवारितम्, मागधसेव्यं बन्दीजनस्तुत्यम् (रावणं हनुमान्) व्यलुलोकत्॥ भारतीये—अक्षोभी निःक्षोभः मागधसेव्यं मागधानां राजविशेषाणां सेव्यं तं जरासंधम्॥

दीर्घन्यस्तं हस्तमधिष्ठायुकमीपत्पीठीबद्धालाननिषण्णद्विपशोभम्।
भूभृच्चूडाकोटिषु पादं निदधानं रागाक्रान्तं भानुमिवोच्चैरुदयस्थम्॥ १२॥
स्त्रीणां शुक्लैः सामिकटाक्षैः सह पातं संगच्छद्भिश्चामरभारैः कृतशोभम्।
कल्लोलानां मीनविलासैर्मिलितानां नुन्नं वेलाशैलमिवाब्धेः समवायैः॥ १३॥
श्रीवाग्देव्योर्वक्षसि वाचि स्थितिमत्योः कण्ठे हारं वासुकसीमेव वहन्तम्।
मुक्तामालां मन्मथदोलामिव लोलां बिभ्राणाभिर्वारवधूभिः परिविष्टम्॥ १४॥

एवं वाक्यं विष्टरविष्टस्तमवोचद्यत्रानुक्तं नापि दुरुक्तं स मनोज्ञः ।
कालान्तेऽपि क्षोभमगच्छन्गुरुसत्त्वः पारावारः सोऽयमपूर्वश्चिरदृष्टः ॥१५॥

दीर्घेत्यादि ॥ दीर्घन्यस्तं दीर्घे न्यस्तं हस्तम् अधिष्ठायुकम्, अवष्टभ्योपविष्टम्; ईषत्पीठीवद्धालाननिषण्णद्विपशोभमीषत् पीठ्यां पूर्वं बद्धस्य पश्चादालाननिषण्णस्य द्विपस्येव शोभा यस्य तम् । भूभृतो नरेन्द्रा गिरयश्च । पादं चरणं किरणं वा । चामरभारैः प्रकीर्णकसमूहैः । देवगणैस्तु पातं·········पादप्रणामम् । वक्षसि वाचि स्थितिमत्योः श्रीवाग्देव्योर्लक्ष्मीसरस्वत्योः वास्तुकसीमा वसतिमर्यादा इव कण्ठे हारं वहन्तम्, लोलां मुक्तामालां मन्मथदोलामिव । बिभ्राणाभिर्वारवधूभिः परिविष्टं परिवेष्टितं तं रावणं जरासंधं वा । यत्र वाक्ये अनुक्तं विवक्षितं शिष्टं दुरुक्तमसंवद्धमयोग्यं वापि न, एवं वाक्यमवोचत् ॥ तेन सोऽयं रावणो जरासंधो वा कालान्तेऽपि क्षोभम् अगच्छन् गुरुसत्वः गरिष्ठतिमिंगिलादिजीवो महाबलो वा अपूर्वः पारावतः समुद्र इव चिरदृष्टः चिरं दृष्टः ॥

वृत्तस्कन्धः पत्रसमृद्धः शुचिशाखस्त्वं यैर्दृष्टः कामफलानां वितरीता ।
संनिध्यातः कल्पतरुस्तैर्न च यैस्तैः प्रज्ञाचक्षुर्विक्रमशीलः परिपाता ॥१६॥

वृत्तेति ॥ वृत्तस्कन्धः वृत्तौ स्कन्धौ यस्य स उन्नतांसः, वर्तुलबुध्नः । पत्रसमृद्धः वाहनाढ्यः, पर्णबहुलः । शुचिशाखो निर्लाञ्छनसोदरोदरजादिः, अघुणाहतशाखः । कामफलानामभिलषितफलानां वितरीता दाता । कल्पतरुः कल्पितदाता, कल्पद्रुमश्च । प्रज्ञाचक्षुर्बाह्यचक्षूरहितः शास्त्रज्ञानेक्षणः । विक्रमशीलः पराक्रमशीलः, पक्षिक्रमणाधिकरणशीलः । परिपाता प्रतिपालकः परितः पादैः पिबति स वा ॥

सर्वस्यास्मिञ्जन्मनि जातस्य जनस्य द्वेषो दोषे प्रेम गुणे चेति निसर्गः ।
दूष्यो गुण्यः स्याच्च स येनाचरितेन प्रायस्तद्वेवेक्ति न कश्चित्कुरुते वा १७

सर्वस्येति ॥ अस्मिञ्जन्मनि संसारे जातस्य सर्वस्य जनस्य दोषे द्वेषः, गुणे प्रेम, इति निसर्गः स्वभावः । येनाचरितेन स जनो दूष्यः गुण्यश्च स्यात्, तत्कर्म प्रायः कश्चिन्न वेवेक्ति जानीते न वा कुरुते ॥

अर्थान्प्राणान्स्वान्विनयन्ते गुणहेतोस्तत्तद्भ्यस्तद्यदि दत्त्वा गुणिनः स्युः ।
छेदः कोऽयं तद्व्रज सीतोपनयेन श्रीसंपत्त्योः स्थावरभूतां गुणवत्ताम् ॥१८॥

अर्थानिति ॥ जना गुणहेतोः स्वान् अर्थांस्तथा प्राणान् विनयन्ते, यदि तद्भ्यो गुणिभ्यः तत् अर्थादि दत्त्वा गुणिनो भवेयुः, तर्हि अयं (तव) कश्छेदो हानिः, तत्तस्मात्कारणात् त्वं सीतोपनयेन जानकीसमर्पणेन पृथ्वीसमर्पणेन वा श्रीसंपत्त्योः श्रिया हिरण्यादिस्वभावायाः संपत्तेर्गोमहिष्यादिस्वभावायाश्च स्थावरभूतां स्थितिकारणं गुणवत्तां व्रज गच्छ ॥

मृत्वा जीवित्वैव च यस्मिन्गुणमेयात्तस्मिन्मर्तुं जीवितुमिच्छेद्गुणगृह्यम् ।
प्राहुः संपद्यापदमस्माद्वनमुच्चैरामो हा नो नायत पाण्डुप्रभवोऽर्यः ॥ १९ ॥

मृत्वेति ॥ जनो यस्मिन्कार्ये मृत्वा जीवित्वा एव गुणमेयात् प्राप्नुयात् । तस्मिन्नेव कार्ये मर्तुं जीवितुमिच्छेत् । तं गुणगृह्यं गुणपक्षपातिनम्, संपद्यापदं प्राहुः । अस्मात्कारणात् नोऽस्माकम्, अर्यः स्वामी, पाण्डुप्रभवः प्रशस्तजन्मा रामः, हा कष्टं वनमुच्चैरतिशयेन न आयत आयासीत् ॥ भारतीये—आम आर्द्रहृदयः । पाण्डुप्रभवो युधिष्ठिरः ॥

मन्दोदर्यामिच्छसि चित्तव्यतिपातं न्याय्यं त्वं वैभीषणमुक्तं न शृणोषि ।
नाद्याप्युच्चैः किंचिदतीतं तव कार्यं गत्वा विष्णुं तं प्रभविष्णुं वरिवस्य २०

मन्दोदेति ॥ मन्दोदर्यां पट्टमहिष्यां चित्तव्यतिपातमप्रेमतयान्यत्र चेतो नेतुमिच्छसि, न्याय्यं न्यायादनपेतं वैभीषणं विभीषणीयमुक्तं वचनं त्वं न शृणोषि, अद्यापि तव किंचित् कार्यमुच्चैरुच्चतरं नातीतम्, (तस्मात्) प्रभविष्णुं समर्थं तं विष्णुं लक्ष्मणं गत्वोपेत्य वरिवस्य नमस्कुरु ॥ भारतीये—मन्दो हेयोपादेयविवेकविकलस्त्वं दर्यां गुहायां चित्तव्यतिपातं चित्तं प्रतिपातयितुमिच्छसि, वै निश्चये भीषणं भयानकम् । विष्णुं वासुदेवम् ॥

इत्युक्तेऽस्मिन्पादमुपात्तं मणिपीठात्प्रापय्योरुं सव्यगतासिस्थितदृष्टिः ।
न्यस्यन्नक्ष्णोरिन्द्रियवर्गं सकलं तु क्षोभात्कायं कोपविवृत्तिं गमयन्नु ॥२१॥
सभ्रूयुग्मं वैरविरुद्धं घटयन्नु स्विद्यन्क्रोधक्काथितलावण्यरसो नु ।
रुद्धः स्थित्वाधोरणमुख्यैर्द्विरदो नु प्रोचे विष्णोरित्यरिराग्निं विवमन्नु॥२२॥
(युग्मम्)

इतीति ॥ अस्मिन् वाक्ये इत्युक्तरीत्योक्ते सति, स विष्णोर्लक्ष्मणस्य वासुदेवस्य अरी रावणो जरासंधो वा, उपात्तमाकृष्टं पादं मणिपीठादूरुं प्रापय्य सव्यगतासिस्थितदृष्टिः सव्यगतेऽसौ कृपाणे स्थिता दृष्टिर्यस्य तादृक् सकलमिन्द्रियवर्गमक्ष्णोर्न्यस्यन् क्षोभात् कायं कोपविवृत्तिं गमयन् भ्रूयुग्मं वैरविरुद्धं घटयन् स्विद्यन् क्रोधक्काथितलावण्यरसः कोपोत्कलितलावण्यरसः आधोरणमुख्यैर्हस्तिपकमुख्यैः रुद्धः द्विरद इव । अग्निं वमन् सर्वत्र नु वितर्के इत्थं तर्क्यमाणः सन् स्थित्वा स्थितो भूत्वा इति वक्ष्यमाणं प्रोचे प्रोक्तवान् ॥

प्राणान्कृत्वान्यत्र कथंचित्तव कायं केनाप्यन्येनाविशतैतद्यदि वोक्तम् ।
भाषा नैषा ते ननु मत्तस्य विलापं श्रुत्वा मद्यस्यैष न तस्येत्यविचार्यम् २३

प्राणानिति ॥ कथंचिन्महाकष्टेन प्राणान् अन्यत्र कृत्वा त्यक्त्वा तव कायमाविशता प्रविशता केनाप्यन्येनोक्तम्, यदि वा त्वयोक्तम्, एषा ते तव भाषा न, ननु अहो मत्तस्य भवत्प्रभोर्विलापं श्रुत्वा एष विलापो मद्यस्य, न तस्य पुरुषस्य, इति हेतोरविचार्यम् ॥

यद्यप्युक्तं दूतमवध्यं हृदि कृत्वा पत्युः पातश्चेतसि चिन्त्यः स तथापि ।
काकोलूकं क्रीडदरण्ये भयमुक्तं मत्वा गच्छेत्कस्तदजस्रं शवविस्रम् ॥२४॥

यद्यपीति ॥ यद्यपि भवतोक्तम्, तथापि हृदि दूतमवध्यं कृत्वा स पातः पत्युः चेतसि चिन्त्यः । यत्रारण्ये काकोलूकं क्रीडदस्ति शवविस्रं कुथितमृतकपूतिगन्धव्याप्तं तदरण्यं भयमुक्तं निर्भयं मत्वा अजस्रं को गच्छेत् ॥

न न्यूनानां भीतिरनूनादिति तस्मात्तत्किं नान्येषामपि मान्याद्भयमस्ति ।
भृङ्गस्याङ्गक्षोभसहोऽन्यं मदमुज्झन्सर्वाङ्गीणं मुञ्चति हस्ती किमहत्वा २५

नेति ॥ न्यूनानामल्पबलानामनूनादधिकबलाद्, भीतिर्नेति हेतोः किमन्येषां समबलानामपि मान्यात्समस्तजनपूज्यात् तस्मादधिकबलाद् तद् भयं नास्ति । अपित्वस्त्येव । भृङ्गस्य भ्रमरस्याङ्गक्षोभसहः सर्वाङ्गीणं मदमुज्झन् हस्ती अन्यं प्राणिनं किमहत्वामारयित्वा मुञ्चति । अपि तु न मुञ्चति ॥

योऽलंकर्मीणोऽपि स एवं न विवक्षुर्नूनं कालत्राकृतकायस्तव नाथः ।
स्वामिस्थानीयेन विरुद्धः स मयामा भूमेरन्तं गच्छति भीरुः किमिदानीम्

योऽलमिति ॥ योऽलंकर्मीणः सर्वकार्यसमर्थः । कर्मोत्तरपदत्वेन खः । स्यात् । सोऽप्येवं न विवक्षुः । नूनं निश्चये स्वामिस्थानीयेन स्वामितुल्येन मया अमा साकं विरुद्धः । अत एव कालत्राकृतकायः कालाय देयः कायो येन तादृक् । 'देये त्रा च' इति त्रा । भीरुः स तव नाथः किमिदानीं भूमेरन्तं मध्यं गच्छति ॥

श्रुत्वा भग्नान्दूत विचेतीकृतवृत्तीन्नाज्ञासीद्वा संप्रति जातो यदिवासौ ।
कस्मिन्कोऽयं केशवनामा पतितः किं न प्रस्तीमे मज्जति युद्धेऽसृजि बालः २७

श्रुत्वेति ॥ हे दूत, भवत्स्वामी (मया रणाङ्गणे) भग्नान् विचेतीकृतवृत्तीन् (विपक्षान्) श्रुत्वा आकर्ण्य (अपि मां) न अज्ञासीत् (किम्) यदि वा असौ संप्रति अधुना कस्मिन्नप्रसिद्धे जातः । अयं केशवनामा कोऽस्ति । युद्धे प्रस्तीमे द्रवीभूतेऽसृजि रुधिरे पतितः बालः किं न मज्जति ॥

स व्यात्युक्षीं नाडिविमुक्तै रुधिरौघैरन्त्रस्रग्भिर्व्यत्यभिताडीमपशब्दैः ।
कृत्वा व्याक्रोशीं च यमस्य द्विजदोलामिच्छत्यारुह्यायमकालेऽपि वसन्तम् ॥

स इति ॥ सोऽयं भवत्स्वामी यमस्य कृतान्तस्य द्विजदोलां दन्तशिविकामारुह्य नाडिविमुक्तैर्धमनीनिःसृतै रुधिरौघैर्व्यात्युक्षीं परस्परसेचनम्, अन्त्रस्रग्भिर्व्यत्यभिताडीं परस्पराभिताडनम्, अपशब्दैर्व्याक्रोशीं परस्पराभिशपनम्, च कृत्वाकालेऽसमये वसन्तं होलिकासन्नदिनमिच्छति ॥

इति समरुतः शक्त्यास्तोकं पदं पृथुसंपदः
शमनिरतया वृत्त्या श्रेयस्तरां स्वपतेः श्रियम् ।
परिणमयितुं दूतोऽवोचत्प्रसह्य रिपुक्षिपां
स न हि सचिवः स्वामिस्वार्थे भनक्ति भरेषु यः ॥ २९ ॥

इतीति ॥ पृथुसंपदः पृथ्वी संपद्यस्याः सकाशात्तस्याः शक्त्याः सामर्थ्यस्य पदं स्थानम् स लोकप्रसिद्धो मरुतो वायोस्तोकमपत्यं हनूमान् दूतः रिपुक्षिपां शत्र्वधिक्षेपं शमनिरतया उपशमप्रधानया वृत्त्या प्रसह्य प्रमृष्य स्वपते रामस्य श्रेयस्तरां श्रियं लक्ष्मीं परिणमयितुम् इति वक्ष्यमाणप्रकारेण अवोचत् । हि यतो यो भरेषु स्वामिकार्ये भनक्ति स सचिवो न ॥ भारतीये—शक्त्या सामर्थ्येन पृथुसंपदो महासंपत्तेः । अस्तोकमन्यूनम् । पदं स्थानम् । समरुतः समध्वनिः । दूतः ॥ हरिणीवृत्तम् ॥

दशाननोद्दीपनमात्रहेतोस्तत्सज्जरासंधरयाहतस्य ।
दीपस्य गेहे स्फुरतस्तवापि स्नेहच्युतस्य ज्वलनं कियद्वा ॥ ३० ॥

दशेति ॥ हे दशानन, उद्दीपनमात्रहेतोरुद्दीपनमात्रमेव हेतुर्यस्य तादृशः, धरया पृथ्व्या आहतस्य,स्नेहच्युतस्य प्रीतिरहितस्य नितरां कठोरहृदयस्य,गेहे स्वमन्दिरे स्फुरतो विजृम्भमाणस्य तव सज्जरासं सीदति क्लेशं करोतीति सद् द्वेषः, तस्माज्जातेन राशब्देन । ('आतो धातोः' इत्यनेन क्विबन्तरैधातोराकारलोपे तृतीयान्तम् ।) आस अधिक्षेपो यत्र ज्वलनकर्मणि यथा स्यात्तथा तत् ज्वलनं कियत् कियत्कालम् । वा यथार्थे दशाननोद्दीपनमात्रहेतोर्दशाया वर्तिकाया आननेन मुखेनोद्दीपनमात्रे प्रज्वलनमात्रे हेतोः, स्नेहच्युतस्य तैलादिरहितस्य, अत एव सज्जरासंधरयाहतस्य सता जराया अस्तोन्मुखतामन्दतेजःपरिणतेरासंधः समन्ततो योगो यस्य तादृशा रयेण वेगेनाहतस्य तैलक्षयवशाच्छिखाप्रकम्पवद्वेगेन कटाक्षितस्य, गेहे स्फुरतो दीपस्यापि तज्ज्वलनं कियत् ॥ भारतीये—हे जरासंध, दशाननोद्दीपनमात्रहेतोर्दशायाः शुभपाकस्यानने प्रारम्भे एव उद्दीपनमात्रकारणस्य । रयाहतस्य वेगाविष्टस्य ॥ उपजातिः ॥

अपि दूरमपैष्यती प्रदेशं यदि वा विश्रमितुं त्वयि स्थिता ।
न वधूं वरलिप्सया व्रजन्तीमिव लक्ष्मीमवरोद्धुमर्हसि त्वम् ॥ ३१ ॥

अपीति ॥ यद्यपि लक्ष्मीर्दूरं प्रदेशम्, अपैष्यती अतिक्रमिष्यन्ती वा इव विश्रमितुं श्रमं दूरीकर्तुं त्वयि स्थिता । तथापि वरलिप्सया व्रजन्तीं वधूमिव लक्ष्मीं जानकीं राज्यलक्ष्मीं वावरोद्धुं त्वं नार्हसि ॥

उक्तेन पौनःपुनिकेन किं वा वेलामिवोर्वी प्रलयाम्बुराशेः ।
चमूं विकर्षन्तमवेक्षमाणः स्वप्ने हरिं पश्यसि तं समक्षम् ॥ ३२ ॥

उक्तेनेति ॥ अथवा पौनःपुनिकेनोक्तेन पुनःपुनरुक्त्या किम् । उर्वीं विकर्षन्तीं प्रलयाम्बुराशेः प्रलयसमुद्रस्य वेलामिव चमूं विकर्षन्तं तं हरिं स्वप्ने अवेक्ष्यमाणस्त्वं समक्षं प्रत्यक्षं पश्यसि द्रक्ष्यसि ॥ उपजातिः ॥

समातुलानीतनयैः स्वबन्धुभिः प्रभो जयत्येष निहत्य ते बलम् ।
समेध्यलंकारचितं पुरस्तव स्थिरं वनश्चेत्कुरुदेशमीशिता ॥ ३३ ॥

समेति ॥ हे प्रभो, एष हरिर्लक्ष्मणः, समातुलानीतनयैः समः साधारणः, अतुलोऽनुपमः आनीत उपनीतो नयो यैस्तादृग्भिः स्वबन्धुभिः बिभीषणादिभिः सह ते तव बलं सैन्यं निहत्य जयति जेष्यति सर्वोत्कर्षेण वर्तिष्यते । हे मेध्य, चेद्यदि तव लङ्कारचितं लङ्कादिदर्शनादिभोग्यभोगाभिलाषुकं मनः स्थिरं कार्यं तर्हि कुरु । स लक्ष्मणः तव पुरः अग्रे देशं लङ्काख्यम् ईशिता ऐश्वर्येण पालयिष्यति ॥ भारतीये—एष वासुदेवस्ते तव बलं निहत्य समातुलानीतनयैः युधिष्ठिरादिभिः सह स्वबन्धुभिः सह जेष्यति । अलंकारचितमलंकाराभिलाषुकं तव मनः स्थिरं समेधि संभावय स कुरुदेशम् ईशिता ॥ वंशस्थम् ॥

नयस्यावद्यस्य व्यपनयमुखेन स्तुतिकृतौ
जनस्यापि क्षान्तिर्भवति वसतिस्तस्य भविता ।
कथंकारं व्रीडां पतसि पतिदेवत्यचरिते
सुरापाने मौनव्रतमिव तदेतत्प्रहसनम् ॥ ३४ ॥

नयस्येति ॥ अवद्यस्य निन्द्यस्य नयस्य नीतेर्व्यपनयमुखेन निराकरणमुखेन स्तुतिकृतौ स्तुतिकरणे जनस्य प्राकृतस्यापि क्षान्तिः क्षमा भवति ॥ त्वं च व्रीडां विहाय पतिदेवत्यचरिते पतसि चेत् तस्य तव वसतिर्वासः कथंकारं कथं भविता भविष्यति ॥ तदेतत् भावत्कं कर्म सुरापाने मौनव्रतमिव प्रहसनमस्ति ॥ शिखरिणी ॥

अन्तर्बहिः संप्रति कालरात्रौ तवोद्यतायां हरिशस्त्रपातैः ।
लब्धश्चिरस्येति तनोतु तिर्यग्ज्योत्स्नामकालेऽपि यमाट्टहासः ॥ ३५ ॥

अन्तारिति ॥ हरिशस्त्रपातैर्लक्ष्मणमुक्तमार्गणपातैः, वासुदेवशस्त्रपतनैश्च । तव रावणस्य जरासंधस्य वा । अन्तर्बहिः सर्वत्र कालरात्रावुद्यतायां सत्यां सांप्रतं चिरस्य चिरेण लब्ध इति हेतोर्यमाट्टहासोऽकालेऽप्यनवसरेऽपि तिर्यग् ज्योत्स्नां चन्द्रिकां तनोतु ॥ उपजातिः ॥

इत्युक्त्वासौ तस्य विरागं प्रकृतीनां नानाभाषावेषलिपिज्ञैरवसर्पैः ।
ज्ञात्वा हस्तेकृत्य समस्तं पुरि कृत्यं तस्याः पारं प्राप्य च रम्यं वनमागात् ॥ ३६ ॥

इतीति ॥ असौ हनुमान् श्रीशैलश्चेत्येवंप्रकारेणोक्त्वा निगद्य नानाभाषावेषलिपिज्ञैरनेकविधान् भाषाः संस्कृतयावन्यादीः, वेषान् कौलिकसंन्यास्याद्याकारान्, लिपीन् कर्णाटद्रविडाङ्गवङ्गादिदेशोद्भवाक्षराकारान्, जानद्भिः, अवसर्पैर्दूतैश्चरैस्तस्य रावणस्य ज-

रासंधस प्रकृतीनां स्वाम्यमात्यादीनां विरागं विशिष्टानुरागं ज्ञात्वा पुरि नगर्यां समस्तं कृत्यं हस्तेकृत्य हस्तगतं कृत्वा तस्या नगर्याः पारं प्राप्य रम्यं मनोहरं वनमागादागतवान् ॥ मत्तमयूरं छन्दः ॥

उपवनमभिरामवल्लभां स वनजनेत्ररुचिं निरूपयन् ।
स्वपतिगुणविशेषरञ्जितामुपलभते स्म सतीं वचोहरः ॥ ३७ ॥

उपेति ॥ स वचोहरो दूतो हनुमान् उपवनम् अभि अविद्यमानभयं यथा स्यात्तथा निरूपयन् पश्यन् वनजनेत्ररुचिं कमलदललोचनकमनीयां स्वपतिगुणविशेषरञ्जितां रामगुणाह्लादितां रामवल्लभां जानकीम् उपलभते स्म ददर्श ॥ भारतीये—वचोहरः श्रीशैलः अभिरामवल्लभां कमनीयकामिनीम् ॥ अपरवक्त्रम् ॥

पथिपथि परिरक्षतो दिगन्तान्दशमुखरागवतो वनान्तपालान् ।
उपशमफलया स विद्यया तां नयविदवोचत मोहयन्नितीदम् ॥ ३८ ॥

पथीति ॥ नयवित् स हनुमान्, पथिपथि मार्गेमार्गे, दिगन्तान् दिशां सीम्नः, परिरक्षतः समन्ततः पालयतः, दशमुखरागवतो रावणे प्रीतिमतः, वनान्तपालान् उपशमफलया विद्यया मोहयन् तां जानकीम् इति वक्ष्यमाणप्रकारेण इदमनुपदवक्ष्यमाणम्, अवोचत उक्तवान् ॥ भारतीये—स श्रीशैलः, मुखरागवतः मुखेष्वारक्तिमानं दधानान् दश दिगन्तान् परिरक्षतः तां कामिनीम् ॥ पुष्पिताग्रावृत्तम् ॥

तवैव संदर्शनसंकथाः कथास्त्वयि प्रसक्ताः श्रुतयो दिवानिशम् ।
त्वयैव वाञ्छाः सहवासतत्परा विना त्वदुर्वीपतिरुन्मनायते ॥ ३९ ॥

तवेति ॥ हे भद्रे, कथा वार्ताः तवैव संदर्शनसंकथाः संदर्शनं संकथयन्ति तादृश्यः, श्रुतयः श्रोत्राणि दिवानिशं त्वय्येव प्रसक्ताः त्वद्विषयकवार्ताश्रवणोत्सुकाः, वाञ्छा इच्छा त्वयैव सहवासतत्परा एकत्रावस्थानसंधिन्यः प्रवर्तन्ते । त्वत् त्वत्तो विना उर्वीपती राम उन्मनायते खेदमनुभवति ॥ भारतीये—उर्वीपतिर्गरुडध्वजः ॥ वंशस्थम् ॥

सुनिचितमपि शून्यमाभासते परिजनविभवोऽपि सैकाकिता ।
अरुचिरभवदस्य लक्ष्मीसुखे त्वदनभिगमनेन रिक्तं मनः ॥ ४० ॥

सुनिचितमिति ॥ अस्य रामस्य कृष्णस्य वा त्वदनभिगमनेन भवदप्राप्त्या सुनिचितं संभृतमपि शून्यम्, परिजनविभवः परिवारजनसंपद् अपि स एकाकिता, आभासते । लक्ष्मीसुखेऽरुचिरप्रीतिः, मनो रिक्तम्, अभवत् ॥ प्रमुदितवदना वृत्तम् ॥

अनुरहसमुपैति मन्त्रं मुहुः परमपि परिवृत्त्य नाधेत सः ।
असुषु वसुषु च व्ययं व्यश्नुते सपदि तव कृते न किं तत्कृतम् ॥ ४१ ॥

अनुरेति ॥ स रामो नरेन्द्रो वा, तव कृते त्वदर्थमनुरहसं जनकोलाहलोज्झिते एकान्त-

प्रदेशे मुहुर्वारंवारं मन्त्रं गुप्तभाषणमुपैति, परमपि मार्गगामिनमपि परिवृत्त्य आवृत्य नाथेत याचेत 'सा मत्प्रिया यदि दृष्टा तदा ब्रूत' इति पृच्छेत् । सपदि शीघ्रमसुषु प्राणेषु वसुषु द्रव्येषु च व्ययं व्यश्नुते । तेन किं तद् न कृतम् । अपि तु सर्वम् ॥

सुहृदयमसुदेयं प्रेम मेऽन्योन्ययोगात्सहजमुपकरिष्यत्यायतं हन्त यस्मिन् ।
स्वयमुपनयमानं तत्कदा भावि तादृग्दिनमनुदिनमेवं ध्यायति त्वां नरेन्द्रः ४२

सुहृदयमिति ॥ यस्मिन्दिने, असुदेयमसवो देया यत्र तत् सहजं नैसर्गिकमायतं दीर्घं प्रेम स्नेहोऽन्योन्ययोगात् परस्परसंबन्धात् मे सुहृदयमुपकरिष्यति । स्वयमात्मनोपनयमानं प्रढौकमानं तादृक् तद् दिनं कदा भविष्यति । एवमनुदिनं त्वां नरेन्द्रो ध्यायति ॥ मालिनीवृत्तम् ॥

सेनां विष्णोरथरयमयीं धीरकाकुस्थनादां
नागैर्व्याप्तामिह समकरैर्दिग्गतैरीक्षितासे ।
कल्पान्ताब्धिप्लुतिमिव महाभीममत्स्यध्वजौघां
संगन्तासे त्वमचिरमतस्तेन पद्मेश्वरेण ॥ ४३ ॥

सेनामिति ॥ त्वमथ रयमयीं वेगमयीं, धीरकाकुस्थनादां धीरः काकुस्थयो रामलक्ष्मणयोर्नादो यस्यां, दिग्गतैर्दिक्षु प्रवृत्तैः, समकरैः सशोभशुण्डादण्डैर्नागैर्दिग्गजैर्व्याप्ताम् । एतेन कृत्स्नधरामण्डलाच्छादिनीं, महाभीममत्स्यध्वजौघां गरिष्ठभयानकमीनाकरालम्बसमूहां विष्णोर्लक्ष्मणस्य सेनाम् । रथरयमयीं रथस्येव रयो हेतुर्यस्यास्तां, धीरकाकुस्थनादां धीरस्य गम्भीरस्य कस्य जलस्य आकुस्थः कुं पृथ्वीं व्याप्य तिष्ठन् नादो यस्यास्तां, समकरैर्मकरसहितैर्नागैरम्भोगजैर्व्याप्तां महाभीममत्स्यध्वजौघां महान्तो भीमा भयानका मत्स्या ध्वजौघा यस्यास्ताम्, कल्पान्ताब्धिप्लुतिं प्रलयकालजलधिप्लवमिव । ईक्षितासे । अतः कारणात् तेन पद्मेश्वरेण रामसंज्ञकेश्वरेणाचिरं शीघ्रमेव संगन्तासे ॥ भारतीये—रथरयमयीं स्यन्दनवेगप्रचुरां धीरकाकुस्थनादां धीरः काकुस्थो विरुद्धाभिप्रायेण वक्रोक्तिस्थो नादो यस्यां तां, समकरैः समानशुण्डैः, महाभीममत्स्यध्वजौघां महान् भीमो वृकोदरो मत्स्यो विराटाख्यराजश्च ध्वजौघ आलम्बपङ्क्तिर्यत्र तां पद्मेश्वरेण पद्मापतिना कृष्णेन ॥ मन्दाक्रान्तावृत्तम् ॥

इतीदमभिधाय तां नयपरोऽयमाश्वासय-
न्प्रदाय नृपमुद्रिकासमुपलक्षितं प्राभृतम् ।
मुदायत पतिं रिपोः कुलधनं जयन्तं विधो-
स्तथैति हि कृतार्थवक्रमुपपौर्णमासं महः ॥ ४४ ॥

इति धनंजयकविविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये हनुमन्नारायणदूताभिगमनं नाम त्रयोदशः सर्गः समाप्तः ।

इतीदमिति ॥ नयपरो नीतिपरोऽयं हनुमान् इति पूर्वोक्तप्रकारेणेदमभिधाय नृपमुद्रिकासमुपलक्षितं राममुद्रिकाभिधं प्राभृतमुपायनं प्रदाय, तां जानकीमाश्वासयन् सन् रिपोः कुलघ्नं जयन्तं पतिं रामं मुदा हर्षेण आयत । तथा उपपौर्णमासं पौर्णमासीसमीपोद्भवं विधोश्चन्द्रस्य महस्तेजः कृतार्थवक्त्रं कृतार्थताव्यञ्जकवदनं हि निश्चये एति प्राप्नोति ॥ भारतीये—नृपमुद्रिकासमुपलक्षितं राजकीयमुद्रामुद्रितं प्राभृतमुपायनं तां काननस्थकामिनीम्, पतिं चक्रपाणिम् ॥ पृथ्वीछन्दः ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीछोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां हनुमन्नारायणदूताभिगमनकथनो नाम त्रयोदशः सर्गः ।

---

## चतुर्दशः सर्गः ।

श्रीपार्थः सपदि हरिस्तथा सरामः सुग्रीवः सदसि समंप्रभाविराटः ।
निश्चित्य प्रकृतिषु शक्तिमभ्यमित्रं व्युत्तस्थुः प्रलयदवानला इवामी ॥ १ ॥

श्रीपेति ॥ श्रीपार्थः श्रियं पाति तादृग् अर्थो यस्य लक्ष्मीरक्षाप्रयोजनः, हरिर्लक्ष्मणः, तथा स रामः प्रभाविराटः प्रभावी राटो ध्वनिर्यस्य स सुग्रीवो वानरराजः, अमी सपदि शीघ्रं सदसि सभायां समं युगपत् प्रकृतिषु स्वाम्यमात्यादिषु शक्तिं निश्चित्य अभ्यमित्रं अमित्रं शत्रुं लक्षीकृत्य प्रलयदवानला इव व्युत्तस्थुः ॥ भारतीये—श्रीपार्थो लक्ष्म्युपलक्षितोऽर्जुनः, हरिः कृष्णः, सरामो बलभद्रयुतः, सुग्रीवः शोभनग्रीवः, समंप्रभाः समं कदाप्यम्लानं प्रकृष्टं भाति सः । सममित्यव्ययम् । विराटः ॥ सर्गेऽस्मिन्प्रहर्षिणी वृत्तम् ॥

स्कन्धस्था मदकरिणः प्रयाणभेरी दध्वान प्रतिसमयं निहन्यमाना ।
अत्युच्चैः पदमधिरोप्य मान्यमारान्न्यक्कारं क इह परैः कृतं सहेत ॥ २ ॥

स्कन्धस्थेति ॥ मदकरिणो मत्तमातङ्गस्य स्कन्धस्था प्रयाणभेरी निहन्यमाना सती प्रतिसमयं प्रतिक्षणं दध्वान ध्वनितवती । कः पुरुषोऽत्युच्चैरुच्चतरं पदं मान्यं जनमधिरोप्य नीत्वा आरात् पश्चादिह लोके परैः शत्रुभिः कृतं न्यक्कारं सहेत । अपि तु न कोऽपि ॥

आरावं दिशिदिशि तं निशम्य तस्या रोमाञ्चैः परिहृषितैस्तनुर्नृपाणाम् ।
अम्भोदप्रथमरवोत्थरत्नसूचिः संरेजे स्वयमिव सा विदूरभूमिः ॥ ३ ॥

आरावमिति ॥ नृपाणां सा तनुस्तमारावं दिशिदिशि निशम्य श्रुत्वा परिहृषितैरत्यानन्दसमुत्थितै रोमाञ्चैः, स्वयमात्मना, अम्भोदप्रथमरवोत्थरत्नसूचिरम्भोदस्य प्रथमरवादुत्था रत्नसूचिर्यस्यास्तादृग्विदूरभूमिरिव । संरेजे शुशुभे ॥

रागादेः सह वसतोऽपि तापवृत्तेर्यः स्वस्मिन्नवधिरहो न कस्यचित्सः ।
भूपानां रिपुमभिपश्यतामिवोग्रं यत्कोपे स्फुरति रसान्तरं न जज्ञे ॥ ४ ॥

रागादेरिति ॥ सह वसत एकत्रावस्थानवतोऽपि रागादेर्गान्धर्वीयगीतादेर्योऽवधिरासीत् सोऽवधिस्तापवृत्तेस्तापस्य वृत्तिर्यत्र तादृशः कस्यचित् स्वस्मिन्नात्मनि नासीत् । यद् यस्मात्कारणाद् रिपुं शत्रुमभिपश्यतां सामस्त्येन निरीक्षमाणानामिव भूपानां कोपे स्फुरति सत्युग्रं रसान्तरं न जज्ञे ॥

सारङ्गैः कृतमणिमण्डनैर्विगाढा साश्वासा प्रतिदिशमुन्नमत्स्यदामा ।
सामन्तैः पथि चलिता चमूः पयोधेर्वेलेव प्रबलमदध्वनन्मरुद्भिः ॥ ५ ॥

सारङ्गैरिति ॥ कृतमणिमण्डनैर्विहितरत्नभूषणैः सारङ्गैः शबलवर्णैः सामन्तैर्जाम्बवादिभिर्विगाढा व्याप्ता, साश्वासा शीघ्रप्लुतिसहिता, उन्नमत्स्यदोच्चलद्वेगा, पथि अमा सहैककालं चलिता चमूः सेना प्रतिदिशं प्रबलं यथा स्यात्तथा । कृतमणिमण्डनैः कृतं मणिभिर्जलसूक्ष्मबिन्दुभिर्मण्डनं येषां तैः सामन्तैरासन्नवर्तिभिः सारङ्गैश्चातकैर्व्याप्ता, साश्वासा आश्वासैर्जलप्रवाहैः सहिता, उन्नमत्स्यदामा उन्नं क्लेदं प्राप्तं मत्स्यानां दाम माला यस्यां सा, पयोधेः समुद्रस्य वेला मरुद्भिर्वायुभिश्चलिता चालिता इव, अदध्वनत् ध्वनितवती ॥ भारतीये—सारङ्गैर्मातङ्गैः, साश्वा अश्वव्याप्ता, सामन्तैः समुद्रविजयादिभिः अमा सह चलिता सा चमूः ॥

आनीलं द्विपमधिरुह्य रामभद्रः श्वेतोऽब्दं मिहिर इवासितं निरैयः ।
सिन्दूरद्युतिरचितं स पीतवासाः कृष्णोऽभ्रं जलद इवारुणं तडित्वान् ॥६॥

आनीलमिति ॥ श्वेतो रामभद्रो रामचन्द्रो बलदेवश्च, ईषन्नीलं गजम् । मिहिरोऽसितं कृष्णमब्दं मेघमिव, पीतवासाः कृष्णो लक्ष्मणो वासुदेवश्च सिन्दूरद्युतिरचितं द्विपं 'तडित्वान् विद्युत्वान् जलदो मेघोऽरुणं रक्तमभ्रमिवाधिरुह्य निरैयो निर्गतवान् । जौहोत्यादिकस्य ऋधातोर्लङि रूपम् ॥

ये कुन्त्यां जननमिता विभासयन्तो राजानः पथिषु नभःसदाञ्चितेन ।
धाम्ना ते ननु चतुरङ्गसेनयोच्चैःप्रासादिस्थितियुतया स्म संचरन्ते ॥ ७ ॥

ये कुन्त्यामिति ॥ ये जननमिता जननमस्कृता नभःसदां विद्याधराणां सुग्रीवप्रभृतीनां चितेन पुष्टेन धाम्ना तेजसा त्वां कुं पृथ्वीं पथिषु मार्गेषु विभासयन्तः प्रकाशयन्तो राजानः सुग्रीवप्रभृतयः उच्चैः प्रासादिस्थितियुतया प्रकर्षेण आसो वृक्षादीनां क्षेप आदिर्येषां तेषां दशनादीनां प्रासादीनां कुन्तादीनां वा स्थित्या युतया चतुरङ्गसेनया हस्त्यश्वरथपदातिपृतनया तुरंगसेनया शीघ्रगामिसेनया वा उच्चैः संचरन्ते स्म ॥ भारतीये—नभःसदा गगनं व्याप्नुवता, अञ्चितेन लोकप्रशस्येन विभासयन्तः शोभमानाः कुन्त्यां पाण्डुपत्न्यां जननं जन्म इता गता उच्चैः प्राः उच्चैःप्रो । पृङ् व्यायामे । घञर्थे कः । व्यायामो येषां ते राजानो युधिष्ठिरप्रभृतय उच्चैःप्रासादिस्थितियुतया उच्चैः प्रासादाः सप्तक्षणगृहाः सन्ति यस्यां तया स्थित्या युतया पटमण्डपादिसमृद्धिमत्या, सादिस्थितियुतया अश्वारोहस्थितियुतया तुरंगसेनया अश्वसेनया ॥

शौर्यान्तस्थिति विषमाभयादवोत्थं वैराटं चतुरगकुंजरप्रधानम् ।
सौमित्र्याहितरति संयदुत्कपीनं गत्वैक्यं जगदिव तद्बलं चचाल ॥ ८ ॥

शौर्येति ॥ शौर्यान्तास्थिति क्षात्रधर्मोररीकृतस्थिति, नारायणमध्यस्थानकम् । विषमाभयादवोत्थं तीव्रकान्त्या दवानलतुल्यम्, तीव्रप्रतापियादवोत्पन्नम् । वैराटं वैरगामि, विराटराजसंबन्धि । चतुरगकुंजरप्रधानं चतुरगामिकोशप्रधानम्, च तुरंगमगजसनाथीकृतम् । सौमित्र्याहितरति लक्ष्मणाहितरति, सुमित्रत्वारोपितासक्ति । संयदुत्कपीनं समरोत्कण्ठितमर्कटेशम्, रणोत्सुकजनव्याप्तम् । तद् बलमैक्यं गत्वा जगदिव चचाल ॥

उत्कीर्णैरिव विधुभिर्मुखैस्तमालप्रारोहैरिव चिहुरैर्दृशां विलासैः ।
कुर्वद्भिः सर इव सोत्पलं दिगन्तं तद्देव्यः प्रसमचरन्त दन्तिनीभिः ॥ ९ ॥

उत्कीर्णैरिति ॥ उत्कीर्णैरुल्लिखितैर्विधुभिश्चन्द्रैरिव मुखैः, तमालप्रारोहैरिव चिहुरैः कुटिलकेशपाशैः सर इव दिगन्तं सोत्पलं कुर्वद्भिर्विलासैः कटाक्षविक्षेपैः, उपलक्षितास्तद्देव्यस्तेषां राज्ञां देव्यो महिष्यो दन्तिनीभिः करिणीभिः प्रसमचरन्त ॥

उत्कार्तस्वररुचयोऽपि सौम्यभावा भामिन्यः सहजघनाः कुचोदिताङ्ग्यः ।
मेघालीष्विव करिणीषु दिव्यरुच्या लालित्यात्तडित इवाभवन्स्फुरन्त्यः॥ १० ॥

उत्केति ॥ उत्कार्तस्वररुचयः निष्टप्तकाञ्चनकान्तयः, उत्क उत्कट आर्तो भयानकस्वरो यत्र तादृग्रुचिर्नयनझम्पनकारिप्रकाशो यत्र । सहजघना जघनसहिताः सार्धं जातमेघाः । कुचोदिताङ्ग्यः कुचार्थमुदितमङ्गं यासां ताः, पृथिवीप्रेरितशरीराः । दिव्यरुच्या मनोहराभरणाः मनोज्ञदीप्तिः । सौम्यभावरमणीयरमणीनां तडितः, करिणीनां मेघाली उपमानम् ॥

उन्नेतुं तपनवितापमङ्गनानां छन्नाभिर्मणिमयकम्बलैर्वृषीभिः ।
शोणाभिर्बभुरधिरूढसांध्यरागा गच्छन्त्यस्ततय इवाम्बुदां करिण्यः ॥ ११ ॥

उन्नेतुमिति ॥ अङ्गनानां करिण्यस्तपनवितापं सूर्यातपमुन्नेतुम्, मणिमयकम्बलैश्छन्नाभिः शोणाभी रक्ताभिर्वृषीभिः करिकम्बलैरुपलक्षिता गच्छन्त्यः सत्यः । अधिरूढसांध्यरागाः स्वीकृतसंध्याभवरागा अम्बुदां मेघानां ततय इव । बभुः ॥

मायूरं गतमुत नौप्लवं गतानां वाहानां पथि परतोऽधिरोपिताभिः ।
बालाभिः कुचभुजपीडिता युवानस्तद्भूयः स्थपुटदरीषु यानमीषुः ॥ १२ ॥

मायूरमिति ॥ मायूरमुड्डयनात्मकम् उताथवा नौप्लवं जलतरणात्मकं गतं गमनं गतान्प्राप्तानां वाहानामश्वानां परतः पृष्ठेऽधिरोपिताभिर्बालाभिस्तरुणीभिः पथि कुचभुजपीडिताः पतनभीरुकामिन्यालिङ्गने कुचभुजाभ्यां पीडा । युवानो भूयो वारंवारं स्थपुटदरीषु सरलमार्गेषु तद् यानमीषुः ॥

आत्मैव स्वयमवधार्यते कथंचिद्दुर्वारः परिणतमण्डलः प्रतापी।
नामेति व्यभिचरितं तदातपत्रैः पूषास्तं गत इव न त्विषं पुपोष॥ १३ ॥

आत्मैवेति ॥ तदातपत्रैर्नरेन्द्रघर्मवारणैः सूर्येण स्वयमेव दुर्वारो दुर्निवारः, परिणतमण्डलः प्रतापी प्रतापवान् आत्मा कथंचिद् महाकष्टेन अवधार्यते। अतएव प्रयाणकाले पूषा सूर्योऽस्तं गत इव त्विषमातपं न पुपोष इति नाम अहो व्यभिचरितम् ॥

निःशेषोऽप्यधिवृषि बद्धचित्रचिह्नो मातङ्गस्तुरगतरङ्गभाजि तुङ्गः।
नौसंघः समभिपतन्महाकराग्रं सेनाब्धाववतरदुच्चकर्णधारः ॥ १४ ॥

निःशेष इति ॥ बद्धचित्रचिह्नः नियमितविविधध्वजः, तुङ्ग उच्चः, निःशेषो निखिलः मातङ्गो गजः, उच्चकर्णधारः उच्चकर्णवर्तिकः उच्चैर्नियामको वा। तुरगतरङ्गभाजि वाजिरूपकल्लोलाश्रिते, आशुगोर्मिभाजि। सेनाब्धौ अब्धौ इव सेनायां समभिपतन्महाकराग्रमूर्ध्वीकुर्वन्महाशुण्डाग्रं यथा स्यात्तथा अधिवृषि यथा स्यात्तथा अवतरत् ॥

यद्दूरं निकटतरं हयाः समीयुर्नेदीयो यदतिययुः क्षणाद्दवीयः।
दूरस्थं यदसुलभं तदाप्तुकामस्तत्प्राप्तं त्यजति नवप्रियो हि लोकः॥ १५ ॥

यद्दूरमिति ॥ हया यद्दूरमासीत् तत् निकटतरं यथा स्यात्तथा समीयुः संगतवन्तः, यद् नेदीयो निकटतरमासीत् तद् दवीयो दूरतरं यथा स्यात्तथा अतिययुरतिक्रान्तवन्तः, हि यतो नवप्रियो लोको यद् दूरस्थमसुलभं तदाप्तुकामो भवति, यत्प्राप्तं तत् त्यजति ॥

वर्ध्रीभिर्विमथितमग्र्यपश्चिमाभिः स्वेदाम्भः सितरुचि फेनिलं हरीणाम्।
रूप्यस्य स्फुरदिव मण्डनं चकाशे केषां वा श्रमफलमुन्नतिं न धत्ते ॥ १६ ॥

वर्ध्रीभिरिति ॥ अग्र्यपश्चिमाभिरग्रभवपश्चाद्भवाभिवर्ध्रीभिश्चर्मरज्जूभिर्विमथितमालोडितं सितरुचि श्वेतदीप्ति फेनिलं डिण्डीरपिण्डीयुक्तं हरीणामश्वानां स्वेदाम्भः स्फुरद् दीप्यमानं सद्रूप्यस्य रजतस्य मण्डनं भूषणमिव चकाशे। युक्तमेतत्। यतः श्रमफलं केषामुन्नतिं न धत्ते ॥

मातङ्गप्रभृतिपदाभिघातधूतः संप्राप्य प्रसरमितस्ततोऽपि पांसुः।
आरुक्षन्नृपतिशिरःसमुद्धतत्वान्नीचस्य स्थितिरियमद्भुतं न किंचित्॥ १७ ॥

मातङ्गेति ॥ मातङ्गप्रभृतिपदाभिघातधूतः गजप्रभृतिचरणक्षोदोत्क्षिप्तः ॥

संतप्तस्तपनमरीचिभिः कटाभ्यां नागानां मदगुरुणाग्रपल्लवेन।
क्षुण्णोऽपि भ्रमरगणः स्थितोऽनुकर्णं छाया यत्पदमपि सा वरं न तूष्णम्॥ १८

संतप्तेति ॥ तपनमरीचिभिः सूर्यकिरणैः संतप्तः, नागानां गजानां कटाभ्यां कपोलाभ्यां सकाशात् मदगुरुणा अग्रपल्लवेन कर्णाग्रभागेन क्षुण्णः क्षोदं नीतोऽपि भ्रमरगणोऽनुकर्णं कर्णपश्चाद्भागे स्थितः। यत्—पदमपि या छाया सा वरम्, न तु उष्णम् ॥

कायस्य त्वचि कठिनस्य कर्कशायां निर्यातुं विकलमपास्य तप्तमास्यात्।
सूत्कारस्रुतकरशीकराः कराग्रैरन्तस्थं ववमुरिव द्विपाः श्रमाम्भः॥ १९॥

कायस्येति॥ सूत्कारस्रुतकरशीकराः सूत्कारवशात्स्रुताः कराच्छुण्डादण्डात् शीकरा जलकणा यैस्ते द्विपा आस्यान्मुखात् तप्तं संतप्तं, विकलमसमर्थं श्रमाम्भोऽपास्यापाकृत्य, कठिनस्य कर्कशस्य कायस्य कर्कशायां त्वचि निर्यातुम्, अन्तस्थं श्रमाम्भः श्रमजलं कराग्रैः शुण्डाग्रैर्ववमुरिव॥

उच्छ्वासाद्विविधभरं लघुं वहन्तः किं न्यूनं किमधिकमित्यधीश्वराणाम्।
सत्कारं निजनियतं च कर्म कार्मा मध्यस्थाः समतुलयन्निवाध्वनीनाः॥२०॥

उच्छ्वासा इति॥ अध्वनीना अध्वानमलंगामिनः, कार्माः शिक्यवाहा लघुं विविधभरं काचभारम् उच्छ्वासाद् आयासजन्यनासाद्वारवायुविमोचनात्, वहन्तः सन्तः (कर्मसत्कारयोः) मध्यस्थाः सन्तोऽधीश्वराणां किं कर्म न्यूनं किम् अधि अधिकम् इति निजनियतं कर्म सत्कारं च समतुलयन्निव॥

सेनैवंविरचितपार्थवाजिवेगादिक्ष्वाकुस्थितिविधिना यशो निधित्सुः।
प्रस्थानात्प्रभृति पृथग्विधा निवेशान्नात्रुट्यज्जलनिधिगामिनी धुनीव॥ २१॥

सेनैवमिति॥ इक्ष्वाकुस्थितिविधिना इक्ष्वाकूणां रामलक्ष्मणादीनां स्थितिविधिना आज्ञया, एवं विरचितपार्थवाजिवेगाद् एवमित्यङ्गीकारेण विरचितं पार्थवं पृथुत्वं यस्मिंस्तादृशाद् आजौ समरे वेगाद्यशो निधित्सुर्विधातुमिच्छुः, पृथग्विधा सेना प्रस्थानात् प्रयाणकप्रदेशात् प्रभृति निवेशात् निवेशं शिबिरं मर्यादीकृत्य 'जलनिधिगामिनी समुद्रगा धुनी नदी इव' न अत्रुट्यत्॥ भारतीये—विरचितपार्थवाजिवेगा विरचितो विहितः पार्थस्यार्जुनस्य वाजिनो वेगो यस्यां सा, आकुस्थितिविधिना आ अभिव्याप्तवत्याः कुं स्थितेर्विधिना पृथ्वीव्यापकावस्थाविधानेन, दिक्षु यशो निधित्सुः सेना एवममुना प्रकारेण॥

बीभत्सं रणरुचिरङ्गदोर्जितश्रीराशंसुर्जितपरभूमिपावनिश्च।
भीमोघस्थितिरिपुदुर्धरं स्वरूपं पौरस्त्यां धुरि गतिमापतां ध्वजिन्याः॥२२॥

बीभत्समिति॥ रणरुचिः समरप्रीतिः, अर्जितश्रीः, भीमो भयानकः, अघस्थितिरिपुदुर्धरम् अघस्थितिरिपूणां पापिशत्रूणां दुर्धरम्, भीमोघस्थितिरिपुदुर्धरं भिया भयेन मोघा निष्फला स्थितिर्येषां तादृशां शत्रूणां दुर्धरं वा, जितपरभूमि जिता परेषां शत्रूणां भूमिर्येन तादृशं बीभत्सं रौद्रं स्वरूपम् आशंसुः श्लाघमानः, अङ्गदो वालिपुत्रः पावनिर्हनुमांश्च ध्वजिन्याः सेनाया धुरि पौरस्त्यामग्रभवां गतिमापतां प्राप्तवन्तौ॥ भारतीये—गदोर्जितश्रीः गदया ऊर्जिता श्रीर्येन, रणरुचिरं रणं रुचिरं प्रीत्युत्पादकं यस्य तम् रणे रुचिं प्रीतिं राति तं वा, अघस्थितिरिपुदुर्धरम्, स्वरूपमात्मरूपं प्रावृतत्वात्। बिन्दुत्यागेन अघस्थि-

तिदुर्धरस्वरूपमित्येकपदं वा। बीभत्समर्जुनम्, आशंसुः श्लाघ्यमानः भीमो वृकोदरस्तां ध्वजिन्याः पौरस्त्यां गतिमाप ॥

तत्पार्श्वे गतधृतिमत्स्यदेशमाढ्यं भुञ्जानोऽनलसहितः सुखं प्रतस्थे।
पञ्चालोचितविषयप्रभुश्च सैन्यं बिभ्राणः सवसुयशोविलासिनीलः ॥ २३ ॥

तत्पार्श्वे इति ॥ शमाढ्यमुपशमप्रधानं सुखं भुञ्जानोऽनुभवन् नलसहितो नलेन राज्ञा सहितः पञ्चालोचितविषयप्रभुः पञ्चाले देशे उचितानां विषयाणां प्रभुर्नील एतदाख्यराजः सवसुयशोविलासि वसुना द्रव्येण सहितेन यशसा विलसति तत् सैन्यं बिभ्राणः सन् गतधृतिमत्स्यदे गमनधैर्यवद्वेगयुते, तत्पार्श्वे सेनापार्श्वे प्रतस्थे॥ भारतीये—गतधृति गतं धरमाणे तत्पार्श्वेऽनलसहितः क्रोधाभिव्याप्तः, अनलसेभ्य उद्योगिभ्यो हित आढ्यं समृद्धं मत्स्यदेशं भुञ्जान उपभुञ्जानो विराटः, सवसुयशोविलासिनीलः वसुना यशसा विलासिन्या इलया च सहितः, पञ्चालोचितविषयप्रभुः पञ्चालस्योचितस्य धनकनकसमृद्धस्य विषयस्य प्रभुः पालको द्रुपदराजश्च ॥

तन्मध्यं हरिकुलनायकैरनेकैरामोदस्फुटसितचन्दनोचिताङ्गः।
दुर्वृत्तं विजहदसज्जनार्दनोऽसौ भूपार्थक्षतशमनोद्यतो जगाहे ॥ २४ ॥

दुर्वृत्तमिति ॥ स्फुटसितचन्दनोचिताङ्गः स्फुटसिताय सुग्रीवाय चन्दनाय तन्नाम्ने उचितं रक्षणोचितम् अङ्गं यस्य तादृक् दुर्वृत्तं विजहत् असज्जनार्दनः असतो दुष्टाञ्जनानर्दयति तादृक्, भूपार्थक्षतशमनोद्यतो भूपानाम् अर्थस्य क्षात्त्रधर्मस्य क्षतस्य नाशस्य शमने उद्यतः क्षात्त्रधर्मप्रतिपालकोऽसौ रामोऽदः। खर्परशर्त्वेन विसर्गलोपः। तन्मध्यं सेनामध्यम् अनेकैर्हरिवंशनायकैर्वानरसंघस्वामिभिर्जगाहे ॥ भारतीये—आमोदस्फुटसितचन्दनोचिताङ्गः आमोदेन स्फुटस्य सितचन्दनस्योचितमङ्गं यस्य, भूपार्थक्षतशमनोद्यतः भुवः पार्थानां च क्षतशमने उद्यतः, जनार्दनो विष्णुः, असद् असमीचीनम् असौ खड्गे, दुर्वृत्तं विजहत् त्यजन् ॥

मदोत्तमाद्रेयबलेभसारे भागेऽपरे सर्पति जाम्बवेऽस्मिन्।
द्वीपेऽन्विते राजभिरप्रसह्यैः ससर्प वेलेव चमूः पयोधेः ॥ २५ ॥

मदोत्तमेति ॥ मदोत्तमाद्रेयबलेभसारे मदोत्तमैर्मदप्रधानैराद्रेयैः पर्वतोद्भवैर्बलेभैः सैन्यगजैः सारे अप्रसह्यै राजभिरन्विते अस्मिन् जाम्बवे जाम्बवीयबले अपरे भागे पश्चिमभागे सर्पति सति चमूः। पयोधेर्वेलेव। ससर्प ॥ भारतीये—मदोत्तमाद्रेयबलेभसारे मदेनोत्तैः क्लिन्नैर्माद्रेयबलेभैर्नकुलसहदेवसैन्यगजैः सारे बले सर्पति सति अप्रसह्यै राजभिरन्विते अस्मिन् जाम्बवे जम्बूवृक्षोपलक्षिते द्वीपे ॥ उपजातिः ॥

एवं नानाक्षत्त्रियवर्गैः पृतनाग्रे सालङ्कान्तं रौप्यमिवैतैः सह सालम्।
वेलापातश्चेततरङ्गं जलराशिं तं सारम्भोगाङ्गमवापन्नृपतिश्च ॥ २६ ॥

एवमिति ॥ सा पृतना सेना एतैर्नानाक्षत्रियवर्गैः सह एवमुक्तप्रकारेण अग्रे प्रथमं लङ्कान्तं लङ्कासमीपवर्तिनं वेलापातश्वेततरङ्गं तं जलराशिं समुद्रं रौप्यं रजतनिर्मितं शालं प्राकारमिव अवापत् । नृपती रामः सारं प्रधानं भोगाङ्गं पालनोपायम् अवापत् स्वीकृतवान् ॥ भारतीये—सा पृतना अलमतिशयेन कान्तं मनोहरं गाङ्गं गङ्गासंबन्धिनं जलराशिं जलसमूहम् । सारम्भ आरम्भेण सहितो नृपतिश्च ॥ मत्तमयूरं वृत्तम् ॥

चिरानवस्थाननियोगखिन्नमेकस्थमत्यायतमापगौघम् ।
यथाम्बुराशिं ध्वजिनीरजोभिः श्यामायमानं ददृशुर्बलानि ॥ २७ ॥

चिरेति ॥ बलानि सैन्यानि, ध्वजिनीरजोभिः सैन्यरेणूत्करैः, श्यामायमानमम्बुराशिं समुद्रम् । चिरानवस्थाननियोगखिन्नं बहुतरकालपर्यटनव्यापारेण श्रान्तमेकस्थमेकत्रावस्थितम् अत्यायतं दीर्घतरमापगौघं सरित्समूहमिव । ददृशुः ॥ भारतीये—आपगौघं सरित्समूहसंभवमम्बुराशिं जलसमूहमेकस्थमेकत्र विश्रान्तमिव ॥ उपजातिः ॥

दिदृक्षुराद्यन्तमिव प्रमाणं पूर्वापरं वा प्रथमाभिषङ्गात् ।
समुद्रतीरञ्जितसर्वलोका सेनापगां व्याप्तवती बलेन ॥ २८ ॥

दिदृक्षुरिति ॥ जितसर्वलोका सेना । प्रथमाभिषङ्गादाद्यन्तं पूर्वापरं वा प्रमाणं दिदृक्षुरिव गां पृथ्वीम्, व्याप्तवती सती, बलेन रामेण, समुद्रतीरमाप ॥ भारतीये—समुद्रतिर्मुदि रत्या सहिता, रञ्जितसर्वलोका रञ्जितः सर्वो लोको यया सा, सेना, आपगां नदीं, बलेन बलभद्रेण, व्याप्तवती ॥ उपजातिः ॥

समुद्रंहान्यायं विदधदहितस्यापिहितधीः
स नीलाभोगङ्गां व्युदतरदवन्विष्णुरखिलम् ।
गतं खेलंकुर्वद्बलमपि तथा वानरमयं
रजस्त्वेकं चम्वाः सलिलधिनिषिद्धं निववृते ॥ २९ ॥

समुद्रमिति ॥ स विष्णुर्लक्ष्मणः, हा कष्टे अहितस्य शत्रोरपि हितधीः सन् न्यायं विदधत् कुर्वन्, गां पृथिवीम् अवंश्च सन्, नीलाभोगं नील आभोगो यस्य तं समुद्रं व्युदतरत् । तथा अखिलं वानरमयं बलमपि खे गगने अलंकुर्वत् गगनमार्गेण गतम् । एकं चम्वाः सेनाया रजस्तु सलिलधिनिषिद्धं सत् निववृते ॥ भारतीये—समुद्रंहाः सह मुदा रंहो यस्य, यद्वा अहितस्यापि समुद्रं सानन्दरवं न्यायम् । अपिहितधीः न पिहिता धीर्यस्य अनावृतबुद्धिः । नीलाभो नीला आभा यस्य स विष्णुः कृष्णो गङ्गां खेलं क्रीडां कुर्वद् वा इव नरमयं बलमपि । सलिलधिर्गङ्गा ॥ शिखरिणी ॥

तद्वानेयद्विपमदमरुद्भ्रान्तचित्तं कथंचि-
द्भूतावेशाद्भ्रमदिव शिरो धुन्वदाधोरणानाम् ।

तीरोपान्तप्रहितनयनं हास्तिकं वारि तीर्णं
गन्तुं सेतुः कृत इव घटाबद्धमक्षौहिणीनाम् ॥ ३० ॥

तदिति ॥ वानेयद्विपमदमरुद्भ्रान्तचित्तं वनभवगजसंबन्धिमदामोदितवायुभ्रमितचेतः, कथंचिदाकस्मिकाद् भूतावेशाद्ग्रहावेशाद् भ्रमदिव आधोरणानां हस्तिपकानां शिरः धुन्वत् कम्पयत्, तीरोपान्तप्रहितनयनं तटसमीपप्रेरितलोचनं घटाबद्धं घटया युद्धघटनया आबद्धमायोजितम्, अक्षौहिणीनां हास्तिकं हस्तिसमूहः । गन्तुं कृतः सेतुरिव । वारि समुद्रजलम् तीर्णमुत्तीर्णवत् ॥ मन्दाक्रान्ता ॥

वाजी वायुमयं जवं जवमयं चित्तं स चेतोमयं
देहं बिभ्रदिवाखिलोऽपि चटुलोऽप्यारोढुरेवाशये ।
काये चैक्यमुपेयिवानिव वशादर्णः समुत्तीर्णवा-
न्दम्यं नाम विवर्तते दमयितुः शीलेन कालान्तरे ॥ ३१ ॥

वाजीति ॥ अखिलोऽपि चटुलश्चञ्चलोऽपि स वाजी । जातावेकवचनम् । वायुमयं जवम्, जवमयं चित्तम्, चेतोमयं देहं बिभ्रदिव, आरोढुरेव वशादाशये काये चैक्यमुपेयिवान् इव, अर्णो जलं समुत्तीर्णवान् । नाम प्रसिद्धौ दम्यं वस्तु कालान्तरे दमयितुः शीलेन विवर्तते विपरिणमते ॥ शार्दूलविक्रीडितम् ॥

प्राप्तव्योमासङ्गमोघं रथानां सव्येष्टास्तेऽनादिचक्रभ्रमेण ।
मुक्ताशंसंसारपारं सुखं तं भव्यं सन्मार्गा इव स्मानयन्ति ॥ ३२ ॥

प्राप्तेति ॥ ते सव्येष्ठाः सारथयः, प्राप्तव्योमासङ्गं प्राप्तो व्योम्न आकाशस्य आसङ्गः संबन्धो येन सारपारं सारो रेणूत्करो लोहं वा पारे पर्यन्ते यस्य तं भव्यं मनोहरं रथानाम् ओघं (मुख्यकर्म) सारपारं सारस्य जलस्य पारं परतीरं (गौणकर्म वा) मुक्ताशंसं मुक्तप्रशंसं यथा स्यात्तथा । सन्मार्गाः सम्यग्दर्शनज्ञानचारित्रलक्षणाः प्राप्तव्योमासङ्गं प्राप्तव्य उमया कीर्त्या सङ्गो येन तं, मुक्ताशं त्यक्तवाञ्छं तम् भव्यं धर्मनिष्ठं जनं (मुख्यकर्म) संसारपारं भवतटं (गौणकर्म) इव । सुखं यथा स्यात्तथा आनयन्ति स्म । शालिनी ॥

कर्णश्रुतिं गच्छति तूर्यनादे ध्वजेषु दृष्टिं पुरतः स्पृशत्सु ।
मोहं गतानीव चिरं विजज्ञुः कथंचिदात्मावसथं बलानि ॥ ३३ ॥

कर्णेति ॥ चिरं बहुतरकालेन । कथंचिन्महता कष्टेन ॥ उपजातिः ॥

तदेव गाम्भीर्यमदः प्रमाणमगाधता सैव तदायतिश्च ।
चमूरशेषा विततानुकूलं सा नद्यधीनप्रतिमेव रेजे ॥ ३४ ॥

तदेवेति ॥ अनुकूलं यथाङ्गम्, प्रतितटम् । नद्यधीनप्रतिमा नद्यधीनस्य समुद्रस्य प्रतिमा, नद्यधीना गङ्गैव प्रतिमा ॥

विचित्ररत्नप्रतिभाविशालं राजालयं राजकमभ्युपेत्य ।
रामाननालोकगतादराक्षं पार्थक्षतं रोद्धुमनोऽवतस्थे ॥ ३५ ॥

विचित्रेति ॥ विचित्ररत्नप्रतिभाविशालं विचित्राणां रत्नानां प्रतिभया स्फूर्त्या युता विशाला राजानो यत्र तत्, विचित्ररत्नं प्रतिभाविशालं वा । रामाननालोकगतादराक्षं रामस्य रामाणां रमणीयरमणीनां वा आननस्य आलोके प्रेक्षणे गतादरे प्राप्तादरे अक्षिणी यस्य तत्, राजकं राजसमूहः, विचित्ररत्नप्रतिभाविशालं विचित्ररत्नानां प्रतिभामवति तच्छीलः शालः प्राकारो यत्र, तच्छीला शाला यत्र वा तं राजालयं रावणालयं जरासंधालयं वा अभ्युपेत्य पार्थक्षतं मार्गोत्पन्नायासजतीव्रतरखेदं पाण्डवक्षतं रोद्धुमनः सदवतस्थे ॥

पथः श्रमं नेतुमपेतभारैर्विगाह्य हस्तेन विमुक्तमम्भः ।
विशीर्यमाणं प्रति सूर्यमुद्यन्मुक्ताफलाकारमियाय नागैः ॥ ३६ ॥

पथ इति ॥ अपेतभारैर्नागैः पथो मार्गस्य श्रमं नेतुमपाकर्तुं विगाह्य आलोड्य, हस्तेन शुण्डया विमुक्तं समुत्सृष्टं प्रतिसूर्यं सूर्याभिमुखम् उद्यदूर्ध्वं गच्छदम्भो जलं विशीर्यमाणं सन्मुक्ताफलाकारं मौक्तिकाकारम् इयाय जगाम ॥

पादघातविहितं चिरभागस्तद्भुवं क्षमयितुं प्रणमय्य ।
स्वं शिरोऽधिपदमश्वसमूहश्चाटुकार इव निर्लुठति स्म ॥ ३७ ॥

पादेति ॥ अश्वसमूहः चिरं बहुकालं पादघातविहितं तदागोऽपराधम्, भुवं क्षमयितुं क्षमां कारयितुं स्वमात्मीयं शिरः अधिपदं पदयोरुपरि प्रणमय्य नामयित्वा चाटुकार इव निर्लुठति स्म ॥ स्वागतावृत्तम् ॥

तीरद्रुमेषु करिणः, पटमण्डपेषु
वाहाः, सुधाभवनभित्तिषु राजलोकाः ।
आवासमादिषत, दंपतयो गुहासु,
सर्वत्र पुण्यसहिताः सुखमावसन्ति ॥ ३८ ॥

तीरेति ॥ वसन्ततिलकावृत्तम् ॥

गाङ्गाहिताः प्रतिजवैर्जलपातशीताः
कच्छान्तरेषु मरुतः कृतपुष्पवासाः ।
वार्धां वलाध्वपरिखेदममुं विनिन्युः
संबन्धनं जयति विश्रमदायि विश्वम् ॥ ३९ ॥

इति धनंजयकविविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये प्रयाणनिरूपणो नाम चतुर्दशः सर्गः ।

गाङ्गेति ॥ प्रतिजवैः प्रतिवेगैर्गां पृथिवीं गाहिता व्याप्तवन्तो जलपातशीता नीरपूरशीतलाः कच्छान्तरेषु जलप्रायान्तरेषु कृतपुष्पवासा विहितकुसुमामोदा वार्धी वार्धिभवा समुद्रोद्भवा मरुतो वायवोऽमुं बलाध्वपरिखेदं सैन्यस्य मार्गजं श्रमं विनिन्युः । विश्रमदायि विश्रामदं विश्वं संबन्धनं संबन्धो जयति सर्वोत्कर्षेण वर्तते ॥ भारतीये—वार्धा जलकणधारिणो हिता गाङ्गा गङ्गाभवाः सैन्यमार्गश्रमं प्रतिजवैर्विनिन्युः ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीछोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां प्रयाणनिरूपणो नाम चतुर्दशः सर्गः ।

---

पञ्चदशः सर्गः ।

अथ वनमनुकूलमङ्गनाभिः समलयजाङ्कपयोधरोचिताभिः ।
सह गतिमृजुमन्थरां गताभिः सरति यदूर्जितनायका विजह्रुः ॥ १ ॥

अथेति ॥ अथानन्तरम्, ऊर्जितनायका ऊर्जितानां बलिनां नायकाः स्वामिनः कपयः सुग्रीवादयो यद् वनम् अनुकूलमप्रतिकूलमनुतटं वा सरति सक्रीडम् [आसीत् । तत्र] समलयजां समेन लयेन 'लयः साम्यमुदाहृतम्' इति वचनात् साम्येन जाताम् ऋजुमन्थरामवक्रमन्दां गतिं गताभिर्धरोचिताभिर्धरायामुचिताभिः पृथ्वीमाणिक्यभूताभिरधरोचिताभिः सामुद्रिकलक्षणविशिष्टाधराभिरङ्गनाभिः सह विजह्रुर्विहृतवन्तः ॥ भारतीये—यदूर्जितनायका यदवश्च ते ऊर्जिता नायकाश्च यादवाः, समलयजाङ्कपयोधरोचिताभिर्मलयजन्यचिह्नसहितस्तनौ सुलक्षणौ यासां ताभिः, सरति सप्रीति यथा स्यात्तथा ॥ सर्गेऽस्मिन्पुष्पिताग्रावृत्तम् ॥

दिशि विदिशि परस्परं न दृष्टं विरचयता कुसुमोच्चयं जनेन ।
नच ददृशुररण्यजास्तदन्तं बहु किमु वेति निरूपितं न कैश्चित् ॥ २ ॥

दिशि वीति ॥ अरण्यजाः पुलिन्दादयस्तदन्तं वनमध्यं बहु किमु अल्पम् इति कैरपि न निरूपितम् ॥

पृथु विहितवता वनं विधात्रा चिरमुचितानुपभोग्यमेकयोग्यम् ।
ललितजनचितं कृतं कथंचित्परिहरतेव तदापदे श्रमं तम् ॥ ३ ॥

पृथ्विति ॥ चिरं बहुकालमुचितानुपभोग्यमुचितानां शिष्टानामनुपभोग्यमेकयोग्यमेकेषां क्रूरसत्त्वानां योग्यं पृथु विस्तीर्णं वनं विहितवता विधात्रा तदा तस्मिन्कालेऽपदेऽस्थाने तं श्रमं कथंचिन्महता कष्टेन परिहरता परित्याजयतेव इदं ललितजनचित्तं लडितं विलसितं जनानां चित्तं यत्र तद् वनं कृतम् ॥

प्रियमदइदमेतदित्यपूर्वं प्रति जनताग्रगमेन तृप्तुमैच्छत् ।
यदि परिचितसाम्यतोऽन्यतोऽपि प्रतिविरतोऽस्ति न कस्य निर्वृतिः स्यात्

प्रियेति ॥ जनता जनसमूहः, 'अदः प्रियम्,' 'इदं प्रियम्,' 'एतत् प्रियम्,' इत्येवंप्रकारे-

णापूर्वमदृष्टपूर्वं प्रति अग्रगमेन पुरोयानेन, तृप्तमात्मानं तर्पयितुमैच्छत्। यदि परिचितसाम्यतः परिचितमतिलक्षितं साम्यं यस्य ततः, अन्यतोऽन्यस्मादपि जनः प्रतिविरतो नास्ति। तदा कस्य निर्वृतिः सुखं स्यात्। न कस्यापि॥

कुसुममिषुचयो, गुणोऽलिमाला, मृदुविटपायतयष्टयो धनूंषि।
विविधमिदमनङ्गशस्त्रजातं सफलमभूच्चिरलक्ष्यदर्शनेन॥ ५॥

कुसुममिति॥ इदं पूर्वार्धोक्तं विविधमनङ्गशस्त्रजातं चिरलक्ष्यदर्शनेन बहुकालं वेध्यदर्शनेन सफलमथाभूत्॥

कलमलिकुलकोकिलाप्रलापं स्मरधनुरानकनादमाकलय्य।
दयितपरिगमेऽपि कातराणां धगिति कृतं हृदयेन कामुकीनाम्॥ ६॥

कलेति॥ कातराणां भीरूणां कामिनीनां कंदर्पदर्पकटाक्षितकामिनां हृदयेन दयितपरिगमे प्रियपरिरम्भेऽपि सति कलं मनोहरमलिकुलकोकिलाप्रलापमलिकुलस्य भ्रमरगणस्य कोकिलस्य आसमन्तात् प्रलापं स्मरधनुरानकनादं स्मरस्य धनुरानकयोर्नादमाकलय्य शङ्कित्वा धग् दग्धम् इति कृतम्॥

प्रणयकलहकैतवं प्रणामं शपथमसत्यमुपागमं विलज्जम्।
प्रतिमिथुनमिदं निरूप्य रेजे स्फुटदिव तत्सकलं हसेन पुष्पम्॥ ७॥

प्रणयेति॥ तत् सकलं पुष्पं कर्तृ प्रणयकलहकैतवं प्रणयकलहेन कैतवं दम्भो यत्र तं प्रणामं प्रणिपातम्, असत्यं शपथं प्रतिज्ञां, विलज्जं विगतलज्जमुपागममालिङ्गनम्, इदं कर्म, प्रतिमिथुनं मिथुनं मिथुनं प्रति, निरूप्यावलोक्य, हसेन हास्येन, स्फुटद् विकसदिव रेजे॥

अवचितकुसुमावशिष्टवृन्तं वनमबलाकृतिविस्मयेन हस्तम्।
विकसितमकृतेव तन्महान्तो ननु रुजतामपि सुग्रहा गुणेन॥ ८॥

अवेति॥ अवचितकुसुमावशिष्टवृन्तमवचितकुसुमैस्त्रोटितपुष्पैरवशिष्टमुज्झितं वृन्तं प्रसवबन्धनं यत्र तद्वनमबलाकृतिविस्मयेन कामिनीकायाद्भुतेन विकसितं हस्तमकृतेव। ननु महान्तो गुणेन रुजतामपि पीडाकर्तॄणामपि सुग्रहा भवन्ति॥

कथमपि नमयन्त्युपेत्य शाखां करयुगलेन लतान्तमुच्चिचीषुः।
स्तनकलशभरेण भग्नमध्या तरुमवलम्ब्य निषेदुषीव काचित्॥ ९॥

कथमिति॥ काचिल्लतान्तमुच्चिचीषुः शाखामुपेत्य कथमपि करयुगलेन नमयन्ती सती स्तनकलशभरेण भग्नमध्या इव तरुमवलम्ब्य निषेदुषी भाति॥

निकटसुलभमुद्गमं विहाय श्लथवलिनीवि विदूरगं ललङ्घे।
प्रथयितुमुदरं परा स्त्रिया हि प्रियतमविभ्रमगन्धनोऽन्यसङ्गः॥ १०॥

निकटेति॥ परा कामिनी निकटसुलभमुद्गमं पुष्पं विहाय विदूरगं पुष्पमुदरं प्रथयितुं

प्रकटयितुं श्लथवलिनीवि शिथिलवलिपरिधानवस्त्रग्रन्थि यथा स्यात्तथा विदूरगं यथा तथा लङ्के अतिक्रान्तवती। हि यतः—स्त्रिया अन्यसङ्गः प्रियतमविभ्रमगन्धनो वल्लभकटाक्ष-सूचको भवति ॥

सुरभि वितरितुं प्रसूनमेका सकृदधिपेन विपक्षनाम नीता।
कितव तव फलं तदस्तु लब्धं प्रियजनयेऽर्पय पुष्पमित्यकुप्यत् ॥ ११ ॥

सुरभीति ॥ अधिपेन स्वामिना सुरभिप्रसूनं पुष्पं वितरितुं सकृदेकवारं विपक्षनाम सपत्नीसंज्ञां नीता प्रापिता एका कामिनी 'हे कितव, तत् प्रसूनमस्तु तिष्ठतु, त्वं प्रियज-नये प्रियभार्यायै पुष्पमर्पय देहि, मया तव फलं लब्धम्' इति अकुप्यत् ॥

कुचयुगमतुलं कुतोऽस्य भारः किल भवतीति तुलाधिरोपणाय।
सह तुलयितुमात्मनोद्यतेव क्षणमपरा व्यलगीत्प्ररोहदोलाम् ॥ १२ ॥

कुचेति ॥ अपरा कामिनी, अस्य कुचयुगस्य कुतः कस्माद् भारो भवति इति हेतो-रात्मना सहातुलमनुपमं कुचयुग्मं तुलयितुं तुलाधिरोपणायोद्यतेव क्षणं प्ररोहदोलां व्य-लगीदारुरोह ॥

अवचनमधिशय्य मन्युनान्या पृथगधिपाद्विरचय्य पुष्पशय्याम्।
स्मरशरशयनस्थितेव दूना ननु विरहः प्रियगोचरोऽपि दीनः ॥ १३ ॥

अवचनमिति ॥ अन्या कान्ता, मन्युना क्रोधेनाधिपात् स्वामितः पृथक् पुष्पशय्यां विरचय्यावचनं संभोगगोचरचर्चारहितं यथा स्यात्तथाधिशय्य शयित्वा स्मरशरशयन-स्थिता कंदर्पमार्गणशय्यास्थितेव दूनाभवत्। ननु अहो विरहः प्रियगोचरोऽपि स-न्दीनो भवति ॥

व्रततिषु गहनासु कापि लीनं मृगयितुमीश्वरमाकुलं भ्रमन्ती।
करधृतलतिकाबलोपलब्धुं तमुदधृतेव मनोभवस्य शाखाम् ॥ १४ ॥

व्रतेति ॥ काप्यबला, गहनासु व्रततिषु, लीनमीश्वरं पतिं मृगयितुमवलोकयितुमा-कुलं यथा स्यात्तथा भ्रमन्ती सती, तमुपलब्धुं करधृतलतिका हस्तधृतवल्ली सती, मनोभ-वस्य मारस्य शाखामुदधृतेवोद्धृतिं नीतेव ॥

श्रवसि शिरसि कृत्स्नमुच्चयेऽपि स्मितहसितानुकृतीर्ष्यया क्षिपन्ती।
मुकुलमुदितमुद्गमं च सर्वस्वमपि वनस्य परोद्यतेव हर्तुम् ॥ १५ ॥

श्रवेति ॥ परा कामिनी, उच्चयेऽपि चोटनेऽपि स्मितहसितानुकृति स्मितहसितयोरनुकृ-तिर्यत्रेति स्मितानुकारि कृत्स्नं मुकुलं कलिकां श्रवसि श्रोत्रे, हसितानुकारि कृत्स्नम् उदितं निर्गतमुद्गमं शिरसि ईर्ष्यया क्षिपन्ती सती वनस्य सर्वस्वमपि हर्तुमुद्यतेव भाति ॥

इति चपलविलासिनीविहारैर्विलुलितमुद्गतकर्णिकारकोशम्।
प्रशमयितुमुपप्लवं वधूभ्यो मुकुलितहस्तमिवावभावरण्यम् ॥ १६ ॥

इतीति ॥ इत्येवंप्रकारेण चपलविलासिनीविहारैर्विलुलितमुपद्रुतमुद्गतकर्णिकारकोशं निर्गतकर्णिकारकर्णिकमरण्यमुपप्लवमुपद्रवं प्रशमयितुं वधूभ्यो मुकुलितहस्तमिवाबभौ ॥

स्थलकमलपरागपिञ्जराभः परिचितवांश्च नदीनवार्जवं यः।
श्रममभिभवति स कामिनीनां विधुतमयूरशिखः स मातरिश्वा ॥१७॥

स्थलेति ॥ यो नदीनवार्जवं नदीनामिनस्य समुद्रस्य वारि जले जवं वेगं परिचितवान् स स्थलकमलपरागपिञ्जराभः स्थलकंजकिंजल्ककर्बुरकान्तिर्मातरिश्वा वायुर्विधुतमयूरशिखः प्रकम्पितकलापिशिखः सन् कामिनीनां श्रममभिभवति स्म ॥ भारतीये—नद्या गङ्गाया नवमार्जवं प्राञ्जलत्वम् ॥

क्षुपविपिनलतान्तरे जनानामिति सुरतव्यवहारवृत्तिरासीत्।
ननु दयितपरस्परानिकारव्यवहरणं भुवि जीवितव्यमाहुः ॥ १८ ॥

क्षुपेति ॥ जनानां क्षुपविपिनलतान्तरे क्षुपाणां ह्रस्वशाखशाखिनां विपिनलतानां वनकन्दलिनीनामन्तरे इति वक्ष्यमाणप्रकारेण सुरतव्यवहारवृत्तिरासीत्। ननु अहो भुवि दयितपरस्परानिकारव्यवहरणं दयितयोः परस्परमनिकारेणाप्रतारणेन व्यवहरणं जीवितव्यमाहुर्विद्वांसः ॥

परिषजति परस्परं समेत्य प्रतिमिथुने कुचमण्डलं बबाधे।
भजति हि निजकर्कशं न पीडा कमपरमध्यगतापवारकं वा ॥ १९ ॥

परीति ॥ प्रतिमिथुने समेत्य परस्परं परिषजत्यालिङ्गति सति, कुचमण्डलं बबाधे पीडामाप। हि यतः पीडा अपरमध्यगतापवारकमपरयोः शत्र्वोर्मध्यगतमपवारकं शत्रुं निजकर्कशमात्मना कठिनं कं जनं न भजते। अपि तु सर्वमेव ॥

उदधमदिव तत्पराभिमर्शादधरयुगं व्यतिचुम्बितं स्वमङ्गम्।
अधरितगतयो गृहीतमुक्ताः समुपचिता हि सह व्रणैः स्फुरन्ति ॥२०॥

उदधेति ॥ तत्पराभिमर्शात् प्रतिमिथुनपराभिमर्शाद् व्यतिचुम्बितमन्योन्यवक्त्रसंयोगीकृतमधरयुगं कर्तृ स्वमात्मीयमङ्गमुदधमदिव। हि युक्तम्, अधरितगतयो हीनीभूतगतयो गृहीतमुक्ताः पूर्वं गृहीताः पश्चान्मुक्ता व्रणैः समुपचिताः संभृताः सह युगपत् स्फुरन्ति। अधरौ तु स्वयमेवाधरौ, अतो नायुक्तस्तत्र व्रणप्रादुर्भाव इत्याकूतम् ॥

परभृतशुकसारिकाविरावाः सममबलासुरतारवं तिरोऽधुः।
अपि चरितमवाच्यमन्यदीयं रहयति पक्षिगणो न किमनुष्यः ॥ २१॥

परेति ॥ परभृतशुकसारिकाविरावाः कोकिलकीरसारिकाणां विरावा अबलासुरतारवं मुग्धानिधुवनध्वनिं तिरोऽधुस्तिरोहितवन्तः। अपि आश्चर्ये। पक्षिगणोऽप्यन्यदीयमवाच्यं चरितं रहयति तर्हि मनुष्यः किं न रहयति। पक्षिशब्दे कुलवाचकात्पक्षशब्दात्प्रशंसायामिनिः, तेन प्रशस्तान्वयः पुरुषो रहयति, न कापुरुषः इत्याकूतम् ॥

प्रशमय रुषितं प्रिये प्रसीद प्रणयजमप्यहमुत्सहे न कोपम्।
तव विमुखतयाधिरूढचापे मनसिशये कुपिते कुतः प्रसादः॥ २२॥
मम यदि युवतिं विशङ्कसेऽन्यां श्वसिमि तव श्वसितैर्मृषान्ययोगः।
भवतु मनसि संशयस्त्वमैक्यात्प्रविभजसे त्वयि जीवितं कथं मे॥२३॥
न पुनरिदमहं करोमि जीवन्निति शपथेऽधिकृते पुरा कृतं स्यात्।
त्यज कुपितमितीरिते नु सत्यं कुपितवती भवसीव तन्नजाने॥ २४॥
बहुतिथमवलोक्य नाथमानं कलयसि सत्यमिमं कृतापराधम्।
अनुदितवचनं नवप्रियं मां गणयसि गर्वितमन्यवारितं वा॥ २५॥
शिथिलय हृदयं न मेऽनुरागं विसृज विषादमिमं न तन्वि वाक्यम्।
इति दयितमुपागमैकदैन्यं स्वयमबलाभिगतं कथंचिदैच्छत्॥ २६॥

प्रशमयेत्यादि॥ अबला कामिनी 'हे प्रिये, त्वं प्रसीद, रुषितं प्रशमय, अहं प्रणयजमपि कोपं नोत्सहे, तव विमुखतया कुपितेऽधिरूढचापे प्रत्यञ्चितकोदण्डे मनसिशये कंदर्पे सति प्रसादः कुतः, यदि ममान्यां युवतिं विशङ्कसे (अयम्) अन्ययोगोऽन्यस्यायोगो मृषा मिथ्या, (यतोऽहं) तव श्वसितैः प्राणैः श्वसिमि प्राणिमि, तव मनसि संशयः कथं भवतु त्वं त्वयि स्थितं मे जीवितमैक्यात् कथं प्रविभजसे पृथक्करोषि, अहं जीवन् पुनरिदं न करिष्यामि' इति पुरा शपथेऽधिकृते सति (यदि) कृतं स्यात् (तर्ह्यपि) कुपितं त्यज' इतीरिते कथितेऽपि नु अहो सत्यं भवती कुपितवती भवसीव तदहं न जाने, बहुतिथं बहुप्रकारं नाथमानं याचमानमिमं जनं सत्यं कृतापराधं कलयसि, अनुदितवचनमनुक्तवाक्यं मां नवप्रियं गर्वितमभिमानिनम्, अथवा अन्यवारितम् अन्यथा निषिद्धं गणयसि (एतेनोक्तावनुक्तौ वा दोषः) हे तन्वि, हृदयमाकोपवच्चेतः शिथिलय मा दृढं विधाः, मे मम अनुरागं प्रीतिं न शिथिलय दृढां विधेहि, इमं विषादं विसृज, वाक्यं न विसृज, इत्येवंप्रकारेण उपागमैकदैन्यमुपागमायालिङ्गनायैकं दैन्यं यस्य तम्। 'दौत्यम्' इति पाठेऽप्यर्थः स्फुटः। स्वयमात्मनैव अभिगतं प्राप्तं दयितं प्रियं कथंचिन्महाकष्टेन ऐच्छत् स्वीकृतवती॥

तरलयसि दृशं किमन्यचेता, दृतिरिव लोहकृतां किमुष्णमुष्णम्।
श्वसिषि, किमिदमुत्रसस्यपैतु, किमिव भयं, वद का मनःप्रिया ते २७
अलस इव, गतं कुतोऽपि चित्तं मृगयितुमिच्छुरिवोद्भ्रमन्निव त्वम्।
किमसि किमपराकृतिं प्रपन्नस्तव चपलस्य मनोगतं न वेद्मि॥ २८॥
किमतिविपिनमन्तरे नदी वा तव गिरिदुर्गमुतास्ति योपितो वा।
यदनवरतचिन्तयासि खिन्नो ननु च तथासति किंनु वल्लभत्वम्॥२९॥

मधुरमभिहितो न भाषते मां न खलु भवानभिचुम्बितः प्रणिंस्ते ।
नच परिरभसे कृतोपगूढः पटलिखितः स्विदपेक्षते न दृष्टः ॥ ३० ॥
इति किमपि विकोपितास्तरुण्यः किल तरुणान्विनियम्य काञ्चिदाम्ना ।
कलवलयरवं विशीर्णसूत्रं कुसुमगुणैरवताडयांबभूवुः ॥ ३१ ॥

तरलयेत्यादि ॥ तरुण्यः । त्वं किमन्यचेता दृष्टिं तरलयसि, लोहकृतां दृतिर्भस्त्रेव उष्णमुष्णं किं श्वसिषि, इदं किमपैतुमपसर्तुमुत्त्रस्यसि उद्विजसे, किं भयमिव वर्तते, ते तव मनःप्रिया केति वद, भवान् अलस इव कुतो भवसि, कुतोऽपि कारणात् गतं नष्टं चित्तं मृगयितुमवलोकयितुमिच्छुरिव किमसि, उत्क्रमन् मुह्यन्निव किमसि, किमपराकृतिमन्याकारं प्रपन्नोऽसि, चपलस्य तव मनोगतं न वेद्मि, तव योषितश्च अन्तरे मध्ये किमतिविपिनमरण्यानी वाथवा नदी, उत गिरिदुर्गमस्ति किम् । यद्यस्मात्कारणादनवरतचिन्तया सततस्मरणेन खिन्नोऽसि, ननु अहो तथासति वल्लभत्वं प्रियत्वं किंनु । मधुरं प्रियमभिहित उक्तो भवान् मां न भाषते, खलु निश्चये अभिचुम्बितोऽपि भवान् न प्रणिंस्ते चुम्बति, कृतोपगूढः कृतालिङ्गनोऽपि न परिरभसे नालिङ्गसि, स्विदथवा पटलिखित इव दृष्टो भवान् न अपेक्षते नाङ्गीकरोति, इत्येवंप्रकारेण किमपि विकोपिताः सत्यः तरुणान् प्रियान् काञ्चिदाम्ना एकयष्ट्यात्मककटिसूत्रेण विनियम्य बन्धयित्वा, कुसुमगुणैः पुष्पसूत्ररज्जुभिः, कलवलयरवं मन्द्रकंकणध्वनि यथा स्यात्तथा विशीर्णसूत्रं यथा स्यात्तथा अवताडयांबभूवुः समन्ततस्ताडितवत्यः ॥

कुपितमवचनं शिरःप्रणामः शपथमयः प्रणयः कृतोपचारः ।
इदमद इति गोचरो न वाचां प्रतिदयितं बहु कैतवं बभूव ॥ ३२ ॥

कुपितेति ॥ प्रतिदयितं दयितं दयितं प्रति, कुपितं कोपः, अवचनं वचनराहित्यम्, शिरःप्रणामः शिरसा प्रणिपातः शपथमयो मातापित्रादिमरणनिर्देशघटितप्रतिज्ञाप्रचुरः, प्रणयः स्नेहः कृतोपचारः कृत उपचारो यत्र तादृक्, इत्येवमादिप्रकारेण बहु बहुविधं कैतवं कर्तृ इदम्, अद इत्येवंप्रकारेण वाचां वचनानां गोचरो विषयो न बभूव ॥

इति वनमभितो विहृत्य खेदादगुरुचितायति साधुनीपयोगात् ।
समकररुचिरक्षतां हरीणां प्रियजनता रतये समुद्रवेलाम् ॥ ३३ ॥

इतीति ॥ हरीणां सुग्रीवादीनां प्रियजनताः प्रिया जनसमूहाः साधुनीपयोगात् साधूनां फलपुष्पपल्लवैर्मनोहराणां नीपानां कदम्बवृक्षाणां योगात्संबन्धाद् उचितायति उचिता योग्या आयतिर्दैर्घ्यं यस्य तादृग्, वनम्, अभितः सामस्त्येन विहृत्य खेदाच्छ्रमात् श्रमं संत्यज्य रतये क्रीडायै समकररुचिरक्षतां मकराणां रुचिराणाम् 'रुचिरं कुसुमं ज्ञेयं रुचिरं रुधिरं तथा । रुचिरः शफरः प्रोक्तो रुचिरं पेशलं मतम् ॥' इति जयाभिधानोक्तेः शफराणां क्षतेन सहितां समुद्रवेलां सागरवेलाम्, अगुः ॥ भारतीये—अगुरुचितायति अगुरु-

भिर्वृक्षविशेषैश्रिता आयतिर्दैर्घ्यं यत्र तादृग् वनम् । इलां पृथ्वीं समकररुचि समो हानिवृद्धिरहितः करः सिद्धायो यस्यां तादृग् रुचिर्यस्मिंस्तादृग् यथा स्यात्तथा रक्षतां हरीणां यादवानां समुद्रवा समुत् सा प्रियजनता सहर्षो रवो यस्यां सा हर्षरवेण सहिता वा रतये धुनीपयो गङ्गाम्भोऽगात् ॥

पयसि भयमवेत्य योषितां दयितजनोऽभवदग्रतः सरः ।
कृतपनियतविक्रमाः स्त्रियः क न विधुरे पुरुषः पुरःसरः ॥ ३४ ॥

पयसीति ॥ दयितजनो योषितां पयसि भयमवेत्य ज्ञात्वा अग्रतः सरोऽग्रेसरः अभवत् । स्त्रियः कृतपनियतविक्रमा उदुम्बरकनियमितचरणा भवन्ति । पुरुषो विधुरे वैकल्ये सति क पुरःसरो न भवति ॥

प्रणिपतदिव वारि पादयोस्त्रसदवलग्नमिवापि जङ्घयोः ।
शिथिलयदिव लोलमंशुकं प्रिय इव चाटुमुपानयद्वधूः ॥ ३५ ॥

प्रणिपतेति ॥ वारि जलं पादयोश्चरणयोः प्रणिपतदिव, जङ्घयोरवलग्नमपि त्रसद्बिभ्यदिव, लोलमंशुकं शिथिलयदिव प्रिय इव वधूः कामिनीः चाटुं चाटुकारमुपानयत् प्रापयत् ॥

तुलितरसनमौपनीविकं वलिभमिवाम्बु बभूव नाभिगम् ।
त्रिवलिषु पुनरुक्तवीचिकं बहुभवमेत्यबलावसङ्गतः ॥ ३६ ॥

तुलितेति ॥ अम्बु जलमौपनीविकं नीविसमीपगं सत् तुलितरसनं तुलिता रसना 'एकयष्टिर्भवेत्काञ्ची, मेखला मुखसंयुता । रसना सर्वरत्नाङ्गा करोति कटिसूत्रकम् ॥' इत्युक्तलक्षणं कटिसूत्रं येन तादृग्, नाभिगं सत् वलिभं वलिभूषणमिव, पुनरुक्तवीचिकं द्विगुणिततरङ्गकं सत् त्रिवलिषु वलित्रये बभूव । हि यतः अबलावसङ्गतः कामिनीसंयोगतो बहुभवमनेकधा संसृतिमेति प्राप्नोति ॥

अभिमुखमवलम्बितोऽम्बुना निचितकुचद्वयसं प्रियाजनः ।
स्तनजघनभरेण पीडितः स्फटिकमयीमिव भित्तिमाश्रितः ॥ ३७ ॥

अभीति ॥ अम्बुना जलेन स्तनजघनभरेण पीडितः, स्फटिकमयीं स्फटिकानिर्मितां भित्तिमाश्रित इव प्रियाजनोऽभिमुखं संमुखं यथा स्यात्तथा निचितकुचद्वयसं संभृतस्तनप्रमाणं यथा स्यात्तथावलम्बितः ॥

परिचितमभिगम्य लीलया कुचभुजयोर्विशतान्तरं मिथः ।
परिषजदिव योषितो जलं चलवलिबाहुयुगेन निर्बभौ ॥ ३८ ॥

परीति ॥ जलं लीलयानायासेनाभिगम्य परिचितं संस्तुतं कुचभुजयोरन्तरं विशता चलवलिबाहुयुगेन तरलतरङ्गभुजद्वयेन योषितः कामिनीः परिषजदालिङ्गदिव निर्बभौ ॥

अधिजलमधिकुङ्कुमं बभौ करधृतमङ्गनया स्तनद्वयम् ।
कनककलशयुग्ममम्भसि स्मरमभिषेक्तुमिवावतारितम् ॥ ३९ ॥

अधीति ॥ अङ्गनया करधृतं हस्ते धृतमधिकुङ्कुमं प्रचुरकुङ्कुमचर्चितं स्तनद्वयं कुचयुगमधिजलं जलमध्ये । स्मरमभिषेक्तुमम्भस्यवतारितं कनककलशयुग्ममिव । बभौ ॥

करतलपिहितं प्रियाननं प्रियमृदुसिक्तविषक्तशीकरम् ।
मुकुलितमिव पद्ममुल्लसद्विरलतुषारजलं व्यराजत ॥ ४० ॥

करतेति ॥ प्रियमृदुसिक्तविषक्तशीकरं प्रियेण मृदु यथा स्यात्तथा पूर्वं सिक्ता पश्चाद्विषक्ताः शीकरा जलकणा यत्र तत् करतलपिहितं हस्ततलप्रच्छादितं प्रियाननं कान्ताननम् । उल्लसद्विरलतुषारजलं मुकुलितं पद्ममिव । व्यराजत ॥

निचितमलकमल्पमौक्तिकग्रथितमिवाम्बुकणैर्नतभ्रुवः ।
नयनबहलपक्ष्म चारुचत्प्रणयजबाष्पविशङ्कितप्रियम् ॥ ४१ ॥

निचितेति ॥ नतभ्रुवो निचितं संभृतमलकमम्बुकणैरल्पमौक्तिकग्रथितमिव च पुनर्नयनबहलपक्ष्म प्रणयजबाष्पविशङ्कितप्रियं स्नेहोद्भवाश्रु विशङ्कितवल्लभं सदरुचद् बभौ ॥

किमु विलुलितकुङ्कुमावलि किमधिकुचं नखरक्षतं नवम् ।
विमतिरिति विपक्षसेवनेन च कुपितोऽकुपितोऽबलाजनः ॥ ४२ ॥

किमिति ॥ अबलाजनोऽकुपितोऽप्यधिकुचं कुचयोरुपरि विलुलितकुङ्कुमावलि किमु, तथा नवं नखरक्षतं किम् इति विमतिः शङ्कितमना विपक्षसेवनेन कुपितोऽभूत् ॥

सपदि न तदवेयुषी वधूरधिदयितायतबाहु विप्लुता ।
रमणसलिलयोः किमीयतः पुलकितमङ्गमिति प्रसङ्गतः ॥ ४३ ॥

सपदीति ॥ वधूरधिदयितायतबाहु दयितस्यायतबाहोरुपरि विप्लुता तरन्ती सती सपदि शीघ्रं रमणसलिलयोर्मध्ये किमीयतः कस्य प्रसङ्गतस्तदङ्गं पुलकितमिति नावेयुषी ज्ञातवती ॥

परिहृपितमुखं कुचद्वयं दधदधरेऽपि बभूव पाण्डुता ।
श्लथितमथ विलेपनाञ्जनं निधुवनमन्वहरज्जलप्लवः ॥ ४४ ॥

परीति ॥ कुचद्वयं परिहृपितमुखं रोमाञ्चकञ्चुकिताननं दधदास्ति, अधरेऽपि पाण्डुता ताम्बूलविरहो बभूव, विलेपनाञ्जनं श्लथं शिथिलं जातम् । तथा च जलप्लवो जलतरणं निधुवनं सुरतमन्वहरदन्वकरोत् ॥

जलपरिचयैरुत्सूत्रत्वं गतः परिघट्टितः
शिथिलितगुणो मुक्ताहारोऽप्यधोगतिमागतः ।

चटुललनाकण्ठासक्तेष्वहो किमु संयमः
किमनशनतावासस्तेषां ध्रुवं विलयः पुनः ॥ ४५ ॥

जलेति ॥ जलपरिचयैर्वार्यनुशीलनैः । डलयोरभेदात् । जडानामज्ञाततत्त्वानां परिचयैः संसर्गैर्वा । परिघट्टितो विलुलितः, स्ववासनावासितश्च । अत एव शिथिलितगुणः श्लथितडवरकः, गलितज्ञानाभ्यासश्च । अत एव उत्सूत्रत्वं सूत्रस्यूतत्वाभावम्, शास्त्राभावं वा । गतः प्राप्तः । मुक्ताहारो मौक्तिकमाला, मुक्त आहारो येन तादृक्तपस्वी वा । अधोगतिं नीचैर्देशपतनं नरकं वा । युक्तमेतत् । अहो चटुललनाकण्ठासक्तेषु चपलाङ्गनागलालिङ्गनरसिकेषु संयमो नियन्त्रणम्, आजन्मव्रतपरिग्रहो वा । किं स्यात् । अपि तु न । तेषां चपलाङ्गनागलालिङ्गकानां किम् । अनशनतावासो न नशनताया अदर्शनताया वासः, अर्थात्स्थावरत्वम् । अनशनता भ्रष्टाहारः वासो वस्त्रं च । संभाव्यते । अपि तु ध्रुवं निश्चयेन पुनर्विलयो नाशः संसारसंसरणं वा भवति ॥ हरिणीवृत्तम् ॥

कान्तोन्नतस्तननितम्बनिपीडनेन
प्राप्तं प्रवक्तुमिव भोगमगादगाधम् ।
मध्येजलं तटजलं जलवृत्तयोऽल्पे
धावन्ति हि श्रियमुदीरयितुं महद्भ्यः ॥ ४६ ॥

कान्तेति ॥ तटजलं कर्तृ, अगाधं मध्येजलं कर्म, कान्तोन्नतस्तननितम्बनिपीडनेन प्रियाया उन्नतस्तननितम्बजन्यपीडया, प्राप्तं भोगं वक्तुमिव, अगात् । हि यतः अल्पे स्तोकास्तुच्छा वा, जलवृत्तयः स्वच्छवृत्तयः जडवृत्तयः मूर्खा वा, महद्भ्यः सत्पुरुषेभ्यो महाजडेभ्यो वा, श्रियमुदीरयितुं धावन्ति ॥ वसन्ततिलका वृत्तम् ॥

मध्यस्थवृत्तमपि वञ्चति नन्वगाधं
लोको दुरन्तमपि गच्छति गाहनीयम् ।
यद्गुल्फजानुजघनस्तनदघ्नमेव
स्त्रैणं समागममयान्न पयो गभीरम् ॥ ४७ ॥

मध्येति ॥ ननु अहो लोको जनोऽगाधमतलस्पर्शि, गभीराशयं वा। मध्यस्थवृत्तं मध्यस्थं वृत्तम्, मध्यस्थानां वृत्तं वा । वञ्चति त्यजति । दुरन्तं दुष्टमन्तं यस्य तद् दुष्टस्वरूपं वा गाहनीयं वृत्तं गच्छति । यद् यस्मात्कारणाद् गुल्फजानुजघनस्तनदघ्नमेव पयो नीरं स्त्रैणं स्त्रीसंबन्धिनं समागममयात् । न गभीरं पय इति ॥

स्रस्ताः स्रजः शिथिलितानि विलेपनानि
संदर्शितानि च विपक्षनखक्षतानि ।

इत्यात्मदोषचकिता इव वेपमाना
वेला वधूभिरभवन्क्षणदृष्टनष्टाः ॥ ४८ ॥

स्रस्ता इति ॥ इत्येवंप्रकारेणात्मदोषचकिताः स्वकीयापराधभीता इव वेपमानाः कम्पमाना वेला वधूभिः क्षणदृष्टनष्टाः क्षणं पूर्वं दृष्टा पश्चान्नष्टा अभवन् ॥

तथा वेषं तेषां कुसुमरचितं कुङ्कुमचितं
दधानोदाराणां दिशिदिशि जनानां प्रियतमम् ।
चिरं चक्रे शङ्कामिव हृदि परासङ्गजननीं
नदीवाहो वेला त्वरितगतिरीशस्य सरिताम् ॥ ४९ ॥

तथेति ॥ तथा तेनैव प्रकारेण कुसुमरचितं कुङ्कुमचितं प्रियतमं वेषमलंकारं दधाना धरन्ती, सरितामीशस्य पत्युः समुद्रस्य वेला । त्वरितगतिस्त्वरिता गतिर्यस्यास्तादृग् नदीव उदाराणां तेषां जनानां हृदि परासङ्गजननीं परेषामासङ्गं जनयति तां शङ्कामिव । अहो आश्चर्ये चक्रे कृतवती ॥ भारतीये—वेषं दधानस्त्वरितगतिस्त्वरिता गतिर्यस्य सः, नदीवाहो गङ्गाप्रवाहः, वेलेव दाराणां स्त्रीणाम् । जनानां च ॥ शिखरिणी ॥

पुष्पं प्रवालमखिलं स्ववनस्य कोपा-
त्सर्वस्वमाहृतमुपाहरतीव भूयः ।
भूपा विहृत्य पयसि द्रुतमित्यपेयुः
के वान्यदुत्सुकधियोऽन्यधनं जयन्तः ॥ ५० ॥

इति धनंजयकविविरचिते राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये धनंजयाङ्के जलक्रीडावर्णनं नाम पञ्चदशः सर्गः समाप्तः ।

पुष्पमिति ॥ भूपा राजानः पयसि स्ववनस्य स्वारण्यस्याहृतं भूपैरानीतं पुष्पं प्रवालमखिलं सर्वस्वं कोपादुपाहरत्याददतीव सति इति पूर्वोक्तप्रकारेण विहृत्य क्रीडित्वा द्रुतं शीघ्रमपेयुर्निःसृतवन्तः । अन्यधनं जयतोऽन्यदुत्सुकधियोऽप्यस्मिन्नुत्सुका धीर्येषां तादृशः के भवन्ति । न केऽपीत्यर्थः । रावणजरासंधधनं जेतुमागता न वनधनं जिगीषन्तीति भावः । वसन्ततिलकावृत्तम् ॥

इति श्रीदाधीचजातिकुद्दालोपनामकश्रीछोटीलालात्मजश्रीबदरीनाथविरचितायां द्विसंधानकाव्यटीकायां कुसुमावचयजलक्रीडानिरूपणो नाम पञ्चदशः सर्गः ।

---

## षोडशः सर्गः ।

ततः समीपे नवमस्य विष्णोः श्रुत्वा बलं संभ्रमदष्टमस्य ।
क्रुधा दशन्नोष्ठमरिं मनःस्थं गाढं जिघत्सन्निव संनिगृह्य ॥ १ ॥

तद्दंशभीताधररागसङ्गादिवारुणाक्षस्तदुपाश्रयेण ।
पिङ्गयोर्भ्रुवोरुद्गतधूमराजिर्नभ्राडिवेन्द्रायुधमध्यकेतुः ॥ २ ॥
हस्तं कृपाणे हृदयं स्थिरत्वे दृष्टिं सपत्ने च समादधानः ।
सदात्मतन्त्रोऽप्युदितस्य मन्योरालुच्यमानाङ्ग इव स्यदेन ॥ ३ ॥
अलङ्घितव्योमगधार्यभूमिं प्रियामिवाशंसुरयं स राजा ।
चित्तेनलङ्कामवशात्प्रकोपव्याजं वहन्राजगृहान्निरैयः ॥ ४ ॥ (कुलकम्)

तत इत्यादि ॥ ततो राघवपाण्डवबलप्राप्त्यनन्तरं सोऽयं राजा रावणो नवमस्य नवा मा लक्ष्मीर्यस्य। पूरणार्थान्तत्वेन विरोधः। अष्टमस्याष्टानां पूरणस्य विष्णोर्लक्ष्मणस्य समीपे संभ्रमद् विचरत् नवं वा बलं श्रुत्वा क्रुधा कोपेनौष्ठं दशन् मनःस्थमरिं गाढमत्यर्थं संनिगृह्य निपीड्य जिघत्सन्नत्तुमिच्छन्निव तद्दंशभीताधररागसङ्गाद् तस्य दंशाद्दंशनाद् भीतस्याधरे रागस्य सङ्गादिवारुणाक्षो अरुणे अक्षिणी यस्य तादृक्, तदुपाश्रयेण तयोरक्ष्णोरुपाश्रयेण पिङ्गयोः पिङ्गलवर्णयोर्भ्रुवोर्मध्ये, इन्द्रायुधमध्यकेतुरिन्द्रायुधस्य मध्ये केतुर्यस्य तादृक्, नभ्राण् मेघ इवोद्गतधूमराजिः समुत्पन्ना धूमश्रेणिर्यस्य तादृक्, कृपाणे हस्तं स्थिरत्वे स्थैर्ये हृदयं सपत्ने शत्रौ दृष्टिं समादधानः, सदा आत्मतन्त्रः स्वतन्त्रोऽपि सन्नुदितस्य मन्योः क्रोधस्य स्यदेन जवेन आलुच्यमानाङ्ग इव, अलङ्घितव्योमगधार्यभूमिम् अलङ्घितैरजेयैर्व्योमगैः खेचरै राक्षसैर्धार्या रक्षणीया भूमिर्यस्यास्तां लङ्कां चित्तेन प्रियामिवाशंसुः प्रशसन्, अवशात्पारतन्त्र्यात् प्रकोपव्याजं वहन् सन् राजगृहाद् राजमन्दिरात् निरैयः निर्गतवान् ॥ भारतीये—सोऽयं राजा जरासंधः, अस्य नवमस्य नवसंख्यापूरणस्य विष्णोर्नारायणस्य संभ्रमदष्टं संभ्रमग्रस्तं बलम् । अलङ्घितव्योऽजय्यः । मगधार्यभूमिं बन्दिस्वामिस्थितिं प्रियां प्रीतिविषयाम् आशंसुरिव, कामवशात् प्रकोपव्याजम् अनलं वह्निं चित्ते वहन् । सर्गेऽस्मिन्वृत्तमुपजातिः ॥

समागधैर्योऽनुगतः सहायैरक्षोदवैराकुलिताखिलाशः ।
रणाजिरं विश्वजगद्विनाशं यमः स्वयं कर्तुमिवावतीर्णः ॥ ५ ॥

समागेति ॥ समागधैर्यो मां लक्ष्मीं गच्छता धैर्येण सहितो रक्षोदवै राक्षसदावानलैः सहायैरनुगत आकुलिताखिलाशो व्यग्रीकृतसमस्तदिग्, रणाजिरं सङ्ग्रामभूमिम्। विश्वजगद्विनाशं कर्तुम् इव । स्वयमात्मना यमः काल इव । अवतीर्णः ॥ भारतीये—यो मागधैर्बन्दिजनैः सहायैर्मित्रैश्चानुगतः, स जरासंधः अक्षोदवैराकुलिताशो न क्षोदो यस्य तेन वैरेण आकुलिता अखिलानामाशा वाञ्छा येन सः। यद्वा आन्नारायणात् क्षोदो यस्य तेन वीरसमूहेन आकुलिता आखिलाशाः समस्ताभिलाषा यस्य सः ॥

सङ्ग्रामरङ्गं शवनृत्यरम्यं सुराः समागच्छत पश्यतेति ।
निमन्त्रणायेव निकाय्यमेषामापूर्य तूर्यं विरुतं विचक्रे ॥ ६ ॥

सङ्ग्रामेति ॥ निकाय्यं निलयम् ॥

शुद्धं निसर्गेण कलङ्कबद्धमङ्गं म्रदीयः कठिनं मनः स्वम् ।
बहिस्तदन्तर्युधि कुर्वतीव भ्रेजे नृपाणां समितिः सवर्मा ॥ ७ ॥

शुद्धमिति ॥ सवर्मा सकवचा, नृपाणां समितिः समूहो, युधि निसर्गेण स्वभावेन शुद्धं निर्मलं म्रदीयो मृदुतरं स्वमात्मीयं बहिर्बहिःस्थितमङ्गम्, अन्तरन्तर्गतम्, अन्तरन्तर्गतं स्वं मनो निसर्गेण कलङ्कबद्धं पापबद्धं कठिनं कठोरं बहिर्बहिर्गतम्, कुर्वतीव भ्रेजे । बाह्ये शरीराभावं मनश्च कुर्वतां प्रहारे पीडाभावः सूच्यते ॥

रथो वरूथस्य, हयस्य वाजी, गजः करेणोः, पदिकः पदातेः, ।
दुर्मन्त्रितं ध्यानमिवात्मबिम्बं स्वस्यैव संनद्धमिवाग्रतोऽभूत् ॥ ८ ॥

रथाविति ॥ दुर्मन्त्रितं दुष्टो मन्त्रः संजातोऽस्य तद्ध्यानम् इव स्वस्यैवात्मबिम्बम्, इव संनद्धं यथा स्यात्तथा तस्य तस्याग्रजः ससोऽभूत् ॥

राज्ञां सरेणुः कलुषस्वभावो रोषोद्गतश्वास इवाशु मूर्तः ।
सेने निषेधन्निव मध्यमापत्प्रायः क्षतं नेच्छति पांशुलोऽपि ॥ ९ ॥

राज्ञामिति ॥ कलुषस्वभावो मलरूपः स सारोद्गतो रेणू रजः । कलुषस्वभावः पापमयो, मूर्तो राज्ञां रोषोद्गतश्वास इव । सेने निषेधन्निव आशु मध्यमापत् । प्रायः पांशुलोऽपि क्षतं नेच्छति ॥

साक्षादलङ्घ्यो दिवसो नु सोऽयं सृष्टेरियत्तावधिरेष कश्चित् ।
आशाः समूहन्निव राजलोकः संनह्यति स्म प्रतिकेशवस्य ॥ १० ॥

साक्षादिति ॥ प्रतिकेशवस्य प्रतिलक्ष्मणस्य प्रतिनारायणस्य राजलोकः 'सोऽयं सृष्टेः संसारस्य इयत्तावधिः, एष कश्चित् साक्षादलङ्घ्यो दिवसः, अहो प्राप्तः इति आशा दिशः समूहन् वितर्कयन्निव' संनह्यति स्म ॥

तमूर्जसारावणिमव्यपेतौ दुर्योधनं क्रोधपराक्रमौ तौ ।
दृष्ट्वा दधानं पुलकात्तमङ्गं रागेण भीत्याप्यभवद्ध्वजिन्यः ॥ ११ ॥

तमिति ॥ ध्वजिन्योः सेनयोरङ्गमूर्जसा बलेन, अव्यपेतावपरित्यक्तौ तौ लोकोत्तरौ क्रोधपराक्रमौ दधानं दुर्योधनं दुःखेन योद्धुं शक्यम्, तं रावणिमिन्द्राजितं दृष्ट्वा रागेण भीत्यापि पुलकात्तं रोमाञ्चितमभवत् ॥ भारतीये—अरौ शत्रावणिमव्यपेतावणिम्ना व्यपेतौ प्राचुर्ययुक्तौ क्रोधपराक्रमौ दधानं दुर्योधनं पाण्डवविपक्षं राजानम् ॥

नमस्यया संप्रति कुम्भकर्णे बलिं नवं संयुगभूतकेभ्यः ।
प्रदातुमुद्यन्तमिवारिरूपं दुःशासनं वीक्ष्य जनश्चकम्पे ॥ १२ ॥

नमेति ॥ जनः 'संयुगभूतकेभ्यो नमस्यया नमश्चिकीर्षया नवं बलिं प्रदातुमुद्यन्तमिव ।

दुःशासनं तीव्राङ्गमरिरूपं शत्रुरूपम् । बलेर्वा विशेषणम् । कुम्भकर्णं रावणानुजं वीक्ष्य संप्रति तत्कालं चकम्पे ॥ भारतीये—कुम्भकर्णं कुम्भको गज ऋणं यस्य कुम्भकस्वामिनं दुःशासनं दुर्योधनानुजम् ॥

न कानिकुम्भासुरभावमाजौ दुर्मर्षणं दूरमभिद्रवन्तम् ।
रुषात्मशङ्कामगमन्निरीक्ष्य प्रजातमुच्चैर्भुवना नितान्तम् ॥१३॥ (त्र्यर्थः)

नेति ॥ का उच्चैर्भुवना प्रजा रुषा दुर्मर्षणं दुःसहं दूरमभिद्रवं दूरमान् दुःखेन रममाणान् भिन्दन् रवो यस्य तम्, आजौ आतम् आ समन्तत आतः अतनं सातत्यगमनं यस्य तं तं निकुम्भासुरभावं निकुम्भासुरस्य भावं निरीक्ष्य, नितान्तमात्मशङ्कां नागमत् ॥ कानि भुवनान्याजौ दूरं विप्रकृष्टं यथा स्यात्तथाभिद्रवन्तं रुषा प्रजातं समुत्पन्नं, कुम्भासुरभावं निरीक्ष्य, उच्चैरतिशयेन तान्तं कष्टं यथा स्यात्तथा नागमन् ॥ भारतीये—रुषा कोपेन कुं पृथिवीं प्रजातं प्रजानाम् आतः पलायनं यस्मात्तादृक् यथा स्यात्तथा अभिद्रवन्तमुपद्रवन्तम्, आजौ भासुरभावं दीप्तस्वरूपं दुर्मर्षणं दुर्योधनानुजम् ॥ त्र्यर्थश्लोकः ॥

आकृष्टचापं द्रुतमुक्तबाणं कुलोचिताकर्णमसौ जयश्रीः ।
उत्काकुमारीचरणं विहाय भीतेव गन्तुं परवासमासीत् ॥ १४ ॥

आकृष्टेति ॥ असौ कुलोचिता कुं पृथ्वीं लान्ति गृह्णन्ति ते कुला वीरा वीरोचिता जयश्रीः आकर्णं यथा स्यात्तथा आकृष्टचापम्, उत्काकु उदिता काकुरभिप्रायसूचनं यत्र कर्मणि तद्यथा स्यात्तथा द्रुतमुक्तबाणं मारीचरणं रावणमातुलसमरं विहाय भीता इव परवासं गन्तुम् आसीत् ॥ भारतीये—कुलोचिता कुलीनोचिता कुमारीचरणं कुमार्याः कन्यायाः सकाशाच्चरणं प्रवर्तनं जन्म यस्येति कानीनं कर्णं विहाय कानीनत्वेनाकुलीनत्वात् परवासं गन्तुमुत्का आसीत्, कुमारीचरणं कन्याव्रतं विहाय परवासं पतिवासम् ॥

कुर्वन्स्वरंहस्त उदारवृत्तिं स कं प्रहस्तः सहसारणेन ।
दीप्रांशुकस्तत्र जयद्रथोऽयं रिपुं प्रकुप्यन्नवशं चकार ॥१५॥ (चतुरर्थः)

कुर्वन्निति ॥ प्रहस्तः प्रकृष्टौ हस्तौ यस्येत्याजानुप्रलम्बकरः, दीप्रांशुक उज्ज्वलवस्त्रः, जयद्रथो जयन् रथो यस्य सोऽयं हस्तो राक्षसः, तत्र, उदारवृत्तिं स्वरं कुर्वन्, सहसा आकस्मिकेन रणेन प्रकुप्यन् कं वशं न चकार । (१) । प्रहस्तो राक्षसराजः स्वरंहस्त आत्मवेगतः सारणेन गमनेन सह तत्र उदारवृत्तिं कुर्वन् ।(२)। शुकः शुकाख्यो राक्षसः सारणेन रक्षसा सह स्वरंहस्त निजवेगवतः प्रहस्तः प्रहसनात् । क्विबन्तात्तसिः । दीप्रां तेजस्विनीमुदारवृत्तिम् । (३) । भारतीये—रणे सहसाः सह युगपत् स्यति, यः कंप्रहस्तः कं प्रहसन्ति तेषु । सप्तम्यामपि सार्वविभक्तिकस्तसिः । वक्रोक्त्या हास्यं कुर्वाणेषु, स्वरंहस्तो निजवेगतः, वृत्तिं कुर्वन् उदियाय । स दीप्रांशुकः दीप्रांशोः सूर्यस्येव कं तेजो यस्य सः 'ब्रह्मात्मवाततेजःसु कायस्वर्गशिरो जले । सुखेऽर्थेषु दशस्वेव कशब्दोऽत्र प्रकीर्तितः॥'

इत्युक्तः, सूर्यतुल्यतेजस्को जयद्रथः तत्र प्रकुप्यन् रिपुं वशं न न चकार । चकारैव ।४॥ चतुरर्थकश्लोकः ॥

संरम्भिणाशान्तनवेन मुक्तः क्षोभेण भूरिश्रवसाम्बरेण ।
स्वयंभुवा वाग्गुरुणा न सोढः स सिंहनादः कृतवर्मणा च ॥ १६ ॥

(पञ्चार्थकः)

संरम्भीति ॥ य आशान्तनवेन आशान्ते नवः स्तुतिर्यस्य, भूरिश्रवसां प्रचुरयशसां स्वयं शोभनोऽयः शुभावहो भाग्यवहो विधिर्यत्र वरकर्मणि यथा स्यात्तथा वरेण श्रेष्ठेन, वाग्गुरुणा वचनगरिष्ठेन, कृतवर्मणा विहितसंनाहेन, संरम्भिणा मेघनादेन रावणात्मजेन, क्षोभेण सिंहनादो मुक्तः, स सिंहनादो भुवा भूम्या न सोढः । (१)। संरम्भिणा राभस्यवता, शान्तनवेन शान्तेन उपशमवता नवेन यूना, आम्बरेण गगनचारिणा । दूतत्वारोपादण् । गुरुणा गरिष्ठेन, भूरिश्रवसा कुम्भकर्णपुत्रेण, स्वयमात्मना, क्षोभेण अवाग् अव अञ्चति यत्र कर्मणि यथा स्यात्तथा । (२)। भारतीये—संरम्भिणा औत्सुक्यवता, भूरिश्रवसा प्रचुरयशसा। शान्तनवेन भीष्मेण । गुरुणा सर्वपितामहेन। अम्बरेण गगनेन पृथ्व्या च । (३) । गुरुणा द्रोणाचार्येण । स्वयंभुवा अयोनिजेन । (४) । कृतवर्मणा राज्ञा । संरम्भिणा कुपितेन । गुरुणा बृहस्पतिना, महता वा । अम्बरेण नभसा । भुवा च । (५) ॥ पञ्चार्थकः ॥

रथानिमेऽन्ये च समं नरेन्द्राः प्रपूरिताशानथवाजियुक्तान् ।
आपूरयन्ति स्म मनोरथांश्च किं नोद्यतानामुपपद्यते च ॥ १७ ॥

रथानिति ॥ अथ इमे रावणजरासंधपक्षस्थाः, अन्ये राघवपाण्डवपक्षस्थाः नरेन्द्राः प्रपूरिताशान् प्रपूरिता आशा दिशो यैस्तान् वाजियुक्तान् हययुतान् रथान्, अथवा प्रपूरिताशान् पूरिताभिलाषान् आजियुक्तान् रणयुक्तान् मनोरथान् आपूरयन्ति स्म । उद्यतानां किं न उपपद्यते ॥

स्वयं परान्नामयसीति भर्तुर्ज्या स्त्रीर्नवोढेव पुरंध्रिवर्गैः ।
बलात्कृता राजभिरङ्कलग्ना वक्रस्य भूयो धनुषः खरस्य ॥ १८ ॥

स्वयमिति ॥ राजभिर्वक्रस्य खरस्य निष्ठुरस्य धनुषोऽङ्कलग्ना ज्या भर्तुः स्वामिनः पराञ्शत्रून् नामयसि नामयिष्यसि इति हेतोः स्वयं बलात्कृता दृढीकृता । वक्रस्य कुटिलस्य खरस्य कस्यापि अङ्कलग्ना सती नवोढा स्त्री परान् उत्कृष्टान् नामयसि अधोमुखान् करिष्यसि इति हेतोः पुरंध्रिवर्गैः प्रौढमहिलाकदम्बैर्भर्तुः स्वामिनो विषये बलात्कृता दृढीकृता इव । 'पुरा' इति पाठे पुरा पूर्वकाले दृढीकृता ॥

जीवाभिघातं कृतधर्मपीडं न्याय्येषु मार्गेषु निपक्तचित्ताः ।
ते सत्यसंधाः सुधियोऽपि चक्रुर्यो यादृशः कर्म च तस्य तादृक् ॥ १९॥

जीवेति ॥ जीवाभिघातं प्राण्यभिघातं, प्रत्यञ्चाविस्फारणं च। कृतधर्मपीडं विहितसुकृ-

तविघातम्, विरचिता धर्मनामकस्य वृक्षस्य (येन धनुःकाण्डं निष्पद्यते इति दमयन्ती-व्याख्यायाम्) पीडा यत्र, धर्मेण न्याय्यपथेन पीडा यत्रेति वा। न्याय्येषु मार्गेषु धर्म्यमार्गेषु न्याय्यमार्गणमार्गेषु। सत्यसंधाः सत्यप्रतिज्ञाः अप्रतिहतसंधानाः। सुधियः पण्डिता दक्षाः। यो यादृशो भवति, तस्य कर्मापि तादृग् ॥

उत्कर्ण्य मौर्वीनिनदं नृपाणां तनूलता कण्टकितानुरागात् ।
उत्सेकतो वीररसैकसारादभूद्विरूढेव समं रिपूणाम् ॥ २० ॥

उत्कर्ण्येति ॥ उत्सेको गर्व उत्सेचनं च ॥

ज्याचक्ररुद्धं स्थितमङ्गमेव रवेरिवोच्चैः परिवेषभाजः ।
तेजो जगद्व्याप तु राजकस्य रोद्धुं परं ज्योतिरहो न शक्यम् ॥ २१ ॥

ज्याचक्रेति ॥ राजकस्य अङ्गमेव ज्याचक्ररुद्धं सत् स्थितम्, तेजस्तु परिवेषभाजो रवेरिव उच्चैरत्यर्थं जगद् व्याप। अहो परं ज्योती रोद्धुं न शक्यम् ॥

घाताय कर्तुं द्विषतां प्रवीरैः शरोऽग्रमुक्तान्मनसो रथाच्च ।
प्रागभ्यमित्रोऽजनि पश्चिमोऽपि पश्चान्न शीघ्रः प्रथमोऽपि मन्दः ॥२२॥

घातायेति ॥ द्विषतां घाताय कर्तुं घातं कर्तुम्। विभक्तिप्रतिरूपकम्। प्रवीरैर्भटैः, अग्र-मुक्तात्पूर्वमुक्तात् मनसः, रथाच्च प्राग् शरोऽभ्यमित्रः शत्रुसंमुखोऽजनि। पश्चिमोऽपि शीघ्रः पश्चात् न अजनि। प्रथमोऽपि मन्दः शीघ्रो न ॥

अन्योन्यमुत्पीडयतोः सखीव ज्याधन्वनोर्मध्यमनुप्रविश्य ।
निवारयन्तीव युगं विदूरं तदायतेषुः पृथगाचकर्ष ॥ २३ ॥

अन्योन्यमिति ॥ आयता दीर्घा इषुरन्योन्यं परस्परमुत्पीड्यतोः, ज्याधन्वनोर्मौर्वी-चापयोः, मध्यम् अनुप्रविश्य युगं युद्धं विदूरतरं यथा स्यात्तथा निवारयन्ती इव, तद् द्वि-तयं पृथगाचकर्ष ॥

परस्परं वेगितमाप्नुवन्तो न पेतुरुद्भिद्य शरा हयाश्च ।
तेऽन्योन्यसेनामुभयेऽप्यनाप्य स्वं श्लाघमाना इव तीक्ष्णभावम् ॥ २४ ॥

परस्परमिति ॥ ते उभयेऽपि शरा हयाश्च परस्परमन्योन्यं वेगितम् उद्भिद्य वेगितम् आप्नुवन्तः सन्तः स्वं तीक्ष्णभावं श्लाघमाना इव अन्योन्यसेनाम् अनाप्य अप्राप्य न पेतुः ॥

इयत्तया वक्तुमहं न शक्तः स्यदानिषूणां युधि ये गिरिभ्यः ।
स्थवीयसोऽप्याशु विभिद्य नागान्निबद्धकोपा इव रक्तरक्ताः ॥ २५ ॥

इयत्तयेति ॥ ये गिरिभ्यः स्थवीयसः स्थूलतरान् अपि नागान्गजान् आशु विभिद्य निबद्धकोपा रक्तरक्ता रुधिरलोहिता रुधिरासक्ताश्च इव भवन्ति। तेषाम् इषूणां स्यदान् इयत्तया वक्तुम् अहं न शक्तः ॥

आस्येषु जिह्वा हृदयेषु हस्तानंसेषु शूराः श्रवणान्पृषत्कैः ।
समस्तभन्पुष्करिणां पिशाचान्स्तम्भेषु कीलैरिव मन्त्रसिद्धाः ॥ २६ ॥

आस्येष्विति ॥ शूराः पृषत्कैर्बाणैः पुष्करिणां करिणां जिह्वा आस्येषु, हस्ताञ्शुण्डादण्डान् हृदयेषु, श्रवणाञ्श्रोत्रान् अंसेषु स्कन्धेषु । मन्त्रसिद्धा मन्त्रिणः स्तम्भेषु कीलैः पिशाचान् इव । समस्तभन् ॥

निर्याणभागेष्विषुभिर्विभिन्नास्तैरङ्कुशाकर्षनिबद्धशङ्काः ।
परावृतन्दूरमिभा न भीताः स्मरन्ति शिक्षां विधुरेऽपि धीराः ॥ २७ ॥

निर्याणेति ॥ तैः शूरैर्निर्याणभागेषु गण्डस्थलेषु, इशुभिर्विभिन्ना अङ्कुशाकर्षनिबद्धशङ्का अङ्कुशैराकर्षणे निबद्धा शङ्का यैस्तादृशः सन्त इभा गजा दूरं यथा स्यात्तथा परावृतन् परावृत्ताः । यतो धीरा अपि भीतास्त्रस्ता विधुरे कष्टे सति शिक्षां न स्मरन्ति ॥

व्यद्धुं परानानतपूर्वकायाः स्कन्धान्तयोस्तैर्विनिखातबाणाः ।
योधाः सतूणद्वितया इवासन्बध्नात्यनर्थोऽपि कुतश्चिदर्थम् ॥ २८ ॥

व्यद्धुमिति ॥ पराञ्शत्रून् व्यद्धुं ताडयितुम् आनतपूर्वकाया योधा भटाः तैः शत्रुभिः स्कन्धान्तयोर्विनिखातबाणा विनिखाता विनिहिता बाणा येषां तादृशः सन्तः सतूणद्वितया बाणधिद्वययुता इव आसन् । अनर्थोऽपि कुतश्चिद् अर्थं बध्नाति ॥

तेषां धनुर्मण्डलितं यशो न, द्विषो धरित्र्यामपतन्न बाणाः ।
पृष्ठे निषङ्गः स्थितवान्न कश्चिन्ननाम देहो हृदयं न नाम ॥ २९ ॥

तेषामिति ॥ मण्डलितं कुटिलितं, नियतदेशवृत्ति । बाणा धरित्र्यां (निष्फलाः) नापतन् । नाम प्रसिद्धौ ॥

ततो यदूनां बलमप्यवस्थां गतं हतं तैः परिवर्तते स्म ।
स्थिरासिकापेयमधिष्ठितानां तद्वारि यादोभिरिवाम्बुधीनाम् ॥ ३० ॥

तत इति ॥ यत् तैः शत्रुभिर्हतं ताडितं सदूनामपि अवस्थां गतं तत् कापेयं कपित्वम् अधिष्ठितानां वानराणां स्थिरासि स्थिरा असयो यत्र तादृक् सत् । यादोभिरम्बुधीनां वारीव । परिवर्तते स्म ॥ भारतीये—स्थिरासिकापेयं स्थिरासिका स्थिरमासितुं पर्याय: अपेया परित्याज्या यत्र तत्, अधिष्ठितानां यदूनां तत् बलं कामपि अवस्थां गतम् ॥

तथा हरीणां कलहायमाना सेना मुखं दातुमपारयन्ती ।
मुधातिसुप्ता बहुवासराणि क्षणं न वेश्येव ययौ न तस्थौ ॥ ३१ ॥

तथेति ॥ हरीणां वानराणां यादवानां वा सेना 'कलहायमाना कलहं कुर्वाणा मुखं दातुम् अपारयन्ती पराङ्मुखीभवन्ती बहुवासराणि मुधा अतिसुप्ता अतिनिद्राणा सुरतासक्ता वेश्येव । क्षणं न ययौ गतवती न तस्थौ स्थितवती ॥

तदाशशंसे रणभूमिरेषां प्राज्योचिताङ्गा पतिमात्तबाणा ।
परासुमज्जातिकृतावलेपा पतिंवराभ्यङ्गविधिं गतेव ॥ ३२ ॥

तदेति ॥ प्राज्योचिताङ्गा प्राज्यानि प्रचुराणि उचितानि योग्यानि अङ्गानि गजवाजिरथपदातिलक्षणानि यस्यां सा, प्रकृष्टस्य आज्यस्य घृतस्य उचितमङ्गं यस्याः सा । विवाहाङ्गाभ्यङ्गे घृतसंपर्को जायते । आत्तबाणा गृहीतशरा । परासुमज्जातिकृतावलेपा परासूनां शवानां मज्जया अति कृतो अत्र समन्तात्लेपो यस्याम्, परासु उत्कृष्टासु असुमज्जातिषु प्राणिजातिषु कृतोऽवलेपो गर्वो यया सा, रणभूमिः, अभ्यङ्गविधिं मज्जनक्रियां गता पतिंवरा कन्या इव, एषां नरेन्द्राणां पतिं तदा आशशंसे श्लाघते स्म ॥

स्थिराक्षरान्तं युधिशब्दपूर्वं नाम प्रसिद्धं भुवनं समस्तम् ।
यस्य स्तुतेऽद्यापि विनामयुक्तं क्रुद्धः सरामो हि गतिर्नयस्य ॥ ३३ ॥

स्थिरेति ॥ समस्तं भुवनं कर्तृ यस्य प्रसिद्धं नाम रामेति, स्थिराक्षरान्तं स्थिरोऽविचलोऽक्षरस्य मोक्षस्यान्तोऽष्टगुणलक्षणो धर्मो यस्मात्तत्तवनकर्मणः तद्यथा स्यात्तथा, शब्दपूर्वं शब्दो यशः पूर्वो यस्मात्तद्यथा स्यात्तथा, विनामयुक्तं विनामः प्रणामो युक्तो यत्र तद्यथा स्यात्तथा, अद्यापि स्तुते स्तवीति । स रामः युधि क्रुद्धोऽपि नयस्य गतिः ॥ भारतीये—स्थिराक्षरान्तं 'स्थिर' इति अक्षरं पदम् अन्ते यस्य तत्, युधिशब्दपूर्वं 'युधि' इति शब्दः पूर्वो यस्य तत्, विनामयुक्तं विनामेन षत्वेन युक्तं यस्य नाम 'युधिष्ठिरः' इति । यस्य गतिः केनोपायेन जीवामीति लक्षणा वर्त्तना न । स रामः रेण गम्भीरध्वनिना आमेन सान्द्रचेतसा सहितः, स नरेन्द्रः क्रुद्धः ॥

स्वैरञ्जनानन्दनमाशुकारैर्भीमन्दमानम्रमरातिजातम् ।
कुर्वन्तमुद्यन्तमुदीक्ष्य सेन्द्रैर्विसिस्मिये खेऽधिगतैर्विमानम् ॥ ३४ ॥

स्वैरेति ॥ सेन्द्रैः खेऽधिगतैः खेचरैः स्वैरात्मीयैराशुकारैः शीघ्रकरणैररातिजातं शत्रुजातं भीमन्दं भिया मन्दम्, आनम्रं कुर्वन्तम्, उद्यन्तमुद्यमं चरन्तम् अञ्जनानन्दनम् उदीक्ष्य विसिस्मिये ॥ भारतीये—आशुकारैः स्वैरम्, जनानन्दनम्, शत्रुजातं दमानम्रं दमेनानम्रं कुर्वन्तं भीमं वृकोदरम् ॥

प्रभावितारातनयस्य वीर्यं कृताधिपार्थस्य निरूप्य भीताः ।
दत्तान्तराः पूर्वसरा बभूवुर्विपद्भिरुद्धा इव बन्धुवर्गाः ॥ ३५ ॥

प्रभेति ॥ कृताधिपार्थस्य कृतो अधिपस्यार्थो येन तादृशः, तारातनयस्य अङ्गदस्य प्रभावि वीर्यं निरूप्य अवलोक्य भीता बन्धुवर्गाः पूर्वसरा अग्रतः सराः । विपद्भिरुद्धा इव । दत्तान्तरा दत्तावसरा बभूवुः ॥ भारतीये—प्रभावितारातनयस्य प्रभावितो निश्चित आरातनयः शत्रुसंबन्धिनीतिर्येन तादृशः । पार्थस्यार्जुनस्य । कृताधि विहिताधि ॥

वरूथिनीलङ्घनमन्यसैन्यं ज्वलत्प्रकोपानलमुत्पतन्तम् ।

दृष्ट्वा यमाकारमरिप्रजातं संहारमह्नाय भुवः शशङ्के ॥ ३६ ॥

वरूथिनीति ॥ अरिप्रजा रावणप्रजा वरूथे वरुथाः सन्ति अस्मिन् रथगुप्तिसहितम्, घनं निबिडम्, अन्यसैन्यं रावणसैन्यम् उत्पतन्तम्, ज्वलत्प्रकोपानलं ज्वलन् प्रकोप एव अनलो यस्य तं यमाकारं यमसदृशं तं नीलं कपीन्द्रं दृष्ट्वा भुवः संहारमह्नाय झटिति शशङ्के । (१) । ज्वलत्प्रकोपा अरिप्रजा वरूथिनीलङ्घनं सेनालङ्घनं नलं कपीन्द्रम् । (२) ॥ भारतीये—अरिप्रजातम् अन्यसैन्यं कर्तृ यमाकारं यमलजातं नकुलसहदेवमूर्तिम् ॥

स वानराणां पतिरुग्रसेनः किं वर्मणा स्यात्किल मर्मणेव ।

पराङ्गृहीतेन भियेति चित्रं संनद्धवान्संनहनं न भेजे ॥ ३७ ॥

स वानेति ॥ उग्रसेन उग्रा सेना यस्य स वानराणां पतिः सुग्रीवः मर्मणेव भिया पराच्छत्रोर्गृहीतेन वर्मणा संनहनेन किं स्यादिति संनद्धवान् संनहनं न भेजे इति चित्रम् ॥ भारतीये—वा अथवा स नराणां पतिरुग्रसेनस्तदभिधानः ॥

दिधक्षवे लोकमरातिसेनं संधुक्षमाणं द्रुपदेन तेन ।

क्रोधाग्नयेऽकल्प्यत कोटिकल्पं भामण्डलेनोत्तपतार्कतेजः ॥ ३८ ॥

दिधक्षेति ॥ अर्कतेज उत्तपता तेन भामण्डलेन जानकीबान्धवेन लोकं दिधक्षवे क्रोधाग्नये कोटिकल्पं कोटिसंख्याभिः कल्पनीयम् अरातिसेनम् अरातीनां सेनां द्रुपदे दारुस्थाने संधुक्षमाणम् न अकल्प्यत अकल्प्यतैव ॥ भारतीये—भामण्डलेन दीप्तिपरिवेषेण अर्कतेज उत्तपता तेन द्रुपदेन नरेन्द्रेण । अकल्प्यत ॥

तीव्रोद्धवं क्रुद्धमनेकसैन्यं परासुषेणन्तमरित्रजाय ।

निर्विज्य नित्यास्तमयात्कथंचिद्वैरोचनी दीप्तिरुपायतेव ॥ ३९ ॥

तीव्रोद्धवमिति ॥ परा उत्कृष्टा, वैरोचनी सौरी दीप्तिः नित्यास्तमयात् अनवरतास्तात् निर्विज्य अरित्रजाय शत्रुगणाय क्रुद्धम्, तीव्रोद्धवमुग्रगर्वम् अनेकसैन्यं तं सुषेणं वानरेन्द्रं कथंचिन्महता कष्टेन उपायत इव ॥ भारतीये—परासुषे निराकृतवतेऽरित्रजाय अणन्तमूर्जन्तम् उद्धवं श्रीकृष्णामात्यं तीव्रा वैरोचनी इव दीप्तिः उपायत । नित्या वैरोचनी दीप्तिः कथंचित् निर्विज्य अस्तम् अयात् ॥

सज्जाम्बवः क्षोभणमभ्यगच्छन्न केवलं वारिधयोऽद्रयश्च ।

भिन्ना विदूरे विशिखैरमोघं तथा दुरन्तं विदुरस्य शस्त्रम् ॥ ४० ॥

सज्जेति ॥ जाम्बव ऋक्षराट् केवलं क्षोभणं न अभ्यगच्छत् । किं तु विशिखैर्विदूरे भिन्ना वारिधयः समुद्राः अद्रयः क्षोभणमभ्यगच्छन् । तथा अस्य सत् शस्त्रं दुरन्तं विदुः ॥ भारतीये—सज्जाम्बवः सज्जमम्बु येषां तादृशो वारिधयः केवलं क्षोभणं नाभ्यगच्छन् । किंतु अद्रयोऽपि । विदुरस्य धृतराष्ट्रानुजस्य ॥

न सोढवैराधितरौद्रहेतिः स्थिरं तथैकं पदमन्यसेना ।
वैराटवीचारभयेन जाता गेहेष्विवाजिष्वपि कस्य गर्जः ॥ ४१ ॥

नेति ॥ अन्यसेना रावणसेना सोढवैराधितरौद्रहेतिः सोढा वैराधितो विराधितस्य चन्द्रोदरपुत्रस्येमा रौद्र्यस्तीव्रा हेतयो यया तादृक् न जाता, तथा तस्या एकं पदं वैराटवीचारभयेन वैराटव्यां विरोधारण्ये चारात्प्रवर्तनात् भयेन, स्थिरं न जातम् ॥ भारतीये—अन्यसेना विपक्षसेना, सोढवैरा सोढं वैरं यया तादृक्, रौद्रहेती रौद्र्यो हेतयो यस्यां तादृक् न जाता, तथैकमपि पदं वैराटवीचारभयेन वैराटाद् विराटनरेन्द्रकृतात् वीचारान्मारणाद् भयेन स्थिरं न आधित ॥

तं सत्यकोपाहतशत्रुमुच्चैरामन्दमारम्भगभीरनादः ।
विभीषणः सोऽग्रजवैरभीतः समेत्य नाथं प्रधनं ननाथ ॥ ४२ ॥

तमिति ॥ दमारम्भगभीरनादो दमस्य विद्याभ्यासाय श्रमस्य आरम्भेण गभीरो नादो यस्य, अग्रजवैरभीतोऽग्रजस्य वैराद्भीतः, स विभीषणः सत्यकोपाहतशत्रुं सत्येनाकृत्रिमेण कोपेन आहताः शत्रवो येन तं नाथं स्वामिनं रामं समेत्य प्रधनं युद्धं उच्चैरतिशयेन ननाथ ययाचे ॥ भारतीये—उच्चैराः प्रचुरद्रव्यः आरम्भगभीरनादः आरम्भे गभीरो नादो यस्य सोऽग्रजवैः प्रधानजवैर्विभीषणो भयानकोऽभीतो निर्भयः, सत्यकः कौरवगृह्योऽपाहतशत्रुं तं नाथं युधिष्ठिरं मन्दं यथा स्यात्तथा समेत्य ॥

स एष संभूय समुद्यतात्मा विश्वोऽपि विश्वं भुवनं जिगीषुः ।
राजाध्यपेतो बहुशस्त्रपातो बभूव रागादिरिवात्मतन्त्रः ॥ ४३ ॥

स एषेति ॥ समुद्यतात्मा विश्वं भुवनं जिगीषुरध्यपेतो भिन्नो बहुशस्त्रपातः स एष विश्वोऽपि समस्तोऽपि राजा संभूय मिलित्वा । रागाद् इः काम इव, रागादिरिव वा । आत्मतन्त्रो बभूव ॥

अभ्यङ्गसंचारकमङ्गरागं स मन्यमानः कवचं प्रविष्टान् ।
प्रागेव मन्ये शरणं प्रविष्टान्ध्यायंस्तनुत्रं कथमाददीत ॥ ४४ ॥

अभ्यङ्गेति ॥ अङ्गरागमङ्गवर्णमेवाङ्गसंवारकमङ्गप्रच्छादकं मन्यमानोऽपि स समस्तोऽपि राजा कवचं प्रविष्टान् प्रागेव शरणं प्रविष्टान् प्राप्तान् ध्यायन् सन् तनुत्रं कवचं कथं आददीत गृह्णीयात् इति मन्ये जाने ॥

चिरं निबद्धो नियमेन सोऽयं तीव्रासिधाराव्रतबद्धचित्तः ।
कर्तुं यथेष्टं गुरुणा कथंचिदुपेक्षितः शिष्य इवोदियाय ॥ ४५ ॥

चिरमिति ॥ नियमेन वीरव्रतेन, परिमितकालगृहीतव्रतेन । तीव्रासिधाराव्रतबद्धचित्तः तीव्रे असिधारारूपव्रते बद्धचित्तः, तीव्रे असिधारातुल्यव्रते बद्धचित्तः । गुरुणा

स्वामिना उपाध्यायेन । उपेक्षितोऽवज्ञातः । सोऽयं विश्वोऽपि राजा शिष्य इव । यथेष्टं कर्तुम् उदियाय ॥

आस्थायुकः स्यन्दनमन्तरिक्षमापातुकस्तोयनिधेरशेषः ।
विपक्षयुद्धान्यभिलाषुकोऽयं वेलोद्यतो ग्राह इवाबभासे ॥ ४६ ॥

आस्थायुक इति ॥ स्यन्दनं रथं, प्रवाहं वा । आस्थायुकोऽधितिष्ठन् । अन्तरिक्षं गगनम् आपातुक आपतन् । विपक्षयुद्धानि शत्रुरणानि, पक्षिपक्षरणानि वा । अभिलाषुकोऽभिलषन् । वेलोद्यतः पर्यायोद्यतः वा इलोद्यतो धराग्रहणोद्यतः । अयम् अशेषो राजसमूहः । तोयनिधेर्वेलोद्यतो वेलोच्छलितः, ग्राह इव । आबभासे ॥

भ्रूभङ्गमात्रेण परस्य भङ्गं ज्याघातमात्रेण नृपाभिघातम् ।
ते चक्रुरारोपितचापचक्राः स्वायासतन्त्रं हि जयं निराहुः ॥ ४७ ॥

भ्रूभङ्गेति ॥ स्वायासतन्त्रम् आत्मप्रयत्नाधीनम् ॥

स्थिते समर्थे सति दक्षिणाङ्के वामोऽङ्गभागः प्रथमोऽग्रगोऽभूत् ।
अकल्पभूयोपनतं विनेतुं जन्ये व्यवस्यन्निव जन्यमेषाम् ॥ ४८ ॥

स्थित इति ॥ जन्ये रणे अकल्पभूयोपनतमसंकल्पप्रवृत्तं जन्यं 'वामोऽयं प्रतिकूलोऽयम्' इति जनापवादं विनेतुं दूरीकर्तुं व्यवस्यन् निश्चिन्वन् इव ॥

द्राघिम्नि बाह्वोरुरसः प्रथिम्नि प्रसर्पति स्याद्यदि शक्रचापम् ।
तदा कृतज्यं तदपि प्रभूणां नाकर्षणस्य प्रभवेदवैमि ॥ ४९ ॥

द्राघिम्नीति ॥ बाह्वोर्भुजयोः, द्राघिम्नि दीर्घत्वे, उरसो वक्षसः प्रथिम्नि विस्तारे प्रसर्पति सति, यदि शक्रचापमपि कृतज्यं स्यात्, तदा तदपि प्रभूणाम् आकर्षणस्य न प्रभवेदिति अवैमि जाने ॥

पुरः प्रसस्ने धनुषा द्विपद्भ्यः पलायनं सूचयतेव पश्चात् ।
ज्ययापजग्मे भुजवीरलक्ष्मीं संवर्धयत्येव जयस्य दिष्ट्या ॥ ५० ॥

पुर इति ॥ द्विपद्भ्यः पलायनं सूचयतेव धनुषा पुरः प्रसस्ने प्रसृतम् । जयस्य भुजवीरलक्ष्मीं दिष्ट्या संवर्धयत्या इव ज्यया पश्चादपजग्मे ॥

तेऽपातयन्मार्गणमेष वाहं सोऽप्यश्ववारं हृदयं निषादी ।
नान्यान्यपातानुगतं व्यमुञ्चन्विमार्गसंपातभियेव बाणाः ॥ ५१ ॥

तेऽपातेति ॥ ते नरेन्द्रा मार्गणं बाणम् अपातयन्, एष बाणो वाहमश्वम्, सोऽपि वाज्यपि अश्ववारम्, निषादी अश्ववारो हृदयम्, अपातयत् । एवम् अन्यान्यपातानुगतं परस्य परस्य पातस्यानुगतमनुगमनम् विमार्गसंपातभिया अमार्गपातभयेनेव बाणा न व्यमुञ्चन् ॥

गुणेन मुक्तं गुरुपर्वरिक्तं मुखेन तीक्ष्णं प्रतिपक्षबद्धम् ।
मर्माविदेषामिषुजालमायादपारिषद्यस्य तुलां जनस्य ॥ ९२ ॥

गुणेनेति ॥ गुणेन मौर्व्या, शास्त्राभ्यासादिना । गुरुपर्वरिक्तं गरिष्ठपर्वकेण (ग्रन्थिना) सूरिपरम्परया च हीनम् । तीक्ष्णं परुषश्च । प्रतिपक्षबद्धं पश्चात्पिच्छबद्धं प्रत्यर्थिमिलितश्च । मर्माविद् मर्माणि विध्यति तत् स वा । एषां नरेन्द्राणामिषुजालमपारिषद्यस्य हेयोपादेयविवेकविकलस्य जनस्य तुलामायात् ॥

तान्प्रावृषेण्याम्बुदभासि पांशौ मध्ये दृशं रुन्धति शब्दलक्ष्यः ।
शरोऽभिनत्पूगतिथानरातीन्को वा निषेद्धा भवितव्यतायाः ॥ ९३ ॥

तानिति ॥ प्रावृषेण्याम्बुदभासि प्रावृड्भवघनतुल्ये पांशौ मध्ये दृशं रुन्धति आवृण्वति सति शब्दलक्ष्यः शब्दवेध्यः, शरः, पूगतिथान् संघपूरणान् तान् अरातीन् अभिनत् । भवितव्यतायाः को निषेद्धा ॥

तथाविधेऽप्युद्यति धूलिजाले नृपा रिपून्प्रापुरमी यथास्वम् ।
सर्वस्य पूर्वानुभवोऽनुबन्धी को विष्वणन्मुह्यति नक्तमास्ये ॥ ९४ ॥

तथेति ॥ अमी नृपाः तथाविधे धूलिजाले उद्यति अपि यथास्वं यथायोग्यं रिपून् प्रापुः । पूर्वानुभवः सर्वस्य अनुबन्धी भवति । यतः, नक्तं रात्रौ आस्ये मुखे विष्वणन् भुञ्जानः को मुह्यति । न कोऽपि ॥

तथोभयेषामपि भूपतीनां चित्तात्प्रकोपश्चिरकालरूढः ।
परस्परं भार इवावतीर्णो जज्ञे लघुर्विश्रमदित्सयेव ॥ ९५ ॥

तथोभेति ॥ तथा उभयेषामपि भूपतीनां चित्तात् परस्परं विश्रमदित्सया इव अवतीर्णः चिरकालप्ररूढोऽपि प्रकोपः । भार इव । लघुर्जज्ञे जातः ॥

ऋजुस्वभावादवदातवृत्ताः स्वनाथनाम्नाभिययुः कृताङ्काः ।
तूर्णं मृधोद्यावनिमन्त्रणाय दूता इवान्योन्यचमूं पृषत्काः ॥ ९६ ॥

ऋज्विति ॥ ऋजुस्वभावात् अवक्रस्वरूपात्, अवदातवृत्ताः खण्डितवृत्तयः शुद्धवृत्तयः, स्वनाथनाम्ना कृताङ्काः विहितचिह्नाः पृषत्का बाणाः (दूता इव) मृधोद्यावनिमन्त्रणाय रणोद्यमनिमन्त्रणाय रणोत्सवनिमन्त्रणाय वा अन्योन्यचमूं परस्परसेनां तूर्णं यथा स्यात्तथा अभिययुः ॥

छत्रध्वजानामितरेतरस्य दण्डास्तदावादिषतार्धचन्द्रैः ।
नवप्रियत्वोद्भियेव भूपैर्न तत्यजेऽन्योन्यकृतं वधेऽपि ॥ ९७ ॥

छत्रेति ॥ तदा अर्धचन्द्रैरितरेतरस्य छत्रध्वजानां दण्डा अवादिषत छिन्नाः । भूपैः

वधेऽपि नवप्रियत्वोद्भिया नूतनप्रेमप्रभङ्गभयेन इव अन्योन्यकृतं परस्परोपकारं न तत्यजुः ॥

ते सायकाः संयति संनिवृत्य कर्तुं प्रियाख्यानमपारयन्तः ।
स्वं साहसं पत्युररातिवर्गैर्भृत्या इवाख्यन्पतिताः पतद्भिः ॥ ५८ ॥

ते सायेति ॥ संयति संनिवृत्य प्रियाख्यानं कर्तुम् अपारयन्तः, ते सायकाः पतद्भिररातिवर्गैः सह पतिताः सन्तः भृत्या इव । स्वं साहसं पत्युराख्यन् निवेदितवन्तः ॥

ध्रुवस्य शौर्यायतनस्य कर्तुं राज्ञा शिलाशासनमिच्छतेव ।
वक्षः स्वनामाक्षरमार्गणाङ्कं परोवरस्याक्रियताखिलेन ॥ ५९ ॥

ध्रुवस्येति । ध्रुवस्य स्थिरस्य शौर्यायतनस्य शौर्यमन्दिरस्य शिलाशासनं शिलोत्कीर्णप्रशस्तिं कर्तुम् इच्छतेवाखिलेन राज्ञा परोवरस्य परस्यावरस्य वक्षः स्वनामाक्षरमार्गणाङ्कम् अक्रियत ॥

महीक्षितां दक्षिणबाहुदेशे शरक्षतेऽभूत्क्षतजप्रवाहः ।
वीरश्रियो लाक्षिकपादरागः क्रान्तः श्रमात्प्राप्त इवार्द्रभावम् ॥ ६० ॥

महीक्षीति ॥ महीक्षितां राज्ञां दक्षिणबाहुदेशे शरक्षते सति क्षतजप्रवाहो रक्तप्रवाहः । श्रमादार्द्रभावं प्राप्तः क्रान्तो वीरश्रियो लाक्षिकपादरागो लाक्षया रक्तश्चासौ पादराग इव । अभूत् ॥

नृपास्तिरीटेषु समुन्नतेषु चितेषु रत्नैर्मकरीगणैश्च ।
द्विषां निचख्नुर्विशिखान्विरोधाद्वेलाद्रिकूटेष्विव चक्रिणस्ते ॥ ६१ ॥

नृपा इति ॥ ते नृपा रत्नैर्मकरीगणैश्च चितेषु समुन्नतेषु द्विषां तिरीटेषु मुकुटेषु, विरोधात् विशिखान् चक्रिणश्चक्रेश्वरा वेलाद्रिकूटेषु इव । निचख्नुर्निखातवन्तः ॥

इतीश्वराः केशवतो भवन्तः साधारणं प्राप्य रणं सलज्जाः ।
यावन्मनःस्थाम पुनः प्रजह्रुरप्यन्यसाम्यं महतां हि दैन्यम् ॥ ६२ ॥

इतीति ॥ इत्येवं प्रकारेण साधारणं सोपमं रणं प्राप्य केशवतो लक्ष्मणान्नारायणाद्वा सलज्जाः भवन्तः पुनरपि यावन्मनःस्थाम यावन्मनोबलं प्रजह्रुः प्रहृतवन्तः । हि यतः महतामन्यसाम्यं सतुल्यता दैन्यं भवति ॥

यावन्निमेषः पतितोऽपि नैकस्तावत्पपातेषुरसावसंख्यः ।
न यावदेकः पततीषुरेषां सूताः परेषामपतन्नशेषाः ॥ ६३ ॥

यावदिति ॥ यावदेकोऽपि निमेषो न पतितः, तावद् असंख्योऽसौ इषुः पपात । यावदेषामिषूणां मध्यत एकोऽपि न पतति, तावत् परेषां शत्रूणां अशेषाः सूता अपतन् ॥

हता हया न द्विषतां प्रतापा रथोऽवरुग्णो न मनोरथोऽभूत् ।
वैरथ्ययोगेऽपि महारथत्वं नापत्सु यत्सीदति तद्धि धैर्यम् ॥ ६४ ॥

हता इति ॥ अवरुग्णो भग्नः । वैरथ्ययोगेऽपि विनष्टरथत्वयोगेऽपि द्विषतां महारथत्वं महारथित्वं पौरुषं जायते । हि यतः यत् आपत्सु न सीदति क्लेशं वहति तद् धैर्यं भवति ॥

रथान्नतूच्चैः पदतोऽवतेरुश्चापं सपत्ना जगृहुर्न खेदम् ।
तथावदानोचितचेतसोऽपि दोषाभिमुख्येन गुणं निजघ्नुः ॥ ६५ ॥

रथान्नेति ॥ सपत्नाः शत्रवः, रथात् अवतेरुः, न तु उच्चैः पदतः । चापं जगृहुः न तु खेदम् । तथा अवदानोचितचेतसः अवदाने त्यागशौर्याभ्यां विख्यातत्वे उचितं चेतो येषाम्, अवदानस्य खण्डनस्योचितं चेतो येषां वा तादृशोऽपि । दोषाभिमुख्येन कुनीतितत्परतया, दोषयोर्भुजयोराभिमुख्येन प्राधान्येन । गुणं शौर्यौदार्यादिलक्षणम्, मौर्वीम् । निजघ्नुर्निहतवन्तः, आस्फालयन्ति स्म । विरोधपरिहारौ व्याख्यातौ ॥

उल्काशरं शक्रधनुस्तडिज्ज्यं घना दधाना इव तत्कथंचित् ।
अधिज्यचापाः शरजालमुग्रं ते लोहितापक्रममभ्यमुञ्चन् ॥ ६६ ॥

उल्केति ॥ अधिज्यचापा आरोपितशरासनाः, ते राजानो लोहितापक्रमं लोहमस्यास्ति तत्ताया स एव वा अपक्रमो यत्र तत्, उग्रं तीव्रं तच् शरजालं बाणजालम् । उल्काशरम् उल्कैव शरो यत्र तम्, तडिज्ज्यं तडिदेव ज्या यत्र तत्, शक्रधनुरिन्द्रचापं दधाना घना लोहितापक्रमं लोहितस्य अपक्रमो यस्मात्, लोहितात् अभ्रात् अपक्रमः प्राप्तिर्यस्य वा तत्, शरजालं जलसमूहम् इव, । कथंचिदभ्यमुञ्चन् ॥

ते रोपणैरावृषतार्कभासस्तत्पादघाताविनयक्रुधेव ।
चिह्नैश्चमूनां निहतैर्निपेते भियोत्तरीयैरिव दिग्वधूनाम् ॥ ६७ ॥

ते रोपेति ॥ ते नरेन्द्रा रोपणैरर्कभासः सूर्यदीप्तीः तत्पादघाताविनयक्रुधा तच्चरणप्रहारजाविनयजकोपेनेव । आवृषत आच्छादितवन्तः । निहतैः चमूनां चिह्नैः । दिग्वधूनामुत्तरीयैर्भियेव । निपेते ॥

तैरुत्तरङ्गाकुलितास्तुरंगा वातैः प्रवाहा इव वारिराशेः ।
रथाश्च नुन्नाः परतोऽपसस्रुः स्वं मन्यमाना इव दुर्निमित्तम् ॥ ६८ ॥

तैरुत्तेति ॥ तैर्नरेन्द्ररोपणैर्नुन्नाः प्रेरिताः उत्तरङ्गाकुलिताः छिन्नसमरभूम्याकुलिताः उत्प्लवनाकुलिताः ऊर्ध्वोर्मिव्याकुलितास्तुरंगा अश्वा रथाश्च । वातैर्नुन्ना वारिराशेः प्रवाहा इव । दुर्निमित्तमिव स्वमात्मानं मन्यमानाः सन्तः परतोऽपसस्रुः ॥

हतः करेणुः पतितः पदातिर्भग्नो वरूथः शिबिरं निरस्तम् ।
भुवोऽभवद्विश्वममङ्गलोत्थं भारो निरुन्धन्निव भूमिकम्पम् ॥ ६९ ॥

हत इति ॥ भुवो भारः । अमङ्गलोत्थं विश्वं भूमिकम्पं निरुन्धन्निव । अभवत् ॥

ध्वनत्सु तूर्येषु शिवाङ्गनासु भ्रेजे समङ्गल्यरवोद्यतासु ।

सशोणिता भूः परिणीयमाना कन्याभिषिक्तेव कषायतोयैः ॥ ७० ॥

ध्वनत्स्विति ॥ भूः पृथ्वी तूर्येषु ध्वनत्सु, शिवाङ्गनासु शृगालीषु समं युगपत् गल्यरवोद्यतासु गल्ये कण्ठभवे रवे उद्यतासु सतीषु सशोणिता सरक्ता । परिणीयमाना कन्या समङ्गल्यरवोद्यतासु मङ्गलार्हरवेण सहितासूद्यतासु शिवाङ्गनासु सभर्तृकभार्यासु सतीषु, कषायतोयैरभिषिक्तेव । भ्रेजे ॥

इत्युद्यतं राजकमन्यपक्षं प्रत्युद्ययावुत्कमुपेन्द्रगृह्यम् ।

स्वमर्पयन्तं सदनेऽभिमित्रं रणेऽभ्यमित्रीणमुदारमाहुः ॥ ७१ ॥

इत्युद्येति ॥ उपेन्द्रगृह्यं लक्ष्मणगृह्यं नारायणगृह्यं उत्कमुत्कण्ठितं राजकं त्कीर्णप्र-
इत्येवंप्रकारेण उद्यतम् अन्यपक्षं शत्रुपक्षम् उद्ययौ । सदने अभिमित्रं मित्रम क्षरमार्गणा-
मात्मीयम्, रणे अभ्यमित्रीणं शत्रुसंमुखगमनशीलम्, स्वमात्मानम् अ
रम् आहुः ॥

स्वं पूर्वकायं प्रविशद्भिरश्वैरमुक्तमार्गैरथकर्मभारैः ।

अतारि तिर्यङ्नरकोपबद्धा कृच्छ्रात्कृताघैरिव जन्यभू विम् ॥ ६० ॥

स्वमिति ॥ स्वमात्मीयं पूर्वकायमग्राङ्गं प्रविशद्भिः अमुक्तमार्गैरथ प्रवाहो रक्तप्रवाहः ।
रथकर्मैव भारो येषां तैरश्वैः, नरकोपबद्धा नराणां कोपैर्बद्धा, ज वासौ पादराग इव ।
यथा स्यात्तथा । अमुक्तमार्गैः न मुक्तानां मार्गो येषु तैः कर्मभारैः
विशद्भिः कृताघैर्विरचितपापैर्जनैः तिर्यङ्नरकोपबद्धा तिर्यग्भिर्नरकैश्चो
कृच्छ्रात्कष्टात् अतारि ॥ शस्ते ॥ ६१ ॥

रथान्वसावेशविवृत्तचक्रान्रथ्याः सुखेनाचकृषुस्तुरंगाः । मुकुटेषु, विरो-

सारथ्यमीपुभ्रमणानुकूलमाकृष्यते स्नेहवशेन सर्वः ॥ ७२ ॥

रथानिति ॥ रथ्या रथस्य वोढारस्तुरंगाः, वसावेशविवृत्तचक्रान् वसाया आवेशेन लेपेन विवृत्तानि भ्रमणशीलानि चक्राणि येषां तान् रथान् सारथ्यमीपु नुकूलं सारथिरज्जुभ्रमणानुलोमं यथा स्यात्तथा सुखेन आचकृषुः । स्नेहवशेन सर्व आकृष्यते ॥

ततोऽभ्यमित्रीयमिदं गरीयो राजन्यकं व्याततं धर्मलोपम् ।

गुणच्छिदापूर्वसरं परेषां क्रोधाकुलानामविधिः कुतो वा ॥ ७४ ॥

तत इति ॥ तत इदम् अभ्यमित्रीयम् अमित्रं शत्रुमभिलक्ष्य गमनशीलं राजन्यकं राजकुमारसमूहः परेषां शत्रूणां गुणच्छिदापूर्वसरं शौर्यादेर्ज्यायाश्च च्छिदा छेदनं पूर्वसरा यस्मिन्, धर्मलोपं धर्मस्य अदृष्टस्य धनुष्काण्डस्य च लोपं गरीयो यथा स्यात्तथा व्याततं। क्रोधाकुलानां कुतोऽविधिर्भवेत् ॥

विद्यानवद्यैः कवचानि शस्त्रैस्तेन द्विधाभित्सत शात्रवस्य ।
सहस्रशः संतमसानि तीव्रैरुस्रैर्निशीथस्य विवस्वतेव ॥ ७५ ॥

विद्येति ॥ तेन राजसमूहेन विद्यानवद्यैर्धनुर्विद्यापूतैः शस्त्रैः शात्रवस्य शत्रुसमूहस्य कवचानि द्विधा । विवस्वता सूर्येण तीव्रैः सोढुमशक्यैरुस्रैः किरणैर्निशीथस्य संतमसानि घनान्धकाराणि सहस्रश इव । अभित्सत ॥

करीव सोऽपात्तमुखच्छदोऽयं व्यपोढवर्मा युधि वैरिवर्गः ।
पतन्गृहीतासिररोधि बाणैर्नयैर्विनीपात इवावनीशैः ॥ ७६ ॥

करीवेति ॥ अवनीशैः क्षितिपालैः युधि समरे करी गज इव अपात्तमुखच्छदः परित्यक्तमुखप्रच्छादनो व्यपोढवर्मा मुक्तकवचः अयं वैरिवर्गः शत्रुसमूहो गृहीतासिः स्वीकृतखड्गः पतन् बाणैः । विनीपातो दुर्नयो नयैरिव । अरोधि ॥

निहत्य निस्त्रिंशगतिं तदीयां धृतः कथंचिन्नृपतिव्रजेन ।
प्रभावशास्त्रप्रबलेन तेन शमेन रागादिरिवारिसंघः ॥ ७७ ॥

निहत्येति ॥ प्रभावशास्त्रप्रबलेन प्रभावशं दीप्त्यायत्तम् अस्त्रं शस्त्रं यस्य तत् प्रकृष्टं बलं यस्य तेन, नृपतिव्रजेन राजसमूहेनारिसंघस्तदीयां शत्रुसंबन्धिनीं निस्त्रिंशगतिं खड्गगतिम् । प्रभावशास्त्रप्रबलेन प्रकृष्टो भावो यस्य तादृशः शास्त्रात् प्रकृष्टं बलं यस्य तेन शमेन रागादिस्तदीयां निस्त्रिंशगतिं निर्दयप्रवृत्तिमिव । निहत्य धृतः ॥

अभूम शौर्यस्य पदं रणेऽस्मिन्नधाम धैर्यं प्रथितं वयं तत् ।
अस्थामयुक्ता इति भूमिपानां समु(मो)ह्यते स्म द्वितयेन युद्धम् ॥७८॥

अभूमेति ॥ यतो वयम् अस्थामयुक्ता असामर्थ्यसमन्विता अभूम संजाताः तत् तस्मात्कारणात् अस्मिन् रणे शौर्यस्य पदं स्थानं धैर्यं प्रथितं, न तु धाम प्रतापलक्षणतेजः इति भूमिपानां द्वितयेन युद्धम् समु(मो)ह्यते सम्यगासमन्तान्नीयते स्म ॥ भारतीये—वयं शौर्यस्य पदम् अभूम, अस्मिन् रणे, प्रथितं धैर्यं अधाम धृतवन्तः, तत् युक्ता मिलिता अस्थाम स्थितवन्त इति, समु(मो)ह्यते सम्यक् वितर्क्यते ॥

बिभ्रत्सदाशाननिरूढदीप्तिं गान्धारकोऽसिं पतितोऽधिकर्धिः ।
समारुतिः किंनरराजवन्द्यो जातोऽत्र भीमोहननाददूरः ॥ ७९ ॥

बिभ्रदिति ॥ ऊढदीप्तिं धृततेजसम् असिं खड्गं बिभ्रत् (नाभ्यस्तादिति न नुम्), गां पृथिवीं धारको भर्ता, अधिकर्धिः प्रचुरसमृद्धिः, समारुतिः मया प्रमाणेन सहिता रुतिध्वनिर्यस्य स वन्द्यः प्रशस्यः पतितः प्राप्तः स दाशाननी रावणात्मज इन्द्रजित् किं न रराज । रराजैव । अत्र रणे भीमोहननाददूरः भिया भयेन मोहनं यस्मान्नादाद्दूरो भयमोहध्वनिवर्जितः, जातः । (१) आशाननिरूढदीप्तिम् आशानां दिशाम् आनं प्राणनं यस्मात्तं निशितकान्तिम् असिम्, सदा बिभ्रत्, स मारुतिर्हनूमान् । (२) भारतीये—शा-

ननिरूढदीप्तिं शाणनिशितकान्तिम्, समारुतिः समा साधारणा आरुतिर्ध्वनिर्यस्य सः, गान्धारको दुर्योधनः । (३) सदाशाननिरूढदीप्तिं दाशानां भृत्यानाम् आनेन प्राणनेन सहिता निरूढा निशिता दीप्तिर्यस्य तमसिं बिभ्रत्, पतितः स्वामिनो युधिष्ठिरतो, अधिकाधः, समारुतिः समेषु सर्वेषु आरुतिरभयध्वनिर्यस्य, नरराजवन्द्यः नरराजेनार्जुनेन वन्द्यो वन्दनीयो, भीमो वृकोदरः अहननात् शत्रूणाममारणाद् अदूरो निकटः किं जातः । अपि तु मारणनिकटः ॥

परेऽपि ये यैर्विधृता नरेन्द्राः कैर्नावबुद्धं युधि नाम तेषाम् ।
यः कोऽपि दिग्देशकुलप्रमाणं वेवेक्ति राज्ञोऽपि परं स वेत्ति ॥८०॥

परेऽपीति ॥ यैर्नरेन्द्रैर्येऽपि परे शत्रवो नरेन्द्रा युधि विधृतास्तेषां नाम कैर्नावबुद्धम् ॥ यः कोऽपि दिग्देशकुलप्रमाणं दिशां पूर्वादीनां देशानामङ्गवङ्गकलिङ्गादीनां कुलानामिक्ष्वाकुसूर्यादीनां प्रमाणं वेवेक्ति जानाति, स परं केवलं राज्ञोऽपि वेत्ति ॥

आपृच्छमाना इव नादवत्त्वान्निरोद्धुकामा इव विप्रयोगात् ।
सोच्छ्वासकैरुच्छ्वसतां प्रियाणां प्राणा नृणां कण्ठगता बभूवुः ॥ ८१ ॥

आपृच्छेति ॥ सोच्छ्वासकैरुच्छ्वसतां नृणां प्राणा नादवत्त्वादापृच्छमानाः प्रश्नं कुर्वाणा इव प्रियाणां विप्रयोगात् निरोद्धुकामा इव, कण्ठगता बभूवुः ॥

असृग्वसामांसरसेन भग्ना मस्तिष्कमुन्मग्नकपालशल्कम् ।
आस्वाद्य तद्दाधिककल्पमल्पा लेभे रुचिर्भग्नमुखैः पिशाचैः ॥ ८२ ॥

असृगिति ॥ भग्नमुखैरपाटववदनैः पिशाचैर्दाधिककल्पमीषदसमाप्तं दध्ना संस्कृतम्, उन्मग्नकपालशल्कम् उन्मग्नं पूरितं कपालस्य शुल्कं खण्डं येन तत्, मस्तिष्कं शिरोमेद आस्वाद्य असृग्वसामांसरसेन भग्ना अल्पा रुचिर्लेभे ॥

भुवि दिशि दिवि कश्चिद्यः समज्ञानतृप्तः
सपदि हरिविधानं यातुधानः सुरो वा ।
परिततसुमनास्तं विक्रमं धाम धैर्यं
विपुलपुलकिताङ्गस्तत्र तुष्टाव तुष्टः ॥ ८३ ॥

भुवीति ॥ यः कश्चित् भुवि दिशि दिवि मज्ज्ञा मज्जया न तृप्तः स परिततसुमनाः प्रसृतचेता विपुलपुलकिताङ्गः प्रचुररोमाञ्चितशरीरस्तुष्ट आनन्दितो यातुधानः यः कश्चित् भुवि दिशि दिवि समज्ञानतृप्तः समेन ज्ञानेन तृप्तः (एकानेकजकारभेदेऽप्यत्र जकारस्य द्वित्वेन 'न व्यञ्जनपरस्य' इत्यादिभाष्यसूचितश्रुतिसाम्येन वा न दोषः) परिततसुमनाः विस्तृतकुसुमः । कृतपुष्पवृष्टिरिति भावः । स सुरो देवश्च, तत्र सङ्ग्रामे, हरिविधानं हरेर्नारायणाद्विधानं क्रिया यस्य तादृशं विक्रमं पराक्रमं, धाम प्रतापं, धैर्यं तुष्टाव । मालिनी ॥

इहावापत्कीर्तिं हरिदवधिमन्यत्र समया-
न्निलिम्पानां बालां मम पतिरितीवोत्सवभरात् ।
स्वदेहं नृत्यन्तं सह सुरवधूभिः परनृपा
विमानस्योत्सङ्गे ददृशुरधिकं विस्मितदृशः ॥ ८४ ॥

इहावेति ॥ परनृपाः शत्रवः सुरवधूभिर्देवाङ्गनाभिः सह विमानस्योत्सङ्गे अधिकं विस्मितदृश आनन्दविस्फारितलोचनाः सन्तः । मम पतिरिह हरिदवधिं हरित एवावधिर्यस्यास्तां कीर्तिम्, अन्यत्र देवलोके निलिम्पानां देवानां बालामङ्गनाम् अवापत् प्रापदितीवोत्सवभरान्नृत्यन्तं नटन्तं स्वदेहं ददृशुः । शिखरिणी ॥

पतितसकलपत्रा तत्र कीर्णारिमेदा
वनततिरिव रुग्णा सामजैर्भूमिरासीत् ।
निहतनिरवशेषा स्वाङ्गशेषावतस्थे
कथमपि रिपुलक्ष्मीरेकमूला लतेव ॥ ८५ ॥

पतितेति ॥ तत्र पतितसकलपत्रा प्रभ्रष्टसमस्तवाहना परिभ्रष्टसंपूर्णच्छदा कीर्णारिमेदा-कीर्णं प्रसृतम् अरीणां मेदो यस्यां सा कीर्णविट्खदिरा, भूमिः । वनततिरिव । सामजैर्गजै रुग्णा भग्ना आसीत् । तथा निहतनिरवशेषा ध्वस्तचतुरङ्गबला, परिक्षीणफलकुसुमाद्यवयवा । स्वाङ्गशेषा रिपुलक्ष्मीः । एकमूला लतेव । कथमपि अवतस्थे । मालिनी ॥

सामाजिकैर्नृपजनैः पिशिताशिवर्गैः
शैलूषतामुपगतैश्च कबन्धपात्रम् ।
नृत्यं शिवारुतमृदङ्गरवं निरूप्य
संगृह्य वन्दिमविशञ्शिबिरं हरीशाः ॥ ८६ ॥

सामाजिकैरिति ॥ हरीशा वानरेन्द्रा यादवाश्च नृपजनैः सामाजिकैः सद्भिः पिशिताशिवर्गै राक्षससमूहैः शैलूषतां नटताम् उपगतैः सद्भिः कबन्धपात्रं कबन्धान्येव रुण्डानि एव पात्राणि नर्तका यत्र तादृशं शिवारुतमृदङ्गरवं शिवारुतमेव मृदङ्गरवो यत्र तादृशं नृत्यं निरूप्य दृष्ट्वा वन्दिं वन्दिजनं स्तावकं संगृह्य हिरण्यादि दत्त्वा शिबिरं सेनानिवेशस्थानम् अविशन् प्रविष्टाः । वसन्ततिलका ॥

वाराङ्गना ननृतुरुत्पतिताः पताकाः
कुन्तीव्रतैकधृतिराप तदा महर्धिम् ।
लक्ष्मीधरो निलयमुज्ज्वलदृश्यसेव्यः
सश्रीधनंजयचिताश्वबलो विवेश ॥ ८७ ॥

वाराङ्गनेति॥तदा वाराङ्गना ननृतुः, पताका उत्पतिता उच्छ्रिताः, तीव्रतैकधृतिः तीव्रतायामेका धृतिर्यस्य स उज्ज्वलदृश्यसेव्य उज्ज्वलद्भिर्ऋश्यैर्मृगविशेषैः सेव्यो जयचिताश्वबलो जयेन चितमश्वानां बलं येन जयचितमश्वबलं यस्य वा स लक्ष्मीधरो लक्ष्मणो महर्धिं महती ऋद्धिर्यत्र तां महतीमृद्धिमेव वा कुं पृथ्वीम् आप प्राप निलयं गृहं विवेश॥ भारतीये—व्रतैकधृतिर्व्रत एवैका धृतिर्यस्या सा कुन्ती महर्धिम् आप । सश्रीधनंजयचिताश्वबलः श्रियोपलक्षितेन धनंजयेनार्जुनेन चिता अश्वा येन तादृशा बलेन बलभद्रेण च सहित उज्ज्वलदृश्यसेव्य उज्ज्वलतया दृश्यः सेव्यश्च लक्ष्मीधरो नारायणः ॥

इति धनंजयकविविरचिते धनंजयाङ्के राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये सङ्ग्रामव्यावर्णनो नाम षोडशः सर्गः ।

---

सप्तदशः सर्गः ।

अथ संयुगं सुतरसाप्तयुगमरिरपश्चिमो हरेः ।
कालमिव समधिरुह्य रथं तमकालचक्रगतिचक्रमाविशत् ॥ १ ॥

अथेति ॥ अथ हरेरपश्चिमः आद्यो हरेरारिः शत्रू रावणो जरासंधश्च । सुतरसाप्तयुगं सुतैरिन्द्रजिदादिभिः पुत्रै रसेन स्नेहेन आप्तं युगं धुरा यस्य तं, सुतरं मनोवेगं साप्तमाश्वं युगं यस्य तम् । अकालचक्रगतिचक्रम् अकालचक्रस्य प्रलयकालस्येव गतिः प्रवृत्तिर्ययोस्ते चक्रे यस्य तं, रथम् । कालं मृत्युम् इव । अधिरुह्य संयुगं युद्धम् आविशत् । उद्गतावृत्तम् ॥

अशिरः शवं शरणमेप विशति कवचं बिभर्ति यः ।
प्राणविनिमयमयं हि यशः सुलभं भवेदिति स वर्म नाददे ॥ २ ॥

अशिर इति ॥ स शत्रुः यः कवचं बिभर्ति, एषोऽशिरः शवं शरणं विशति । यशः प्राणविनिमयमयं प्राणविक्रयनिर्वृतं हि एव सुलभं भवेत् इति हेतोः वर्म संनाहं न आददे॥

तमधूममग्निमिव दृष्टिविषमिव विमुक्तकञ्चुकम् ।
नागमिव विगतवक्रपटं बलवर्जितं ददृशुरूर्जितं सुराः ॥ ३ ॥

तमेति ॥ सुरा बलवर्जितं सैन्यरहितमूर्जितं प्रौढं तमरिम्, अधूममग्निमिव, विमुक्तकञ्चुकमपास्तनिर्मोकं दृष्टिविषं सर्पविशेषमिव, विगतवक्रपटमपाकृतवदनाच्छादनं नागं गजमिव, ददृशुः ॥

तनुरक्षमा परिणतेव कुपितमपि हेतिरूपताम् ।
यातमिव निशितशस्त्रमपि ज्वलनात्मतां गतमिवास्य चक्रिणः ॥ ४ ॥

तनुरिति ॥ अस्य चक्रिणः । तनुः शरीरम्, परिणता वृद्धवनिता इव, अक्षमा क्रोध-

रूपा अशक्ता, कुपितं हेतिरूपतां शस्त्ररूपतां वह्निज्वालारूपतां वा यातमिव, निशितशस्त्रं ज्वलनात्मतां गतम् इव, अभूत् ॥

स रुषायुधं विषमिवाहिरशनिमिव तोयदोऽसृजत् ।
क्षौद्रपटलपतितैरिव तच्छरघैः शिरस्त्रनिवहैर्मही बभौ ॥ ५ ॥

स इति ॥ स रुषा क्रोधेन आयुधं शस्त्रजातम् । अहिः सर्पो विषमिव, तोयदो अशनिमिव, असृजत् । तत्तस्मात् मही शिरस्त्रनिवहैः क्षौद्रपटलपतितैर्मधुच्छत्रच्युतैः शरघैर्मधुमक्षिकाभिरिव, बभौ ॥

दहनास्त्रपाणिरपमूर्धं विदधदरिसैन्यमाजनुः ।
वेद न भयरसमित्यशिरः पुरतः स दिव्यमधृतेव नाकिनाम् ॥ ६ ॥

दहनेति ॥ स दहनास्त्रपाणिः सन्, अपमूर्धमपगतमस्तकम् अरिसैन्यं विदधत् सन्, आजनुराजन्म भयरसम् न वेद वेद्मि इति अशिरः न शिरः प्रधानं यस्मात्तादृशं दिव्यं दिवि भवं स्वशरीरं नाकिनां पुरतः अधृत इव ॥

अनुजं तु मृत्युमिव हन्तुमसुमभिजिहानमारुधत् ।
तीव्रमन्धतमसमभ्युदयै रथवाहनेन सवितेव केशवः ॥ ७ ॥

अनुजमिति ॥ केशवो लक्ष्मणस्तीव्रं सोढुमशक्यम्, हन्तुमिवाभ्युदयैर्गजवाज्यादिलक्षणविभूतिभिरभिजिहानं संमुखमायान्तं मृत्युमिव अमुं रावणं तु पुनरनुजं कुम्भकर्णं रथवाहनेन रथाश्वेन । सविता सूर्योऽभ्युदयैः किरणसंदोहलक्षणविभूतिभी रथवाहनेनान्धतमसमिव, आरुधत् ॥ भारतीये—केशवो नारायणः । अमुं जरासंधम् ॥

चिरमेष चेतसि निरुद्धमुदितमिव मन्त्रमग्रतः ।
प्रेतपतितनृपकोपचयं निचितं पुनः परिभवादिवैक्षत ॥ ८ ॥

चिरमिति ॥ एष नारायणः पुनश्चेतसि चिरं निरुद्धं मन्त्रमिव अग्रत उदितमरिं परिभवात् निचितं संभृतं प्रेतपतितनृपकोपचयं प्रेतानां पतितानां नृपाणां कोपस्य चयमिव । ऐक्षत ॥

प्रियसंगमात्प्रथमसङ्गमरिक्तमबोधि सोऽधिकम् ।
वृन्दमलघु सुहृदो महतां द्विषता हि कीर्तिरतुला तु जायते ॥ ९ ॥

प्रियेति ॥ सोऽरिक्तं प्रथमसंङ्गं प्रियसंगमादधिकमबोधि । हि यतो महतां सत्पुरुषाणां सुहृदो मित्रीयं वृन्दम् अलघु भवति, तथापि द्विषता कीर्तिरतुला जायते ॥

निजपौरुषं हि पुरुषस्य कवचमिह कस्य संवृतिः ।
भानुमत इव न हन्ति रुचिं घनदेहबन्धनमयीति नामवीत् ॥ १० ॥

निजेति ॥ निजपौरुषमेव पुरुषस्य कवचं स्यात् । घनदेहबन्धनमयी अत्यन्तशरीरब-

न्धनमयी मेघशरीरमयी संवृतिः कस्य। भानुमतः सूर्यस्येव। रुचिं न हन्ति इति हेतोः इह सङ्ग्रामे (स नारायणः कवचम्) न अमवीत् बध्नाति स्म॥

उदयाद्विभूतिरिव भोगगतिरिव नयात्प्रसादतः।

सर्वधृतिरिव परं पुरुषं जयदेवता गणतिथावृत स्वयम्॥ ११॥

उदयादिति॥ गणतिथा गणपूरणा जयदेवता जयश्रीः स्वयमात्मना परं पुरुषं पुरुषोत्तमं लक्ष्मणं विष्णुम् 'उदयात् विभूतिरिव, नयात् भोगगतिर्विभूतिविषया प्रवृत्तिरिव, प्रसादतो नयविषयप्रसन्नतायाः सर्वधृतिः समस्तसंतोष इव, अवृत वृतवती॥

ध्वजमारुरोह गरुडोऽस्य रणमिव दिदृक्षुरुच्चकैः।

ध्मातुमिव कुपितवह्निमयं हृदि पाञ्चजन्यमुदपूरि वैरिणः॥ १२॥

ध्वजमिति॥ गरुडो रणं दिदृक्षुरिव, अस्य नारायणस्योच्चकैरुच्चतरं ध्वजम् आरुरोह। तथा अयं नारायणो वैरिणो हृदि कुपितवह्निं ध्मातुमिव पाञ्चजन्यम् उदपूरि॥

निनदेन तस्य मिहिरस्य शरभ इव संमुखं रिपुः।

प्राप्य कणयनिकरेण रथं परतो युगद्वयसमभ्यदुद्रुवत्॥ १३॥

निनदेनेति॥ रिपू रावणो जरासंधश्च तस्य पाञ्चजन्यस्य 'शरभो मिहिरस्य मेघस्येव' निनदेन ध्वनिना संमुखं प्राप्य कणयनिकरेण बाणसमूहेन रथं युगद्वयसम्।'प्रमाणे द्वयसच्'। परतः पश्चादभ्यदुद्रुवदपसारितवान्॥

स्वरुषा सहोच्छ्वसितसूतगतिरथ हरिश्च कम्पनैः।

तस्य भुजमिव सदाशरथी रणशान्तिमिच्छुरिव केतुमच्छिदत्॥ १४॥

स्वरुषेति॥ अथ स्वरुषा निजकोपेन सह उच्छ्वसितसूतगतिरुच्छ्वसिता सूतस्य सारथेर्गतिर्येन, स दाशरथी रामो हरिर्लक्ष्मणश्च रणशान्तिमिच्छुरिव तस्य रावणस्य केतुं ध्वजम् 'भुजमिव' कम्पनैर्बाणैराच्छिदत॥ भारतीये—उच्छ्वसितसूतगतिरुच्छ्वसितभटगतिः, सदाशरथी सती समीचीना आशा वाञ्छा येषां ते रथिनो यस्य स हरिर्नारायणः। चोऽवधारणे क्रियान्वयी॥

धवलातपत्रमपि तस्य हतमपतदिन्दुमण्डलम्।

द्रष्टुमुपगतमिवाजिमतः परुषं रिपुः प्रतिजगर्ज तर्जयन्॥ १५॥

धवलेति॥ (तेन हरिणा) तस्य रिपोर्धवलातपत्रं श्वेतच्छत्रमपि। आजिं सङ्ग्रामं द्रष्टुमुपगतमिन्दुमण्डलं चन्द्रबिम्बमिव। हतम्। अतः कारणाद् रिपुः परुषं तर्जयन् सन् प्रतिजगर्ज॥

विमुखः फलं विधिरिवाशु खल इव कृतं स तं यशः।

लोभ इव मद इवोपशमं गुरुशक्तिशस्त्रमरुजन्नियोजयन्॥ १६॥

विमुख इति ॥ स रावणो गुरु अनिर्वारं शक्तिशस्त्रं शक्तिसंज्ञशस्त्रं नियोजयन् सन्, तं लक्ष्मणम्, विमुखो विधिः फलमिव, खलः कृतमुपकारमिव, लोभो यश इव, मद उपशममिव, आशु शीघ्रम् अरुजत् तुतोद ॥ भारतीये—स जरासंधः । तं नारायणम् । गुरुशक्ति गरिष्ठसामर्थ्यम् । शस्त्रम् ॥

विवशोऽपि चित्रमवलोकमयमवगमं च नामुचत् ।
येन तिमिरमभितो ददृशे कमलोदरेण विविदे न वेदना ॥ १७ ॥

विवश इति ॥ येन कारणेन कमलोदरेण विष्णुना तिमिरम् अभितो ददृशे, वेदना न विविदे । तेन विवशः परवशोऽपि सन्नयं नारायणो अवलोकं दृष्टिम् अवगमं ज्ञानं च न अमुचत् ॥

विधुतव्यथः क्षणमवाप युधि न किमु माधवोऽहितम् ।
दाशरथिरविरतः प्रहरन्निलयं कुलस्य सहसाररक्षसः ॥ १८ ॥

विधुतेति ॥ उमाधवः कीर्तिप्रियो दाशरथी रामो विधुतव्यथस्त्यक्तपीडः सन्नविरतोऽनिवृत्तः सन् सहसाररक्षसः सबलिष्ठराक्षसस्य कुलस्य रावणस्य निलयं प्रहरन् किम् अहितं शत्रुं युधि क्षणं न अवाप । अपि तु प्राप । अथवा रक्षसः कुलस्य निलयं सहसा आर ॥ भारतीये—दाशरथिरविर्दाशो धूर्तो रथी सारथिर्यस्य तादृग् रविः सुविधानप्रकाशनात् । माधवो विष्णुः किमु हितं नावाप अवापैव । अतः कारणात् स प्रहरन् कुलस्य निलयं सहसा ररक्ष ॥

सदृशौ बलेन समकालमधिकृतजयौ निजोद्धती ।
पुण्यदुरितनिचयाविव तौ व्यतिरेधतुर्नतु जवाद्व्यतीयतुः ॥ १९ ॥

सदृशाविति ॥ बलेन सदृशौ, समकालम् अधिकृतजयावङ्गीकृतजयौ निजोद्धती निजात्मीयोद्धतिर्ययोस्तौ तौ रामरावणौ कृष्णजरासंधौ वा पुण्यदुरितनिचया इव व्यतिरेधतुरन्योन्यं प्रहृतवन्तौ । नतु जवाद्वेगाद्व्यतीयतुः ॥

विरथश्चिरेण विहितोऽपि विततधनुषामुना रिपुः ।
जातमिव बहुसुखं सुकृतं विविधं स मूलविभुजं व्यलङ्घयत् ॥ २० ॥

विरथ इति ॥ विततधनुषा अमुना नारायणेन चिरेण बहुकालेन विरथो रथरहितः विहितोऽपि स रिपुर्विविधं नानाप्रकारं बहुमुखं प्रचुरकारणं जातं समुत्पन्नं सुकृतमिव मूलविभुजं रथं व्यलङ्घयत् ॥

अवलोकितुं हरिविघातमसह इव गन्तुमुद्यतः ।
संख्यरुधिरमवलोक्य चिरं स मदादपप्तदिव तीव्रगुः सदा ॥ २१ ॥

अवलोकितुमिति ॥ हरिविघातम् अवलोकितुम् असह इव गन्तुमुद्यतस्तीक्ष्णगुः सः सूर्यश्चिरं संख्यरुधिरम् अवलोक्य सदा मदाद् इवापप्तत् ॥

स विपन्नबन्धुमुपदृश्य नृपजनमशेषमंशुमान् ।
दुःखजलमवतरीतुमिव प्रतिपश्चिमार्णवतटं व्यलम्बत ॥ २२ ॥

स इति ॥ सोंऽशुमान् । विपन्नबन्धुं मृतबन्धुमशेषं नृपजनमुपदृश्य दृष्ट्वा दुःखजलं दुःखमेव जलम् अवतरीतुमिव । पश्चिमार्णवतटं पश्चिमसमुद्रतीरं प्रति व्यलम्बत ॥

सवितापि संहृतिमियाय नियतदिवसातिलङ्घनः ।
हन्त किमु किल निषेकदिनं जगति व्यतिक्रमितुमक्षमो जनः ॥ २३ ॥

सवितेति ॥ नियतदिवसातिलङ्घनो निश्चितदिनातिक्रमः सविता सूर्योऽपि संहृतिं संहारम् इयाय गतवान् । हन्त कष्टम्, किल निश्चये, किमु अहो जगति लोके जनो निषेकदिनं मरणदिनं व्यतिक्रमितुमुल्लङ्घितुमक्षम इति किमाश्चर्यम् । यत्र सूर्योऽपि संहारं गतः तत्र प्राकृतस्य का कथेति भावः ॥

गतवत्यरौ तमनुमत्य परमपुरुषं महोदयैः ।
व्याप्य निशिततमसंप्लवगैः स्थितमर्जुनप्रकृति तत्र राजकम् ॥ २४ ॥

गतेति ॥ तत्र रणे, राजकं सुग्रीवप्रभृति, अरौ रावणे गतवति सति, निशिततमसं तीक्ष्णतिमिरं विनष्टचेतनं तं परमपुरुषं लक्ष्मणमनुमत्य ज्ञात्वा महोदयैः प्लवगैर्व्याप्य वेष्टयित्वा अर्जुनप्रकृति शुद्धप्रकृति यथा स्यात्तथा स्थितम् ॥ भारतीये—अर्जुनप्रकृति मध्यमपाण्डवप्रधानमसंप्लवगैः शिष्टवारयोगैर्महोदयैस्ततं व्याप्तं, राजकम्, निशि तं परमपुरुषं विष्णुम् अनुमत्य व्याप्य वेष्टयित्वा ॥

न किलास्ति कोऽप्यवनिमानमवगत इतीरितोद्यमः ।
पादपरिगणनया भुवनं रविरेष मित्सुरिव दूरमत्यगात् ॥ २५ ॥

न किलेति ॥ एष रविः 'किल निश्चये कोऽपि अवनिमानं न अवगतोऽस्ति' इति हेतोरीरितोद्यमः सन् पादगणनया भुवनं मित्सुरिव दूरं यथा स्यात्तथा अत्यगात् ॥

सदृशोदयास्तमयवृत्तिरजनि तपनोऽनुरागतः ।
संपदियमिह विपच्च परं परिवर्तते नहि महीयसः स्थितिः ॥ २६ ॥

सदृशाविति ॥ तपनः सूर्योऽनुरागतोऽनुरागवशात् सदृशोदयास्तमयवृत्तिः सदृशा तुल्या उदयास्तमययोर्वृत्तिर्यस्य तादृग् अजनि । हि यतः—इह लोके इयं संपत् विपच्च परं परिवर्तते । महीयसः स्थितिर्न परिवर्तते ॥

क्षतजप्रवाहनिवहस्य समरभुवि सर्पतो दिशः ।
रागपटलमधिरूढमिव द्युतलानि सांध्यमरुणं बभौ महः ॥ २७ ॥

क्षतजेति ॥ सांध्यं संध्याभवम् अरुणं रोहितं महः 'समरभुवि दिशः आशाः सर्पतो

गच्छतः, क्षतजप्रवाहनिवहस्य रक्तपूरसमूहस्य द्युतलानि गमनतलानि अधिरूढं रागपटलम् इव' बभौ शोभितम् ॥

अथ वारुणीरुचिरभाजि न परममुनाम्बरस्थितिः ।
क्वापि रविरवपतन्भविता तदितीव तद्गतमगामि संध्यया ॥ २८ ॥

अथेति ॥ अथ संध्याप्रवेशानन्तरम् अमुना रविणा वारुणीरुचिः पश्चिमाशादीप्तिः परं केवलं न अभाजि सेविता । अम्बरस्थितिर्गगनस्थितिः । तथा रविः क्वापि अवपतन् भविता । अत्र लुप्तोपमा । यथा मद्यपेन वारुणीरुचिर्मदिराभिलाषः न अभाजि भग्ना । तथा अम्बरस्थितिर्वस्त्रस्थितिरभाजि भग्ना । तथा क्वापि अवपतन् भविता इति हेतोः तत्तदनन्तरं संध्यया तद्गतं सूर्यगमनम् अगामि इव ॥

परतस्तमांसि पुरतोऽस्य सवितुरभवन्महोद्यमः ।
दिग्विजयमधिकरोति किमु क्षुभितं हि पश्चिममचिन्तयन्प्रभुः ॥ २९ ॥

परत इति ॥ अस्य सवितुः पुरतोऽग्रे महोद्यमोऽभवत् । परतः पश्चात् तमांसि अभवन् । युक्तमेतत् । हि यतः—उ अहो क्षुभितं पश्चिमम् अचिन्तयन् अवितर्कयन् प्रभुर्दिग्विजयम् अधिकरोति किम् । अपि तु न ॥

उपवन्यभूम्युपगिरं च दिवसमुपलाय वाहयत् ।
प्राप तिमिरमुरुमभ्युदयं किल कं न यापयति दुर्गयापना ॥ ३० ॥

उपेति ॥ तिमिरं तम उपवन्यभूमि कान्तारसमीपम् उपगिरं गिरिसमीपम् उपलाय लीनो भूत्वा दिवसं दिनं वाहयत् अतिलङ्घमानं सत् उरुं गरिष्ठम् अभ्युदयं प्राप । किल दुर्गयापना दुर्गमनिका कं न यापयति अतिक्रामति ॥

द्युमणौ प्रतापिनि गतेऽस्तमभयचिरसंगमात्तमः ।
श्लिष्यदिव घनमशेषमभूत्प्रलयः प्रियो हि खरदण्डतोषिणः ॥ ३१ ॥

द्युमणाविति ॥ प्रतापिनि द्युमणौ सूर्येऽस्तंगते सति घनं तमोऽशेषं श्लिष्यद् आलिङ्गदिवाभूत् । हि यतः खरदण्डतोषिणस्तीव्रदण्डतोषिणः कमलतोषिणः प्रलयः प्रियो भवति । तीव्रदण्डत्वात् ॥

निजदुःसुतं कुलमिवाशु गुरुगृहमिवायथोद्यतम् ।
राज्यमिव समुदितव्यसनं भुवनं परास्तमवबद्धतामसम् ॥ ३२ ॥

निजेति ॥ अवबद्धतामसं स्वीकृततमोविकारं भुवनं जगद् आशु शीघ्रं निजदुःसुतं निजो दुष्टः सुतो यत्र तत् कुलम् इव, अयथोद्यतमसदाचारं गुरुगृहम् इव, समुदितव्यसनं संप्राप्तदुःखं राज्यम् इव परास्तं प्रक्षिप्तम् ॥

कृतमुच्छ्रितं तदनुदात्तमधरतरमुच्चमाहतम् ।
क्वाप्यजनि न च विवेकमतिः कुनृपैकचेष्टितमिवाभवत्तमः ॥ ३३ ॥

क्रुतेति ॥ तमसा यत्पूर्वम् उच्छ्रितमुच्चं तदनुदात्तमधरतरम् यदधरतरं तदुच्चमादृतं कृतम्। तथा क्वापि विवेकमतिर्भेदमतिर्नाजनि। तथा च तमः कुनृपैकचेष्टितमिवाभवत् ॥

पुरतः स्थितं परिचितं च निकटतिमिराहतेक्षणः।
जात इव धनमदान्ध इव क्वचनापि कोऽपि न जनोऽभ्यचायत ॥३४॥

पुरत इति ॥ कोऽपि जनः क्वचन अपि 'निकटतिमिराहतेक्षण आसन्नतिमिराभिभूतलोचनो जात इव, धनमदान्ध इव' परिचितमपि पुरतः स्थितं न अभ्यचायत ईक्षितवान् ॥

इति दिग्विमूढमिव तत्र गिरिषु दरिषु स्खलत्पतत्।
व्याप हृतमिव तमस्तमसा तदशेषमग्रजवपूरणोद्यतम् ॥ ३५ ॥

इतीति ॥ तदशेषं तमः इत्येवंप्रकारेण तत्र रणे दिग्विमूढं भ्रान्तमिव गिरिषु स्खलत् दरिषु गर्तासु पतत् भ्रंसमानं रणोद्यतम् अग्रजवपू रामशरीरं तमसा कोपेन हृतं गृहीतमिव व्याप॥ भारतीये—अग्रजवपूरणोद्यतम् प्रधानवेगस्य पूरणे उद्यतमुद्यमो यस्य तत् अशेषम् ॥

मिलिताङ्गदंपतिसुखाय सहितजनकीयनन्दनम्।
व्योम्नि गमनमकृत त्वरितः स शनैरवाल्लघुरयाच्च मारुतः ॥ ३६ ॥

मिलितेति ॥ स मारुतो हनुमांस्त्वरितः सन् शनैरवान्मन्दध्वनेः, लघुरयात्क्षिप्रवेगात् च पतिसुखाय लक्ष्मणसुखनिमित्तं मिलिताङ्गदं मिलितोऽङ्गदो यत्र तत् सहितजनकीयनन्दनं सहितो मिलितो हितसहितो वा जनकीयनन्दनो भामण्डलो यत्र तद् व्योम्नि गमनम् अकृत॥ भारतीये—मारुतो वायुर्मिलिताङ्गदंपतिसुखाय आलिङ्गितशरीरस्त्रीपुंससुखनिमित्तं सहितजनकीयनन्दनं सहितं सप्रेम जनकीयं नन्दनमाह्लादनं यस्मात् तत् ॥

भरतः स्थितः स खलु यत्र तदिदमथवातिरागतः।
स्थानमसुखमलिनो न्यगदन्नलिनोदरं निशि निबद्धमीलनम् ॥ ३७ ॥

भरत इति ॥ यत्र खलु भरतः कैकयीपुत्रः स्थितः तदिदं स्थानम् असुखमलिनो दुःखम्लानो वातिर्हनुमान् आगतः। निबद्धमीलनं नलिनोदरं लक्ष्मणं न्यगदत् कथितवान् ॥ भारतीये—(स मारुतः) यत्र अतिरागतोऽत्यन्तप्रीतेः सोऽलिर्भ्रमरः, भरतः तत्परतया स्थितः तदिदं अलिनो भ्रमरस्य स्थानं निशि निबद्धमीलनं प्राप्तसंकोचम्, नलिनोदरं कमलकोशम्, असुखं यथा स्यात्तथा न्यगदत् ॥

भुवि कोकनिष्ठ इव तत्र सहजपरिपीडनोऽभवत्।
यः स तपनपरितापगुणः स्वयमस्तमेत्यसह एवमुद्यतः ॥ ३८ ॥

भुवीति ॥ तत्र भुवि समरभुवि यः सहजपरिपीडनो भ्रातृपरिपीडनः, तपनपरितापगुणः तपनस्य सूर्यस्येव परितापगुणः, अभवत्। एवं सहजपीडां नाशं नेष्यामीत्यङ्गीकारे

उद्यतः, असहोऽसहिष्णुरिव कः सोऽकनिष्ठो महान् स्वयम् अस्तम् एति ॥ भारतीये—तत्र भुवि कोकनिष्ठश्चक्रवाकतत्परः, सहजपरिपीडनो निसर्गपरिपीडकः, तपनपरितापगुणः सूर्यस्य सर्वजगद्व्यापी तापगुणः अभवत् । स स्वयं एवं कं विनाशं नेष्यामीत्यङ्गीकारे उद्यतः अस्तमसह एति ॥

विनिवार्य तं निजकरेण निशि गुरुतमोऽभिमातुलम् ।
प्राप विधुरपटुरभ्युदयं महसाञ्जनोऽस्य स तुतोष सङ्गतः ॥ ३९ ॥

विनिवेति ॥ गुरुतमो गरिष्ठो विधुरपटुर्दुःखस्फोटनदक्ष आञ्जनो हनुमान् निजकरेण स्वहस्तेन तं भरतं विनिवार्य संबोध्य अभिमातुलं मातुलं द्रोणाचलं अभिलक्ष्य निशि महसा तेजसा अभ्युदयं प्राप । स द्रोणश्च अस्य सङ्गत आञ्जनेयसङ्गात् तुतोष ॥ भारतीये—अपटुरपूर्णः विधुश्चन्द्रः अभिमा परिच्छेदकेन ('आतो धातोः' इत्याकारलोपः) निजकरेण स्वीयकिरणेन गुरु गरिष्ठं तमोऽन्धकारं विनिवार्य तं महसां तेजसाम् अभ्युदयम् प्राप । स जनः, अस्य चन्द्रस्य सङ्गतः सङ्गात् तुतोष ॥

स वामङ्क्षुद्रोणोरुचितमुदयात्संमुखगते
विधौ रागोद्रेकं धृतवति तमोघैकनिलयः ।
कथंचिच्चित्तस्य स्थितिमिव विशल्यां प्रहितवा-
न्विहातुं शक्यात्मप्रकृतिरनुबद्धा नहि सुखम् ॥ ४० ॥

स इति ॥ ओघैकनिलयो जलस्यैकस्थानं स द्रोणः, उदयात् संमुखगते विधौ दैवे रुचितं शोभितं तं रागोद्रेकं धृतवति सति, विशल्यां सुन्दरीं चित्तस्य स्थितिम् इव, मङ्क्षु शीघ्रं वा एव प्रहितवान् ॥ भारतीये—अघैकनिलयः पापैकमन्दिरम् स क्षुद्रस्तस्करजनोऽणोः स्वल्पात् उदयात् उचितं योग्यं वामं प्रतिकूलं धृतवति विधौ चन्द्रे संमुखगते सति चित्तस्य विशल्यां शङ्कुकर्मरहितां स्थितिं तम इव प्रहितवान् । युक्तमेतत् हि यतः अनुबद्धा आत्मप्रकृतिः सुखं यथा स्यात्तथा विहातुं न शक्या ॥ शिखरिणी ॥

विधुतोऽभ्युदितो दिगन्तरं परितस्ताररुचा तया ततः ।
निशि शत्त्युदयः पराद्युतिः कियती नाम न हन्त्युपप्लवम् ॥ ४१ ॥

विधुत इति ॥ ततोऽनन्तरं परितः सामस्त्येन ताररुचा शुभ्रदीप्त्या तया विशल्यया विधुतो निराकृतः शत्त्युदयः शक्तेरायुधविशेषस्योदयः निशि तस्यामेव दिगन्तरमाशान्तरालमभ्युदितः लक्ष्मणं त्यक्त्वा गतवान् । युक्तमेतत् । कियती परोत्कृष्टा द्युतिः कान्तिरुपप्लवमन्धतमसं न हन्ति ॥ भारतीये—ततस्तस्माल्लोकोत्तराद् विधुतश्चन्द्रादभ्युदितः समुत्पन्नः शत्त्युदयः सामर्थ्योदयस्तया लोकोत्तरया रुचा कान्त्या निशि रात्रौ दिगन्तरं परितस्तार प्रच्छादितवान् ॥ वैतालीयं छन्दः ॥

परिमोह्यमाणमाशयं व्यसनाम्भोधिमिवोत्तरंस्तमः ।
सुखरोचिरतः सलक्ष्मणः क्षणमुल्लाघ इवोदतिष्ठत ॥ ४२ ॥

परीति ॥ सुखरो दृढप्रहारी, स लक्ष्मणः सौमित्रिः आशयं चेतः परिमोह्यमाणं व्यसनाम्भोधिं व्यसनसागरमिव तमः अन्धकारमज्ञानम् उत्तरन् सन् अचिरतः शीघ्रमेव क्षणं मुहूर्तात् 'उल्लाघो निरामय इव उदतिष्ठत् उत्तिष्ठते स्म ॥ भारतीये—अतोऽनन्तरम् सलक्ष्मणः सलाञ्छनः सुखरोचिश्चन्द्रः, तमोऽन्धकारम् ॥

निजपूर्वया रुचिरपाण्डुरुचा परमाशयौषधिपतिंवरया ।
तमवाप्य कान्तमधिकं रुरुचे न महस्विसंगतिषु कस्य रुचिः ॥ ४३ ॥

निजेति ॥ निजपूर्वया निजपूर्वोपार्जितया रुचिरपाण्डुरुचा मनोहरविषदकान्त्या परमाशयोत्कृष्टवाञ्छयौषधिपतिंवरया विशल्याख्यौषधिरूपकन्यया तं कान्तम् अवाप्य प्राप्य अधिकं रुरुचे । महस्विसंगतिषु कस्य न रुचिः ॥ भारतीये—वरयोत्कृष्टया आशया दिशया परमुत्कृष्टम्, ओषधिपतिं चन्द्रम् ॥ प्रमिताक्षरा ॥

स हरिन्नवोदयमुदीक्ष्य जनश्चिरचन्द्रहासभयविह्वलितः ।
निजकृत्यनिर्वहणभारमितः समुदश्वसीन्निशि कवोष्णमसौ ॥ ४४ ॥

स इति ॥ चिरचन्द्रहासभयविह्वलः चिरश्चिरमाचक्षाणश्चन्द्रहासः खड्गो यस्य तस्माद्रावणाद्भयेन विह्वलः, असौ स जनो नवोदयं नवोत्थितं हरिं लक्ष्मणम् उदीक्ष्य प्रेक्ष्य निजकृत्यनिर्वहणभारमात्मकार्यनिर्वाहभारम्, इतो गतः, निशि कवोष्णं यथा तथा समुदश्वसीत् ॥ भारतीये—चिरचन्द्रहासभयविह्वलश्चिरमाचक्षाणचन्द्रज्योत्स्नाभयविह्वलो हरिन्नवोदयं हरित्सु दिक्षु नव उदयो यस्य तं प्रकरणाच्चन्द्रम् ॥

दारुण्यमात्मन्यनुशय्य तीव्रं स्वतापतप्तां दयया धरित्रीम् ।
निर्वृत्य निर्वापयितुं हिमांशुव्याजेन शीतोऽभ्युदयादिवार्कः ॥ ४५ ॥

दारुण्येति ॥ अर्कस्तीव्रमसह्यं दारुण्यमात्मनि अनुशय्य पश्चात्तापविपर्यीकृत्य, स्वतापतप्तां धरित्रीं दयया निर्वृत्य व्याघुट्य निर्वापयितुं सुखयितुं शीतीकर्तुं हिमांशुव्याजेन चन्द्रस्वरूपेण शीतः शीतलः अभ्युदयादभ्युद्गतवान् इव ॥ उपजातिः ॥

शनैः समारुह्य नभोऽनुरागं जहौ शशी लोकहितोद्यतोऽपि ।
प्रायेण सर्वोऽप्यधिरूढसंपद्व्यपोढपूर्वस्थितिरीदृगेव ॥ ४६ ॥

शनैरिति ॥ लोकहितोद्यतोऽपि शशी शनैर्नभो गगनं समारुह्य अनुरागं प्रीतिं रक्ततां च जहौ । प्रायेण सर्वोऽप्यधिरूढसंपत् सन् ईदृक् चन्द्र इव व्यपोढपूर्वस्थितिर्मुक्तपूर्वस्थितिर्भवति ॥

चन्द्रो वातः शीतकं चन्दनं च क्षोदेष्वासीदुष्णकं कामुकानाम् ।
निर्द्वन्द्वं वा चन्द्रमश्छद्मनाभूदेकच्छत्रं प्राभवं मन्मथस्य ॥ ४७ ॥

चन्द्र इति ॥ कामुकानां कामिनां क्षोदेषु कामजनितपीडासु सतीषु चन्द्रो वातः शीतकं चन्दनं च उष्णकम् आसीत् । वा अथवा चन्द्रमश्छद्मना चन्द्रव्याजेन एकच्छत्रं निर्द्वन्द्वं मन्मथस्य प्राभवं प्रभुत्वम् अभूत् ॥ शालिनी ॥

माधवेन मधुना स्मरेण वा को मयेव मदृते च तोषितः ।
इत्यहंयुरवशः स्फुटन्निव स्वल्पतारकगणः शशी बभौ ॥ ४८ ॥

माधवेनेति ॥ मत् मत्त ऋते विना केन माधवेन वसन्तेन मधुना मद्येन स्मरेण कंदर्पेण मया इव कस्तोषितः । अपि तु न । इत्येवं प्रकारेण अहंयुर्गर्विष्ठोऽवशः स्वाधीनः शशी स्फुटन्निव विकसन्निव स्वल्पतारकगणः सन् बभौ ॥ रथोद्धता ॥

न विधुः स्मरशस्त्रशाणबन्धः स्वयमेष स्फुरिताश्च ता न ताराः ।
मदनास्त्रनिशानवह्निशल्कप्रचयोऽसाविति मानिभिश्चकम्पे ॥ ४९ ॥

नेति ॥ मानिभिः कामुकैः 'एष विधुर्न, किंतु स्वयं स्मरशस्त्रशाणबन्धः स्मरस्य कंदर्पस्य शस्त्राणां शापबन्धः, ता इमाश्च स्फुरिताः तारा न किंतु असौ मदनास्त्रनिशानवह्निशल्कनिचयः मदनास्त्राणां निशानेन वह्निशल्कानां प्रचयोऽस्ति' इति हेतोश्चकम्पे ॥ औपच्छन्दसिकं वृत्तम् ॥

आत्मपादशरणं कुमुदौघं भानुतापितमवेत्य सवैरम् ।
हन्तुमभ्यधिकमिच्छुरिवेन्दुश्चक्रवाकमतपत्कमलं च ॥ ५० ॥

आत्मेति ॥ इन्दुश्चन्द्रः आत्मपादशरणं स्वशरणागतं कुमुदौघं कैरवनिकरं भानुतापितम् अवेत्य सवैरम् अभ्यधिकं हन्तुम् इच्छुरिव कमलं चक्रवाकं च अतपत् पीडितवान् ॥ स्वागतावृत्तम् ॥

क्षीरधिप्लवकृतोद्गमैरिव प्लाविते ऽशुभिरतिग्मदीधितिः ।
व्योम्नि मज्जनभयेन शङ्कितः संचरन्निव गतेन लक्षितः ॥ ५१ ॥

क्षीरेति ॥ अतिग्मदीधितिश्चन्द्रः क्षीरधिप्लवकृतोद्गमैः समुद्रपूरविहितोत्पत्तिभिरंशुभिः किरणैः प्लाविते प्लोडिते, व्योम्नि गगने मज्जनभयेन शङ्कित इव गतेन संचरन् लक्षितः (जनैः) ॥ रथोद्धता ॥

भोगसागरपरिक्रमचौरान्रागिणो जलपथे कृतकृत्यान् ।
अध्यरोहदिव जेतुमुदस्त्रश्चन्द्रमण्डलतरण्डमनङ्गः ॥ ५२ ॥

भोगेति ॥ अनङ्गः कंदर्पो भोगसागरपरिक्रमचौरान् भोगसमुद्रमार्गतस्करान्, जलपथे जलमार्गे जडमार्गे कृतकृत्यान् रागिणः कामुकान् जेतुम् उदस्त्र उत्खातशस्त्रः सन् चन्द्रमण्डलतरण्डं चन्द्रमण्डलमेव तरण्डं लघुनौकाविशेषम् अध्यरोहत् इव ॥ स्वागता ॥

परं न दृष्ट्वाक्रममाणमिन्दुं प्रपूरयामास पयोधिराशाः ।
लावण्यधामा च्युतमानसीमा रागोऽप्यसंमान्हृदये जनस्य ॥ ९३ ॥

परमिति ॥ लावण्यधामा क्षाररसाश्रयः शरीरकान्तिविशेषाश्रयो वा । च्युतमानसीमा पयोधिः समुद्रः परं केवलम् आक्रममाणमुदयमानम्, इन्दुम् दृष्ट्वा आशा दिशो न प्रपूरयामास । किं तु जनस्य हृदये असंमान् रागोऽपि आशा वाञ्छाः प्रपूरयामास ॥ उपजातिः ॥

श्रवणाञ्जलिनेक्षणेन शुक्त्या प्रियवार्तां विधुमासवं पिबन्त्यः ।
मधुरत्रयसेवयेव जाता हृदि वध्वः समधातवश्चिरेण ॥ ९४ ॥

श्रवणेति ॥ वध्वः प्रियवार्तां श्रवणाञ्जलिना, विधुम् ईक्षणेन लोचनेन, आसवं मद्यं शुक्तया चषकेण पिबन्त्यः सत्यो हृदि हृदये मधुरत्रयसेवया इव समधातवः चिरेण जाताः॥ औपच्छन्दसिकम् ॥

रत्नाजिनेष्वाजिभरावशेषाद्विपादवद्बाष्पजलाविलानि ।
स्त्रैणं समुच्छ्वासतरङ्गितानि सीधूनि योधाः समपाययन्त ॥ ९५ ॥

रत्नेति ॥ योधाः भटाः (प्रयोजककर्तारः) आजिभरावशेषात् विषादवत् स्त्रैणं स्त्रीकदम्बम् (प्रयोज्यकर्तृकर्म) बाष्पजलाविलानि अश्रुजलमिश्राणि, समुच्छ्वासतरङ्गितानि समुच्छ्वासेन तरङ्गितानि सीधूनि मद्यानि (कर्माणि) समपाययन्त ॥ उपजातिः ॥

उत्पलस्य शशिनोऽप्यवतारात्सौरभं हरतु कान्तिगुणं च ।
क्व स्वयं क्व मदनः किल येन प्राप मोहनविधिं मधुवारः ॥ ९६ ॥

उत्पलेति ॥ मधुवारो मदिरा उत्पलस्य कमलस्य सौरभं परिमलं, शशिनश्चन्द्रस्य कान्तिगुणं च, (शशिकमलयोः) अवतारात् हरतु । स्वयं मधुवारः क्व वर्तते मदनः क्व वर्तते । येन मदनेन मधुवारः मोहनविधिं प्राप । किल लोकोक्तौ ॥ स्वागता ॥

इन्दोः प्रियस्यापि कराग्रपातैर्मदस्य चित्तस्य तथार्द्रभावैः ।
पूर्वापराधस्मृतयो विनेशुर्जन्मापरं जातमिवाबलानाम् ॥ ९७ ॥

इन्दोरिति ॥ अबलानां कामिनीनाम् इन्दोश्चन्द्रस्य तथा प्रियस्य वल्लभस्य कराग्रपातैः किरणपातैर्नखपातैश्च मदस्य तथा चित्तस्य आर्द्रभावैर्द्रवस्वरूपैः सहृदयभावैश्च । पूर्वापराधस्मृतयो विनेशुः । तथा च अपरमन्यमिव जन्म जातम् ॥ उपजातिः ॥

प्रतिमितविधुबिम्बसीधुपानादिव वदनं विशदारुणं वधूनाम् ।
श्रमजलललितभ्रु कोपशङ्कानतशिरसः किल कामिनश्चकार ॥ ९८ ॥

प्रतिमीति ॥ प्रतिमितविधुबिम्बसीधुपानात् प्रतिबिम्बितचन्द्रबिम्बात्सीधुपानात् (यथाक्रमेण) विशदारुणं विशदम् अरुणम्, श्रमजलललितभ्रु स्वेदजलकलुषितभ्रु वधूनां

वदनं कामिनः कोपशङ्कानतशिरसः कोपभ्रान्तिनम्रमस्तकान् चकार किल ॥ पुष्पिताग्रा वृत्तम् ॥

स्वच्छवृत्ति रसिकं मृदु चार्द्रं तत्तथापि मधु मानवतीनाम्।
रूपयौवनमदस्य विकारैर्मत्तमत्तमिव विप्रललाप ॥ ५९ ॥

स्वच्छेति ॥ यद्यपि मधु स्वच्छवृत्ति रसिकं रसवत्, मृदु शरीरमार्दवविधायित्वात्, आर्द्रं द्रवरूपम्। तथापि मानवतीनां मानिनीनां रूपयौवनमदस्य विकारैर्मत्तमत्तम् इव विप्रललाप विप्रलपितवान् ॥ स्वागता ॥

मानो व्यतीतः कलहं व्यपेतं गतानि गोत्रस्खलितच्छलानि।
गुरून्प्रहारान्मधु संदधीत क्षतं पुनः कामिषु तत्कियद्वा ॥ ६० ॥

मानेति ॥ मानो व्यतीतः, कलहं व्यपेतम्, गोत्रस्खलितच्छलानि गतानि, तथापि मधु गुरून् प्रहारान् संदधीत संदध्यात् तत्क्षतं नखक्षतं पुनः कामिषु कियद् ॥ उपजातिः ॥

परिपीडितमुक्तमङ्गनायाः परिरम्भेषु चिरादिव प्रियेण।
हृदयोच्छ्वसितोष्मणा सहैव प्रतिसर्पत्कुचयुग्ममुन्ममज्ज ॥ ६१ ॥

परीति ॥ प्रियेण परिरम्भेष्वालिङ्गनेषु परिपीडितमुक्तं पूर्वं परिपीडितं पश्चान्मुक्तम्, अङ्गनायाः कल्याणाङ्ग्याः कुचयुग्मं हृदयोच्छ्वसितोष्मणा सहैव प्रतिसर्पद् इव चिरात् चिरकालेन उन्ममज्ज उन्नमितम् ॥ औपच्छन्दसिकम् ॥

निरुत्तरां कर्तुमनिंस्त दोषी योषामुपालिप्सुरनेकमागः।
वाक्कर्मणोरन्यतरस्य मोहमन्यस्य रक्षत्यथवावबोधः ॥ ६२ ॥

निरुत्तेति ॥ अनेकम् आगोऽपराधम् उपालिप्सुः प्रोञ्छितुमिच्छुर्दोषी (वल्लभः) योषां निरुत्तरां कर्तुम् अनिंस्त चुम्बितवान्, अथवा अन्यस्य अवबोधो वाक्कर्मणोरन्यतरस्य मोहं रक्षति ॥ उपजातिः ॥

मध्यस्थितं मण्डलधर्मबद्धं मित्रं जिगीष्वोरिव पीड्यमानम्।
संदेहभावि स्तनचक्रमासीत्साधारणं तत्प्रिययोर्मुहूर्तम् ॥ ६३ ॥

मध्येति ॥ प्रिययोर्वल्लभयोः तत् स्तनचक्रं 'जिगीष्वोर्मित्रम् इव' मध्यस्थितमन्तरालगतम्, मण्डलधर्मबद्धं चक्रवालधर्मबद्धम्, देशधर्मबद्धम्। पीड्यमानं सत् मुहूर्तं क्षणं साधारणं संदेहभावि आसीत् ॥

आलिङ्ग्य गाढं मधुरं ध्वनन्ती मुखे मुखं न्यस्य वधूः प्रियस्य।
विस्मृत्य कर्णान्तरमुन्मदत्वादास्ये जपन्तीव बभौ रहस्यम् ॥ ६४ ॥

आलिङ्ग्येति ॥ वधूर्गाढम् आलिङ्ग्य मधुरं ध्वनन्ती सती उन्मदत्वात् कर्णान्तरं श्रोत्रमध्यं विस्मृत्य प्रियस्य मुखे मुखं न्यस्य आस्ये मुखे रहस्यं जपन्ती इव बभौ ॥

किमु मधुरसितां मुखात्प्रियां प्रशमयितुं रसमुत्पिबन्निव ।
अविरतिरुतनिसनच्छलादजनि जनः सकलां गिलन्निव ॥ ६५ ॥

किम्विति ॥ मधुरसितां मधुमत्तां प्रियां प्रशमयितुं मुखात् रसं मद्यस्वभावम् उत्पिबन्निव, अविरतिरुतनिसनच्छलात् अविरतिनोर्विराममप्राप्तयो रुतनिसनयो रतिकूजितचुम्बनयोश्छलात् सकलां साङ्गोपाङ्गां गिलन्निव जनोऽजनि किमु ॥ अपरवक्त्रम् ॥

स्तनजघनभरेण भूरिणा दयिततनौ दयिता ममौ गुरुः ।
पृथुनि निजचले बहुच्छले मनसि हि माति कियत्यसौ तनुः ॥ ६६ ॥

स्तनेति ॥ भूरिणा स्तनजघनभरेण कुचनितम्बभारेण गुरुर्दयिता प्रिया दयिततनौ ममौ अवकाशं लब्धवती । हि यतः कियती असौ तनुः पृथुनि विस्तीर्णे, निजचले स्वतश्चञ्चले, बहुच्छले प्रचुरप्रपञ्चे मनसि माति ॥

क्षेपयन्निव मुखामुखि मानं मानसीं कलुषतां कुसुमेषोः ।
संविभाषिषुरिवासवमत्तश्चुम्बनेषु रमणः क्वणति स्म ॥ ६७ ॥

क्षेपयेति ॥ आसवमत्तो रमणः प्रियश्चुम्बनेषु, मुखामुखि मुखेन मुखेनाश्रित्येदं प्रवृत्तं यथा तथा मानं चुम्बितुमहं कुशल इत्यभिमानं क्षेपयन्निव, कुसुमेषोर्मानसीं कलुषतां संविभाषिषुः संभाषितुमिच्छुरिव क्वणति स्म ॥ स्वागता ॥

कोपाश्रुभिः कालवणैः परीतः स्याद्वा स लावण्यमयः प्रियोष्ठः ।
कुतोऽन्यथा तं पिबतामुदन्या माधुर्यवत्प्रत्युत हन्ति तृष्णाम् ॥६८॥

कोपेति ॥ कालवणैरौपत्क्षारैः कोपाश्रुभिः स्नेहकोपप्रवृत्ताश्रुभिः, परीतो व्याप्तः यः पूर्वं मधुरं मधुरमिति कृत्वास्वादितः, स प्रियोष्ठो लावण्यमयोऽमृतमय इव स्यात् । अन्यथा तं प्रियौष्ठं पिबतां प्रियाणाम् उदन्या पिपासा माधुर्यवत् माधुर्येण तुल्यं तृष्णाम् प्रत्युत कुतः हन्ति ॥ उपजातिः ॥

प्रथममधरे कृत्वाश्लेषं व्रणं विदधे वधू-
रतिविनिमयः प्रीतेनायं कुतोऽप्यनुशय्यते ।
स्वयमिति भयात्सत्यंकारं प्रदातुमिवोद्यता
ननु च सबलाः कृत्ये नाम्ना भवन्त्यबलाः स्त्रियः ॥ ६९ ॥

प्रथमेति ॥ वधूः 'प्रीतेन वल्लभेन स्वयमात्मना अयम् अतिविनिमयः पुरुषसंभोगैकगुणस्य स्त्रियाः पुरुषायितसंभोगो द्विगुणस्त्रिगुणो वा स्त्रीपुरुषाश्रितसंभोगैकगुणस्य पुरुषसज्ञापणाद्गुणोपाधेयस्य विनिमयः कुतोऽपि कस्मादपि अनुशय्यते पश्चात्तापविषयीक्रियते' इति भयात् सत्यंकारं प्रदातुम् उद्यता इव प्रथमम् आश्लेषमालिङ्गनं कृत्वा अधरे दन्तच्छेदे व्रणं दन्तक्षतं विदधे विहितवती । 'निदधे' इति पाठे निखातवती । युक्तमेतत् । ननु अहो स्त्रियो नाम्ना अबलाः, कृत्ये सबलाः भवन्ति ॥ हरिणी ॥

चित्तं चित्तेनाङ्गमङ्गेन वक्त्रं वक्त्रेणांसेनांसमप्यूरुणोरुम्।
एकं चक्रुः सर्वमात्मोपभोगे कान्ताः पत्न्यौ हन्त लज्जां ववञ्चुः ॥ ७० ॥

चित्तमिति ॥ कान्ता आत्मोपभोगे चित्तेन चित्तम्, अङ्गेनाङ्गम्, वक्त्रेण वक्त्रम्, अंसेन अंसम्, ऊरुणा ऊरुम् अपि सर्वम् एकं चक्रुः। हन्त अहो पत्न्यौ लज्जां ववञ्चुस्त्यक्तवत्यः ॥ शालिनी ॥

सहस्थितं विस्मृतमङ्गमंशुकं गतं पुनः किं सहजा सखीव सा।
कदापि दृष्टेव न संस्तुतेव च त्रपा कुतस्त्यं कुपितं नतभ्रुवः ॥ ७१ ॥

सहेति ॥ नतभ्रुवः कामिन्याः सहस्थितमेकत्रावस्थितम् अङ्गं किं न विस्मृतम्। अंशुकं वस्त्रं किं न गतम्। सा सहजा नैसर्गिकी सखीव किं न जाता। कदापि दृष्टेव किं न जाता। च पुनः संस्तुतेव किं न जाता। त्रपा च किं न जाता। कुतस्त्यं कुपितं किं न जातम् ॥ वंशस्थवृत्तम् ॥

विलोकभावेषु सहस्रनेत्रता चतुर्भुजत्वं परिरम्भणेऽभवत्।
समागमे सर्वगतत्वमिच्छवः सुदुर्लभेच्छाकृपणा हि कामिनः ॥ ७२ ॥

विलोकेति ॥ कामिनः सहस्रनेत्रतामिन्द्रताम्, चतुर्भुजत्वं विष्णुत्वम्, सर्वगतत्वमात्मत्वम् इच्छवः सुदुर्लभेच्छाकृपणाः दुर्लभेच्छारहिता आसन्। हि यतः तेषां विलोकभावेषु कटाक्षादिषु सहस्रनेत्रता अनन्तचक्षुर्व्यापारः, परिरम्भणे आलिङ्गने चतुर्भुजत्वं (स्त्रीपुंसहस्तसमूहेन) समागमे मेलने सर्वगतत्वं सर्वत्र वनोपवनादिषु गतं गमनं क्रीडार्थं येषां तत्त्वम्, अभवत् ॥

बद्धासवे प्रेम वधूः प्रियेऽपि त्रप्तुं न धातुद्वयबद्धमैच्छत्।
अगूढभावापि ततो विकल्पात्पण्याङ्गनेव द्विमनीबभूव ॥ ७३ ॥

बद्धेति ॥ वधूरासवे मद्ये, प्रिये अपि धातुद्वयबद्धम् 'तृप् प्रीणने,' 'त्रपूष् लज्जायाम्,' इति धातुद्वयेन बद्धम् आसवे तर्पणनिर्मितं प्रिये लज्जानिर्मितं प्रेम बद्धा नियन्त्र्य त्रप्तुं प्रीणयितुं लज्जितुं वा न ऐच्छत् (परस्परप्रतिबन्धात्)। ततस्तस्मात्कारणात् अगूढभावा प्रकटाशयापि सा विकल्पाद्धातुद्वयार्थनिमित्तात्, पण्याङ्गना वेश्या द्विमनीबभूव चित्तद्वैतंगताभूत् ॥ उपजातिः ॥

व्रीडा वासः स्वान्तमङ्गं समस्तं कामार्तानां प्राप शैथिल्यमेका।
स्वप्नेऽप्यासीन्न श्लथा बाहुपीडा युक्तं द्राघीयःसु मूर्खत्वमाहुः ॥७४॥

व्रीडेति ॥ कामार्तानां कामेन ऋतानां कामिनां व्रीडा लज्जा वासो वस्त्रं स्वान्तं चित्तं समस्तं निखिलम् अङ्गं शैथिल्यं शिथिलतां प्राप। एका बाहुपीडा स्वप्नेऽपि श्लथा शिथिला न आसीत्। द्राघीयःसु दीर्घतरेषु मूर्खत्वं युक्तम् आहुः चारुचन्द्रचन्द्रिकाचकोरा विद्वज्जनाः ॥ शालिनी ॥

रागं नेत्रे नैव चित्तं मुखं च स्त्रीणां पानान्मानजिह्मं जगाहे ।
द्वेधैकोऽभूद्बद्धपानोऽपि पाण्डुः कान्तास्योष्मस्वेदभावादिवौष्ठः ॥७५॥

रागमिति ॥ (केवलं) स्त्रीणां कामिनीनां नेत्रे एव रागं न जगाहाते । किंतु चित्तं मुखं च पानात् मानजिह्मं रागं जगाहे । बद्धपानः कान्तास्योष्मस्वेदभावात् वल्लभवदनोच्छ्वास-घर्मत्वादिव पाण्डुः शुक्ल एकोऽपि ओष्ठो द्वेधा अभूत् । अधरस्वरूपापेक्षया रक्तः पानव-शात्पाण्डुरिति भावः ॥

देहेषु भोगाय विभक्तिमागतैः प्राणेषु चैक्यं निजमेव कामिभिः ।
न क्वापि दृष्टा इव मानवृत्तयस्तत्पूर्वदृष्टा इव वल्लभाः परम् ॥ ७६ ॥

देहेष्विति ॥ मानवृत्तयः देहेषु भोगाय स्रक्चन्दनानुशीलनाय विभक्तिं भेदम्, प्राणेषु निजमात्माधीनम् ऐक्यमेकीभावं समरसीभावम्, आगतैः कामिभिः क्वापि दृष्टा इव परं केवलं न अभवन् । किं तु वल्लभाः कामिन्यः तत्पूर्वदृष्टा मानवृत्तिपूर्वदृष्टा इव अभूवन् ॥ इन्द्रवंशा ॥

असंमनन्ती व्यवधानमक्ष्णोरीचिक्षिषुः पक्ष्म कुचद्वयं च ।
चित्तव्यवायं परिरिप्सुरीशं प्राणत्प्रिया कान्तरिता प्रियेण ॥ ७७ ॥

असंमेति ॥ ईशं पतिमीचिक्षिषुरवलोकयितुमिच्छन्ती सती अक्ष्णोर्व्यवधानं पक्ष्म नेत्रपत्ररोम असंमनन्ती अनिच्छन्ती । परिरिप्सुरालिङ्गितुमिच्छन्ती सती चित्तव्यवायं चित्तस्य मनसो व्यवायो व्यवधानं यस्मात्तादृग् कुचद्वयं स्तनद्वन्द्वम् असंमनन्ती का प्रिया प्रियेण वल्लभेन अन्तरिता व्यवहिता सती प्राणत् जिजीव । न कापि ॥ उपजातिः ॥

तुलयन्निवोभयरसं मदिरां दयितोष्ठमप्यभिपिबन्दयितः ।
अधरस्य नाल्पमपि सीधुनि तन्मधुनोऽधरेऽधिकमलब्ध रसम् ॥ ७८ ॥

तुलेति ॥ दयित उभयरसं तुलयन्नेव मदिरां दयितोष्ठमपि अभिपिबन् सन् यस्मात्कारणात् सीधुनि मद्ये अधरस्य अल्पमपि रसं न अलब्ध तत्तस्मात्कारणात् अधरे मधुनोऽधिकं रसम् अलब्ध प्राप्तवान् ॥ प्रमिताक्षरा ॥

घनयोः स्तनयोः स्मरेण तन्व्याः परिणाहं परिमातुमुन्नतिं च ।
रचितेव रसेन सूत्ररेखा नखलेखा विरराज कुङ्कुमस्य ॥ ७९ ॥

घनयोरिति ॥ नखलेखा स्मरेण कंदर्पेण तन्व्याः कामिन्या घनयोर्निबिडयोः स्तनयोः कुचयोः परिणाहं वर्तुलत्वम्, उन्नतिमुत्सेधं च परिमातुं कुङ्कुमस्य रसेन रचिता सूत्ररेखा इव विरराज शुशुभे ॥ औपच्छन्दसिकम् ॥

इत्याशंसुर्नाभिगन्धं मृगाणामन्यद्रागं वीक्ष्य बालामुखस्य ।
नामोदो मे हा मृगस्यापि नाभेरित्यङ्कात्मव्यङ्गमाधादिवेन्दुः ॥ ८० ॥

इत्येति ॥ इन्दुर्बालामुखस्य अन्यद्रागम् अन्यं रागं वीक्ष्य मृगाणां नाभिगन्धं कस्तूरीम्, आशंसुः श्लाघमान इव मृगस्य नाभेरामोदोऽपि मे मम न इति हेतोः हा कष्टेन अङ्कात्मव्यङ्गम् लाञ्छनस्वरूपकलङ्कम् आधात् धृतवान् इव ॥ शालिनी ॥

ग्लानिं मुक्तामण्डपे तन्तुजालं व्यासीदन्तश्चन्द्रकान्ताः करेण।
राज्ञां भोगे सुस्रुवन्तोऽपरोधं रोद्धुं चन्द्रेणाभिनुन्ना इवाभुः ॥ ८१ ॥

ग्लानिमिति ॥ चन्द्रकान्ताश्चन्द्रकान्तमणयो मुक्तामण्डपे मौक्तिकजनाश्रये करेण एकैककिरणेन तन्तुजालं तन्तुसमूहं व्यासीदन्तो गच्छन्तः सन्तः, अपरोधं निरर्गलं यथातथा सुस्रुवन्तो जलविन्दून् मुञ्चन्तः, चन्द्रेण राज्ञां नरेद्राणां भोगे सुरतव्यापारे ग्लानिं श्रमं रोद्धुम् अभिनुन्नाः सामस्त्येन प्रेरिता इव, आभुः प्रद्योतन्ते स्म ॥

अरण्यवृत्तेरुदवासकर्मणः स पुष्पभाराहरणाच्च मारुतः।
श्रमं विनिन्ये परिरभ्य कामिनीस्तपोऽन्तरेणासुलभा हि तादृशः ॥८२॥

अरण्येति ॥ मारुतो वातः, अरण्यवृत्तेर्वनवर्तनात्, उदवासकर्मणो जलस्थितिविधानात्, पुष्पभाराहरणात् कुसुमनिकरानयनात्, (एतेन मन्दत्व-शीतलत्व-सुरभित्व-लक्षणैस्त्रिभिर्गुणैः) कामिनीः परिरभ्यालिङ्ग्य, श्रमं सुरतखेदं विनिन्ये परित्याजितवान्। हि यतः तादृशः कामिन्यः तपस्तपश्चरणम् अन्तरेण विना असुलभा दुर्लभाः ॥ वंशस्थम् ॥

इति विविधरतेन राजलोकैः क्षणमिव न क्षणदा गतापि जज्ञे।
शशिनि शशकदर्शनस्य शङ्कां स्वमनसि मानयितुं कृतत्वरेव ॥ ८३ ॥

इतीति ॥ राजलोकैर्गतापि क्षणदा निशा इत्येवंप्रकारेण विविधरतेन नानासंभोगक्रीडया क्षणम् इवापि न जज्ञे ज्ञाता। शशिनि चन्द्रे शशकदर्शनस्य स्वमनसि स्वचित्ते शङ्कां 'शशी हि कलङ्की तदतिसंसर्गादहमपि कलङ्किनी मा भूवम्' इति वितर्कं मानयितुं संभावयितुं कृतत्वरेव जज्ञे ज्ञाता ॥ पुष्पिताग्रा ॥

लघु मोद्गमद्द्युमणिरप्युदियादिति कान्तयोर्विरहकातरयोः।
पततोश्च दोहदमिदं समभूद्विविधाथवा विषयिणां हि रुचिः ॥ ८४ ॥

लघ्विति ॥ विरहकातरयोर्भाविवियोगभीतयोः कान्तयोः स्त्रीपुंसयोः 'द्युमणिः सूर्यो लघु क्षिप्रं मा उद्गमत् उदयं प्रापत्' इति, विरहकातरयोर्वर्तमानवियोगभीतयोः पततोः पक्षिणोश्चक्रवाकयोस्तु 'लघु उदियात् उदयं प्राप्यात्' इति इदं दोहदमिच्छा समभूत् ॥ युक्तमेतत्। अथवा यतः विषयिणां विविधा रुचिः स्यात् ॥ प्रमिताक्षरा ॥

आश्लेषमन्तःक्वथनं प्रणामं कामोपदंशानि च चुम्बनानि।
दृष्ट्वाङ्गनानामसहा निसोढुं हासादिवासौ स्फुटिता प्रभासीत् ॥ ८५ ॥

आश्लेषमिति ॥ प्रभा प्रभातम् अङ्गनानाम् आश्लेषमालिङ्गनम्, अन्तःक्वथनमन्तःकरणपाकं यथा भवति तथा प्रणामं प्रणतिम्, कामोपदंशानि कंदर्पव्यञ्जनानि चुम्बनानि दृष्ट्वा

निसोढुं संवरीतुम्, असहासमर्था सती हासाद्धास्यात् इव स्फुटिता विकसिता आसीत् ॥ इन्द्रवज्रा ॥

अन्योन्यनिद्रावसरं प्रतीच्छद्वन्द्वं न सुष्वाप कृतावधानम् ।
अध्यात्मतत्त्वानि कषायिताक्षं जागर्यया ध्यायदिव स्मरस्य ॥ ८६ ॥

अन्योन्येति ॥ स्मरस्य कंदर्पस्य अध्यात्मतत्त्वानि परमार्थरहस्यानि ध्यायदिव जागर्यया उन्निद्रतया कषायिताक्षं सरागलोचनम्, द्वन्द्वं मिथुनं अन्योन्यनिद्रावसरं परस्परशयनप्रस्तावम् प्रतीच्छत् परस्परमभिलषत् सत् कृतावधानं विहिततत्परत्वं यथा स्यात्तथा न सुष्वाप ॥

निधुवनमधुनिद्रामोदशेषैकभारं
पुनरुषसि स कामी योषितोऽङ्गं ललङ्घे ।
रुचिमपि विदधेऽस्याः क्षामभावं विनीय
प्रशमयति न कं वा लङ्घना शेषदोषम् ॥ ८७ ॥

निधुवनेति ॥ स कामी पुनरुषसि निधुवनमधुनिद्रामोदशेषैकभारं निधुवन-मधु-निद्राणामामोदस्य शेष एव एको भारो यस्मिंस्तादृशं योषितः कामिन्या अङ्गं ललङ्घे लङ्घितवान् । तथा क्षामभावं रतिश्रमं निपीयाकृत्य अस्याः कामिन्या रुचिमभिलाषम् अपि विदधे । युक्तमेतत् । लङ्घना कर्त्री कं वा शेषदोषं न प्रशमयति ॥ मालिनी ॥

रात्रिवृत्तमलमेवमनूद्य त्वं वधूः खलु विलक्ष्य खलेति ।
हुंकृतैः प्रतिहतोऽपि सखीभिः स्त्रीरतान्यधिजगौ शुकशावः ॥ ८८ ॥

रात्रीति ॥ हे खल, त्वमेवं रात्रिवृत्तं वधूः कामिनीरलं मा अनूद्य अनुवादीः अलं विलक्ष्य मा लक्षय इत्येवंप्रकारेण सखीभिर्हुंकृतैः प्रतिहतोऽपि शुकशावः स्त्रीरतानि अधिजगौ अन्ववादीत् ॥ स्वागता ॥

सूर्योऽभ्युदेष्यति कदाजिभरोऽथवेति
ध्यायन्निवाश्वनिवहः स्तिमितान्तरात्मा ।
पश्यन्निवाक्षिभिरसूचयदूर्ध्वसुप्तो
घोणापुटस्फुरणसूत्करणैर्विबोधम् ॥ ८९ ॥

सूर्य इति ॥ स्तिमितान्तरात्मा निश्चलान्तरात्मा, ऊर्ध्वसुप्त ऊर्ध्वनिद्राणोऽश्वनिवहस्तुरंगमसमूहः 'कदा सूर्योऽभ्युदेष्यति अथवा आजिभरः सङ्ग्रामभरः कदा भविष्यति इति ध्यायन्, अक्षिभिर्विबोधं प्रभातं पश्यन् इव' घोणापुटस्फुरणसूत्करणैर्नासापुटसंचरणसूत्करणैर्विबोधं प्रभातम् असूचयत् ॥ वसन्ततिलका ॥

नीत्वा पार्श्वेनोभयेनापि निद्रां युद्धोत्स्वप्नेनेव नागा विबुद्धाः ।
शत्रोश्छत्रं हैममाशङ्क्य बालं हस्तावृत्त्याक्रष्टुमैच्छन्निवार्कम् ॥ ९० ॥

नीत्वेति ॥ युद्धोत्स्वप्नेन रणोद्गतस्वप्नेन विबुद्धा नागा गजा निद्रां नीत्वा समाप्य बालं नवोदितम् अर्कं भानुं हैमं हिरण्मयं शत्रोश्छत्रम् आशङ्क्य उभयेनापि पार्श्वेन हस्तावृत्त्या शुण्डादण्डपरावृत्त्या बालमर्कम् आक्रष्टुम् इव ऐच्छन् ॥ शालिनी ॥

लक्ष्मीं खलामुभयभागितया विलोलां
स्वीकर्तुमेष गणिकामिव जागरूकः ।
संनह्य मुञ्च शयनं प्रधनं जयेति
स्तुत्यैः परं हरिरबोध्यत सूतपुत्रैः ॥ ९१ ॥

लक्ष्मीमिति ॥ स्तुत्यैः प्रशंसनीयैः सूत्रपुत्रैः प्राभातिकमङ्गलपाठकपुत्रैः 'गणिकाम् इव' उभयभागितया जिगीषुप्रतिजिगीषुभजनशीलतया खलां प्रतारणपरां विलोलां चञ्चलां लक्ष्मीं स्वीकर्तुं जागरूको जागरणशीलः हरिर्लक्ष्मणो नारायणश्च 'हे देव, शयनं शय्यां मुञ्च संनह्य प्रधनं समरं जय' इत्येवंप्रकारेण परं केवलम् अबोध्यत बोधं नीतः ॥ वसन्ततिलका ॥

इति धनंजयविरचिते राघवपाण्डवीयापरनाम्नि द्विसंधानकाव्ये धनंजयाङ्के रात्रिसंभोगव्यावर्णनं नाम सप्तदशसर्गः समाप्तः ।

---

## अष्टादशः सर्गः ।

प्रभावे रोचनीयस्य भीतेवोदेतुमोजसः ।
प्रभा वैरोचनी यस्य वीतोच्छ्वासेव चावनिः ॥ १ ॥

(विषमपादयमकम्)

प्रभेति ॥ वैरोचनी भास्करी प्रभा दीप्तिः प्रभावैर्माहात्म्यै रोचनीयस्य भासनीयस्य यस्योजसः प्रतापादुदेतुं भीतेव बभूव । अवनिर्मेदिनी च वीतोच्छ्वासेव बभूव ॥ सर्गेऽस्मिन्ननुष्टुप् वृत्तम् ॥

तथापि स पुमानन्ते यद्यव्यवस्थितमाकुलम् ।
सहास्य यशसा शुभ्रं यद्यव्यवस्थित मा कुलम् ॥ २ ॥

(समपादयमकम्)

तथापीति ॥ यद्यपि प्रतापिनो भवेयुस्तथापि तेषु स एव पुमान् यद्यस्मात्कारणात्, यद्यस्मात्पुरुषात्, व्यवस्थितं जातव्यवस्थम्, शुभ्रं स्वच्छं कुलमन्वयो यशसा सहास्य पुरुषस्यान्ते आकुलं व्यग्रं मा व्यवस्थित मा भूत ॥

भवेयुरन्ते विरसाः समं देहा विभूतयः ।
राज्ञां माहंक्रिया भूवन्समन्देहा विभूतयः ॥ ३ ॥

(समपादयमकम्)

भवेयुरिति ॥ देहाः कायाः, विभूतय ऐश्वर्याण्यन्ते अवसाने समं युगपद् विरसा भवेयुः । परं तु राज्ञां नृपाणाम् अहंक्रिया अहंकाराः विभूतयो विनष्टा भुवः पृथ्व्या ऊतयो रक्षा याभ्यस्तादृशः, समन्देहा मन्दयेहया सहिता, मा भूवन् ॥

उत्तरेऽर्थे कृतार्थत्वं नान्तराले कृते परम् ।
लज्जालुतोत्तरीयेण नान्तरीयेण केवलम् ॥ ४ ॥

(समपादादियमकम्)

उत्तरेति ॥ उत्तरेऽर्थे प्रयोजने सिद्धे न परं केवलं कृतार्थता, किंतु अन्तराले मध्ये एवार्थे कृते सति । यथा केवलम् उत्तरीयेण वस्त्रेण न लज्जालुता, किंतु अन्तरीयेणाधोवस्त्रेणैव ॥

स्थेयान्माहाकुलः स्वान्ते निजमालम्ब्य पौरुषम् ।
स्थेयान्मा हा कुलः स्वान्ते भीतं मुञ्चति नान्तकः ॥ ५ ॥

(विषमपादाद्यन्तयमकम्)

स्थेयानिति ॥ स्वान्ते चित्ते स्थेयान् स्थिरतरो माहाकुलो महाकुलीनः स्वान्ते स्वावसाने आकुलो व्यग्रः सन् निजमात्मीयं पौरुषम् आलम्ब्य धृत्वा मा न स्थेयात् इति हा कष्टम् । अपि तु तिष्ठत्वेव । यतः भीतं जनम् अन्तको न मुञ्चति ॥

स्थिरप्रकृतिरादेयः केषांचन न चञ्चलः ।
पिङ्गलोऽप्यर्च्यते काको मङ्गलार्थं न केनचित् ॥ ६ ॥

स्थिरेति ॥ स्थिरप्रकृतिर्निश्चलस्वभावः, आदेयो ग्राह्यो भवति, केषांचन केषामपि चञ्चलो न । यतः पिङ्गल उलूकोऽपि मङ्गलार्थम् अर्च्यते पूज्यते । केनचित्केनापि काको नार्च्यते ॥

असिं भुजमहं धैर्यं स मन्त्रिभ्योऽधिकोचितम् ।
गणयन्करवै शत्रुं समं त्रिभ्योऽधिकोचितम् ॥ ७ ॥

(समपादयमकम्)

असिमिति ॥ सोऽहं मन्त्रिभ्यः सचिवेभ्योऽधिकोचितमधिकयोग्यम् असिं भुजं धैर्यं गणयन् सन् समं युगपत्, त्रिभ्योऽसिभुजधैर्येभ्योऽधिकोचितं संकोचितं शत्रुं करवै ॥

नरचूर्णाविदाहेन न वाहानुमताद्रणात् ।
नाप्यद्य केशवक्लेशान्मत्कोपाग्निः प्रशाम्यति ॥ ८ ॥

नरेति ॥ मत्कोपाग्निर्मत्क्रोधानलो रघूर्णाविदाहेन रघूणां रघुवंशजानाम् ऊर्णायास्तत्सदृशस शिरोभूतस्य रामस्य विदाहेन भस्मीकरणेन न, वा अथवा हानुमताद्धनुमत्संबन्धिनो रणात् न, केशवक्लेशाल्लक्ष्मणव्यथातोऽपि अद्य न प्रशाम्यति ॥ भारतीये—नरघूर्णाविदाहेन नरस्यार्जुनस्य घूर्णया भ्रमणेन विदाहेन संक्लेशेन । वाहानुमतादश्वाभीष्टात् । केशवक्लेशाद् वासुदेवपीडातः ॥

इत्यतोरावणो रोषसिद्धेस्ताम्यन्निवात्मनि ।
बहुधामागधैर्योऽसौ वीरैश्चक्री रणं ययौ ॥ ९ ॥

इत्यत इति ॥ बहुधामा प्रचुरप्रतापः, अगधैर्यः स्थिरधैर्यः असौ रावणश्चक्री चक्रवर्ती इत्येवंप्रकारेण अतोऽस्याः रोषसिद्धेरात्मनि ताम्यन्निव वीरैर्भटै रणं ययौ ॥ भारतीये— यो जरासंधनामा चक्री चक्रवर्ती स इत्येवंप्रकारेण अतोऽस्या अरौ शत्रौ अणोरल्पायाः रोषसिद्धेरात्मनि निजे असौ खड्गे ताम्यन्निव बहुधा अनेकधा मागधैर्मगधदेशीयैर्वीरैः क्षत्रियैः सह रणं ययौ ॥

जित्वारयः सुखं बन्धून्प्राध्वं कृत्यविचक्षणे ।
इति चित्तेऽमुना वैरं प्राध्वंकृत्य विचक्षणे ॥ १० ॥

(समपादयमकम्)

जित्वेति ॥ अमुना रावणेन जरासंधेन च, हे अरयः शत्रवः, यूयं बन्धूञ्जित्वा सुखं यथा स्यात्तथा प्राध्वं तिष्ठत इति कृत्यविचक्षणे कार्यकुशले चित्ते वैरं प्राध्वंकृत्य बद्ध्वा विचक्षणे हसितम् । उपसर्गवशाद्धातोरर्थान्तरे वृत्तिः ॥

पशुवच्छादयन्भीरूञ्शूरानच्छादयं समम् ।
हृद्यस्वच्छादयन्धातोरस्त्रैः स्वच्छादयन्नभः ॥ ११ ॥

(पादमध्ययमकम्)

पश्विति ॥ अयं रावणो जरासंधश्च । हृदि अन्तःकरणे अस्वच्छात्कुटिलात् धातोरभिप्रायात् अयन् गच्छन् भीरून् पशुवत् पशूनिव शादयन् सन् समं युगपत् शूरान् अच्छाद् अच्छिनत् । नभो गगनं स्वच्छादयत् अतिशयेन छादयति स्म ॥

वक्षसासौ पुरोभागं तेजसादित्यमुर्वराम् ।
शस्त्रैरघुक्षतोद्यतः कीर्त्या तस्तारदिङ्मुखम् ॥ १२ ॥

वक्षसेति ॥ असौ रावणो रघुक्षतोद्यतो रघुवधोद्यतः सन् वक्षसोरसा पुरोभागं सुभटानामुपसारणम्, तेजसा आदित्यम्, शस्त्रैरुर्वरां भूमिम्, कीर्त्या दिङ्मुखम् तस्तार संवृतवान् ॥ भारतीये—असौ खड्गे उद्यत उद्युक्तो जरासंधः, यतः तेन तेन तं तम् अघुक्षत समवृत । अतः कीर्त्या तारदिङ्मुखं विशदाशामुखम् अघुक्षत ॥

स हस्ताभ्यां चमूहस्तौ सहस्ताभ्यामपीडयत् ।
बिभ्रज्जिष्णुः प्रतापाग्नौ बिभ्रत्संधित्सुतामिव ॥ १३ ॥

(पादादियमकम्)

सहेति ॥ सहः समर्थः स रावणो जरासंधश्च प्रतापाग्नौ बिभ्रजिषुः पक्तुमिच्छुः संधित्सुतां संधानमिच्छुतां बिभ्रद् दधद् इव ताभ्यां लोकप्रतीताभ्यां हस्ताभ्यां चमूहस्तौ सेनापार्श्वावपीडयत् ॥

प्रापूरयन्नभस्त्रातः शिक्षामार्गेण मार्गणैः ।
प्रापूरयं न भस्त्रातस्ते निर्याताः पुरोगतैः ॥ १४ ॥

(विषमपादयमकम्)

प्रापूरेति ॥ शिक्षामार्गेण त्रातो (रावणो जरासंधो वा) मार्गणैर्बाणैर्नभो गगनं प्रापूरयत् । तथा ते मार्गणाः भस्त्रात इषुधेर्निर्याताः सन्तः पुरोगतैरग्रगतैर्मार्गणैः सह रयं वेगं (किम्) न प्रापुः । अपि तु प्रापुरेव ॥

प्रस्वापनास्त्रमसृजत्स तामसमयोऽदयम् ।
द्विषां तेनाकरोन्मोहं सतामसमयोदयम् ॥ १५ ॥

(समपादयमकम्)

प्रस्वापेति ॥ तामसमयः कोपनिर्वृत्तः स प्रतिविष्णुरदयं यथा स्यात्तथा प्रस्वापनास्त्रं प्रकर्षनिद्राशस्त्रम् असृजत् मुक्तवान् । तेन प्रस्वापनास्त्रेण सतां विद्यमानानां द्विषां शत्रूणाम् असमयोदयम् अनवसरोदयं मोहम् अकरोत् ॥

मत्तसुप्तामिव चमूं तां तमोघमयोऽजयत् ।
शरभिन्नं धियारीणां तान्तमोघमयोजयत् ॥ १६ ॥

(समपादयमकम्)

मत्तेति ॥ तमोघमयोऽविवेकपापनिर्वृत्तः स प्रतिविष्णुस्तां चमूं मत्तसुप्तां पूर्वं मत्तां पश्चात्सुप्ताम् इव अजयत् । तथा अरीणाम् ओघं वृन्दं शरभिन्नं बाणजर्जरितम् धिया बुद्ध्या तान्तं खिन्नम् अयोजयत् ॥

अरयो भीरवश्चक्रे जाताश्चित्रार्पिता इव ।
अरयो भीरवश्चक्रे व्याकुलैस्तद्वधूकुलैः ॥ १७ ॥

(विषयपादयमकम्)

अरय इति ॥ भीरवो भयवन्तोऽरयः शत्रवश्चक्रे चक्रव्यूहे चित्रार्पिता इव जाताः । तथा च व्याकुलैर्व्यग्रैस्तद्वधूकुलैररातिवधूवृन्दैररयो मन्दो भीरवो भयध्वनिश्चक्रे कृता ॥

अश्वोरसपतत्पत्तिः सुप्ताधोरणहस्तिका ।
सेनाक्षिपद्भियेवाङ्गमक्षधूःसुप्तसारथिः ॥ १८ ॥

अश्वेति ॥ अश्वोरसपतत्पत्तिरश्वोरसेनाश्वप्रधानोरसा पतन्तः पत्तयो यस्यां सा, सुप्ता-

धोरणहस्तिका सुप्ता आधोरणा हस्तिपका येषां तादृशो हस्तिनो यत्र, अक्षधूःसुप्तसारथिरक्षधुरि सुप्ताः सारथयो यस्यां तादृक् सेना भिया भयेनेवाङ्गमाक्षिपदाक्षिप्तवती ॥

ससास स स सांसासि यं यं यो यो ययुं ययौ ।
नानन्नानन्नोनौनीः शशाशाशां शशौ शशः ॥ १९ ॥

(एकाक्षरपादः)

ससासेति ॥ यो यः पुरुषः, यं यं ययुमश्वं ययौ प्राप स स पुरुषः सांसासि अंसे स्कन्धेऽसिना सहितो यथा स्यात्तथा ससास सुष्वाप । तथा—अनोनौनीः अनोनावं नयति रथप्रवहणप्रेरकः ना पुमान् अनन् श्वसन् न आनत श्वसिति स्म । तथा—शशः अञ्जः पशुः शशाश प्लुतं गतवान् । आशां वाञ्छां शशौ तनूचकार ॥

द्राग्दानोच्छेदभीत्येव प्रासं शक्तिमसिं शरम् ।
पाशं परश्वधं शस्त्रीं ववर्षास्त्रमयो रिपुः ॥ २० ॥

द्रागिति ॥ अस्त्रमयो रिपुर्दानोच्छेदभीत्या खण्डनोच्छेदभयेन द्राक् शीघ्रं प्रासं शक्तिम् असिं शरं पाशं परश्वधं शस्त्रीं ववर्ष ॥

रैरोऽरिरीरुरूरारा रोरुरारारिरैरिरत् ।
रुरूरोरुरुरारारुरुरुरूरुररेरुरः ॥ २१ ॥

(एकाक्षरः)

रैरविति ॥ रैरः अरिरीः उरूः आराः रोरुः आरारिः ऐरिरत् रुरूरोः उरुः आर अरुः उरुः ऊरुः अरेः उरः इति पदानि ॥ रैरः रायं राति तादृक्, रोरुः रोरवीति सः । यङ्लुगन्ताड्डिच् । अत्यर्थं शब्दं कुर्वाणः, आरारिः आरस्यारिसमूहस्यारिः, उरुर्गरिष्ठः, अरिरीः अरिणा अरवता चक्रेण रिणाति हिनस्ति स प्रतिविष्णुः (कर्ता) उरूर्बृहतीः, आराः शस्त्रविशेषान् (प्रयोज्यकर्म) (शत्रून्) ऐरिरत् प्रेरितवान् । तथा च उरुर्गरिष्ठः, रुरूरोः रुरोरिवोरू यस्य तादृशः, अरेः शत्रोः, ऊरुः, उरो वक्षश्च, अरुर्व्रणम्, आर प्राप्तवान् ॥

याष्टीकन्ते सरव्यग्रा खेऽमरस्त्रीर्मृताश्च ताः ।
याष्टीकं ते स रव्यग्रास्तं प्रतीच्छन्ति नाभितः ॥ २२ ॥

(समपादयमकम्)

याष्टीति ॥ च यतः—मृता भटाः याः खे दिवि स्मरव्यग्राः सन्ति ता अमरस्त्रीर्देवाङ्गनाः टीकन्ते लभन्ते । अतः रव्यग्राः सूर्यवत्प्रधाना ते भटाः तं याष्टीकं यष्टिप्रहरणसमरम् अभितः सामस्त्येन किं न प्रतीच्छन्ति स्म । अपि तु प्रतीच्छन्ति स्मैव ॥

एकः सर्वास्त्रसंग्राहः शिलेयं चालयन्नुरः ।
दिक्पालानां समाहारश्चलन्निव चचाल सः ॥ २३ ॥

एक इति ॥ एक एकाकी असहायः सर्वास्त्रसंग्राहः सर्वेषामस्त्राणां संग्राहोऽङ्गीकरणं यस्य तादृक् स प्रतिविष्णुः चलन् क्षोभं गच्छन् दिक्पालानां समाहार इव । शिलेयं शिलातुल्यकठोरमुरो वक्षश्चालयंश्चचाल ॥

असत्कमशिरोऽश्वीयं हास्तिकं चित्तमोहतः ।
पपात वञ्चन्न सासौ हास्ति कंचित्तमोहतः ॥ २४ ॥

(समपादयमकम्)

असेति ॥ चित्तमोहतो वैचित्त्यात् असत्कम् अनष्ठीवत्कम् अश्वीयमश्वसमूहः, चित्तमोहतः अशिरोऽमस्तकं हास्तिकं गजसमूहः पपात । हा कष्टं तमोहतः कोपाविष्टः असौ कंचित् वञ्चन् त्यजन् न अस्ति स्म ॥

अंसोत्सेधेन सोत्सेकस्त्रिमूर्ध इव केशवः ।
पापपाक इवामुष्य प्राभवत्पारिपन्थिकः ॥ २५ ॥

अंसविति ॥ अंसोत्सेधेन स्कन्धोच्छ्रयेण त्रिमूर्धस्त्रिमस्तक इव, सोत्सेकः सगर्वः, केशवः, अस्य प्रतिविष्णोः, पापपाक इव पारिपन्थिकः प्रतिषेधकः प्राभवत् ॥

मणेः प्रत्युरसस्यासीत्सुप्रातीकुर्वता जगत् ।
रवेः सर्वपथीनेन तेजसेवोदयाचलः ॥ २६ ॥

मणेरिति ॥ केशवः प्रत्युरसस्योरसि स्थितस्य मणेः कौस्तुभस्य रवेरिव जगत् भुवनं सुप्रातीकुर्वता सुप्रभातीकुर्वता, सर्वपथीनेन सर्वान्पथ आप्नुवता, तेजसा उदयाचल इव आसीत् ॥

वीरारिवैरवारी वै वव्रे रविरिवोर्वराम् ।
विवोवरैरविवरैरवोवावा विराववान् ॥ २७ ॥

(द्व्यक्षरः)

वीरेति ॥ वीरारिवैरवारी वीराणामरीणां वैरं वारयति प्रच्छादयति तच्छीलः, अवोवावा अवोऽपराधलक्षणं तमो वनति संभनक्ति । वनिपि प्रत्यये 'विड्वनोः' इति आत्वम् । अनीतितमोभञ्जकः, विराववान् गम्भीरध्वनिमानी, केशवः रविरिव सूर्य इव उर्वरां सर्वशस्याढ्यभूमिम्, अविवरैर्निबिडैः, विवोवरैः तेजोमण्डलैः, वव्रे प्रच्छादितवान् ॥

योऽयेयायययियायायं पापापापोपपान्पपौ ।
नूननूनानिनोऽनेनास्तत्तत्तातोऽततातततिम् ॥ २८ ॥

(एकाक्षरपादः)

य इति ॥ अयेयायः अयेयोऽगम्यः अयो यस्य तादृक्, अगम्यगमनः यः इनः स्वामी, आयं द्रव्योत्पत्तिस्थानम्, इयाय, स अनेनाः पापरहितः, इनः, पापापापोपपान् पापमपराधम् अप,

न आप्नुवन्ति तान् पापापापान् उपपान्ति रक्षयन्ति तादृशो निरपराधरक्षकान्, अनूनान् प्रचुरान्, नृन् पपौ ररक्ष । तत्तस्मात्कारणात्, तत्तातस्तापिता सन् आर्तातिं श्रेणीम् अतत विस्तारितवान् ॥

छिन्नैः शफैः समीकेऽस्त्रैरर्वतां गोखुरैरिव ।
हस्तिहस्तक्रमैः कीर्णे मुसलोलूखलैरिव ॥ २९ ॥
तेजिते तमसा जेरे रेजेऽसामततेऽजिते ।
भासितेऽरदनारीभे भेरीनादरतेसिभा ॥ ३० ॥ (युग्मम्)
(गतप्रत्यागतम्)

छिन्नैरिति ॥ अस्त्रैः छिन्नैः, अर्वतामश्वानां शफैः खुरैः गोखुरैरिव । अश्वशफानां मध्ये छिन्नत्वेन गोखुरोपमोक्तिः । हस्तिहस्तक्रमैः शुण्डालशुण्डाचरणैः मुसलोलूखलैरिव कीर्णे व्याप्ते, तेजिते प्रदीप्ते, असामतते असामभिः सकोपैस्तते व्याप्ते, अजिते अनभिभूते, भासिते प्रकाशिते, अरदनारीभे अरदना अदन्ता अरीणामिभा गजा यत्र, भेरीनादरते भेरीणां नादे रतं यस्य तादृशि, समीके सङ्ग्रामे तमसान्धकारेण जेरे जीर्णे विनष्टम् । तथा असिभा खड्गदीप्ती, रेजे शोभिता ॥

गर्भापोढा इव हयाः पङ्कात्यस्ता इव द्विपाः ।
उन्मत्ता इव तत्रासञ्श्रैमताः शस्त्रपाणयः ॥ ३१ ॥

गर्भेति ॥ तत्र सङ्ग्रामे श्रैमता विष्णुसंबन्धिनः हया अश्वा गर्भापोढा गर्भनिर्गता इव, द्विपा गजाः पङ्कात्यस्ताः कर्दमनिर्गता इव, शस्त्रपाणयः सुभटा उन्मत्ता इव, आसन् ॥

अत्यध्वान्तां महोपायां चमूमुत्सृज्य वैष्णवीम् ।
अत्यध्वां तां महोऽपायां वैरीयां तत्तमोऽविशत् ॥ ३२ ॥
(समपादयमकम्)

अत्येति ॥ तत् तमो अत्यध्वान्तां ध्वान्तमुत्साहं न अतिक्रान्तां महोपायां महानुपायो यस्यां तादृशं वैष्णवीं चमूम् उत्सृज्य त्यक्त्वा, अत्यध्वाम् अध्वानमतिक्रान्ताम् । 'उपसर्गादध्वनः' इति समासान्तः । महोऽपायां महसां प्रतापलक्षणतेजसामपायो विनाशो यस्यां तादृशं तां वैरीयां शात्रवीं चमूम् अविशत् ॥

अयानि तव तिष्ठ त्वं गृहाणायुधमायुधम् ।
इत्येकवाक्यौ वैरेऽपि तावाह्वेतां परस्परम् ॥ ३३ ॥

अयानीति ॥ अहं तव संमुखम् अयानि, त्वं तिष्ठ, आयुधम् आयुधं गृहाण, इत्येवं प्रकारेण, वैरेऽपि एकवाक्यौ समानवाक्यौ, तौ परस्परम् आह्वेतामाहूतवन्तौ ॥

लोलध्वजौ वहद्वाजिवेलौ तद्वत्तयो रथौ।
युद्धाम्बुधौ द्विनावं चेदन्योन्यमभिपातुकम्॥ ३४॥

लोलेति। चेद् यदि द्विनावं नौद्वयसमाहारः। 'नावो द्विगोः' इति टच्। अन्योन्यम् अभिपातुकं संमुखागमनशीलं स्यात्। तर्हि लोलध्वजौ चञ्चलकेतू, वहद्वाजिवेलौ वहन्तौ वाजिनावेव वेला ययोस्तौ, तयोर्विष्णुप्रतिविष्णवोः रथौ युद्धाम्बुधौ रणसमुद्रे, तद्वत् द्विनाववत् स्याताम्॥

स मेनेऽनेन सामर्थ्यमग्रे युधि दिवौकसाम्।
समेनेऽनेनसामर्थ्यमीयमानमरातिना॥ ३५॥

(समपादयमकम्)

स इति॥ स विष्णुरग्रे भाविनि, समेने समानस्वामिनि, युधि, अनेनसां पुण्यवतां दिवौकसां देवानाम्, अर्थ्यं श्लाघ्यम्, अनेन अरातिना सह ईयमानं प्राप्यमाणं सामर्थ्यं मेने ज्ञातवान्॥

अरिरस्त्रं रणेऽस्राक्षीदाग्नेयं धीरदीधिति।
अक्षान्तिं हृदयेऽनेकां निःसहं लङ्घयन्यथा॥ ३६॥

अरिरिति॥ अरिः शत्रुर्हृदये हृदि अनेकां प्रचुराम्, अक्षान्तिमक्षमां लङ्घयन् अतिक्रामन् यथा इव आग्नेयं वह्निविकारं धीरदीधिति धीरदीप्ति, निःसहं दुःसहम्, अस्त्रं शस्त्रम्, अस्राक्षीत् मुक्तवान्॥

कोपः कश्चिज्ज्वलत्यस्य कनकाश्मस्य किं द्रवः।
किं किंशुकवनं फुल्लं किं जिह्वा समवर्तिनः॥ ३७॥

कोप इति॥ अस्य शत्रोः कश्चित् कोपः कनकाश्मस्य सुमेरोः। 'अनोश्मायः' इति टच्। द्रवः किम्, फुल्लं पुष्पितं किंशुकवनं पलाशवनं किम्, समवर्तिनो यमस्य जिह्वा किम्, इति भ्रान्तिमुत्पादयन् ज्वलति दीप्तो जायते॥

इत्याशङ्क्य चिराज्जज्ञे संतप्तैर्भीरुकैः शिखी।
दृष्ट्या शूरैः पराच्छेदि भिदेयं भीरुधीरयोः॥ ३८॥

इतीति॥ इत्येवंप्रकारेण आशङ्क्य आशङ्कामुत्पाद्य चिरात् संतप्तैर्भीरुकैर्भयवत्पुरुषैः, दृष्ट्या अवलोकनमात्रेण शिखी दहनास्त्रम्, जज्ञे ज्ञातः। शूरैः पराच्छेदि परिच्छिन्न इयं भीरुधीरयोर्भिदा भेदः॥

सामिमीलदहो चक्षुः सामि मीलद्विपावलिः।
नवपुष्करमस्याः किं न वपुष्करणं वपुः॥ ३९॥

(पादादियमकम्)

सामीति ॥ अहो आश्चर्य सा द्विपावलिः सामि अर्धं मीलच्चक्षुरमिमीलत् । अस्या द्विपावलेः किं नवपुष्करं शुण्डादण्डाग्रं वपुः शरीरं करणमिन्द्रियजातं वपुरोजो नामिमीलत् । अमिमीलदेव ॥

अत्यन्तीनां हयालीयं सालिलङ्घिषत स्यदात् ।
निसर्गः कश्चिदस्यास्ति शक्तस्यान्यस्य चाङ्गिनः ॥ ४० ॥
(निरोष्ठ्यः)

अत्यन्तीति ॥ सा इयं अत्यन्तीनाम्। 'अवारपार–' इति खः। भृशंगामिनी हयाली स्यदाद् वेगादलिलङ्घिषत लङ्घितुमिष्टवती । शक्तस्य समर्थस्य, अन्यस्य भीरोः, अस्य अङ्गिनः, कश्चित् निसर्गः स्वभावोऽस्ति ॥

रवेरावरणं चापी कुर्वाणः शरणं शरैः ।
कृष्णो मेघो जगर्जोच्चैर्व्याप्योपककुभं भुवः ॥ ४१ ॥

रवेरिति ॥ चापी धनुष्मान् कृष्णो लक्ष्मणो विष्णुश्च शरैर्बाणै रवेः सूर्यस्यावरणं प्रच्छादनं भुवः पृथ्व्याः शरणं विदारणं कुर्वाणः सन् । चापी शक्रधनुष्मान्, रवेरावरणम्, शरैर्जलैः, भुवः शरणं कुर्वाणः, कृष्णो मेचकः, मेघ इव । उपककुभं दिशं दिशं प्रति । 'झयः' इति समासान्तः। व्याप्य, उच्चैरत्यर्थं जगर्ज ॥

अमरिष्यज्जनः पूर्वं धूमध्यामाग्निशङ्कया ।
विद्युत्वन्तं घनं वीक्ष्य नामोक्ष्यच्चेत्स विप्रुषः ॥ ४२ ॥

अमरीति ॥ जनो विद्युत्वन्तं तडिद्युक्तं घनं वीक्ष्य स घनो विप्रुषो जलकणान्, चेत् न अमोक्ष्यत्, तदा धूमध्यामाग्निशङ्कया धूमध्यामलवह्निभ्रान्त्या पूर्वं प्रथमम् अमरिष्यत् ॥

भूरिरभ्रभरो रेभी कोऽनेकानीककाननम् ।
काकालिकी किलाकाले नोपापापोऽपि नापपुः ॥ ४३ ॥
(द्व्यक्षरपादः)

भूरीति ॥ किल लोकोक्तौ भूरिः प्रचुरो रेभी ध्वनिमान् कोऽभ्रभरो मेघसमूहोऽनेकानीककाननं प्रचुरसैन्यकान्तारम्, अकाले असमये न उपाप व्याप । का अकालिकी विद्युत् प्रकरणात् न उपाप । अपि तु व्यापैव । आपो जलानि अपि न आपपुः ॥

रणमेकार्णवं कर्तुमारेभेऽभ्रं शनै रसत् ।
अभूद्वह्निरपां घोरैरारेभे भ्रंशनैरसन् ॥ ४४ ॥
(समपादयमकम्)

रणमिति ॥ अभ्रं मेघः, शनैर्मन्दमन्दं रसत् वदत् । सत् एकार्णवं रणं कर्तुम् आरेभे प्रारब्धवान् । तथा घोरैर्भयानकैरपां भ्रंशनैः संघट्टनैः, आरेभे गर्जे सति असन्नविद्यमानो वह्निः विद्युत्पातात् अभूत् संजातः ॥

नागाननागा गगने सज्जाजिः सासृजोऽसृजत्।
रिपुः प्रपपरुः पापाः परपारपरम्पराम् ॥ ४५ ॥

(द्व्यक्षरपादः)

नागेति ॥ अनागा निरपराधः सज्जाजिः प्रगुणितरणो रिपुः, सासृजः सरुधिरान्, नागान् सर्पान्, असृजन्मुक्तवान्। तथा च पापा नागाः परपारपरम्पराम् परं शत्रुं पिपुरति धरन्ति तेषां परपाराणां शत्रुभृत्यानां परम्परां श्रेणीं प्रपपरुः प्रपूरितवन्तः ॥

जलवेणीति संतुष्य तत्रासादित सा हसम्।
विष्णोश्चमूर्विभाव्याहिं तत्रासादितसाहसम् ॥ ४६ ॥

(पादयमकम्)

जलेति ॥ विष्णोर्नारायणस्य सा चमूः सेना तत्र रणे जलवेणी जलधारा इति विभाव्य संतुष्य हसं हास्यम् आदित गृहीतवती। तथा आसादितसाहसम् आसादितं साहसं येन तादृशम्, अहिं सर्पं विभाव्य तत्रास ॥

अधोऽधः पेतुरानीलाँल्लेलिहानान्कृशानवः।
वर्षतो विषमम्भोदानशनेरिव राशयः ॥ ४७ ॥

अध इति ॥ कृशानवोऽग्नय आनीलान् ईषन्नीलान् विषं गरलं वर्षतो लेलिहानान् सर्पान्। अशने राशयो विद्युत्पुञ्जा आनीलान् समन्ततो नीलान्, विषं जलं वर्षतोऽम्भोदान्मेघान् इव। अधोऽधः अधस्तात्। 'द्वितीयाम्रेडितान्तेषु' इति षष्ठ्यर्थे द्वितीया। पेतुः पतिताः ॥

वर्माण्याप्रपदीनानि दीनानि विभिदुः सदा।
दुःसदा भुजगोपाया गोपाया दुर्मुखे वृथा ॥ ४८ ॥

(शृङ्खलायमकम्)

वर्मेति ॥ दुःसदा दुर्गम्या भुजगोपायाः सर्पव्यापाराः आप्रपदीनानि आगुल्फप्राप्तानि। 'आप्रपदं प्राप्नोति' इति खः। सदा दीनानि क्षीणानि, वर्माणि संनहनानि विभिदुः। युक्तमेतत्। गोपाया रक्षा दुर्मुखे दुर्जने वृथा भवति ॥

सर्पवेणी विसर्पन्ती दानधारेव दन्तिनः।
कटयोराकुला भ्रेजे शृङ्खला पादयोरिव ॥ ४९ ॥

सर्पेति ॥ आकुला व्याकुला सर्पवेणी पन्नगश्रेणी कटयोः कपोलयोर्विसर्पन्ती विजृम्भमाणा सती दानधारेव, पादयोर्विसर्पन्ती शृङ्खलेव, भ्रेजे शोभिता ॥

नागायत्तं सुजित्याभिर्नभोऽभूदिव दारितम्।
नागायत्तं सुजित्याभिर्मायाभिर्नोदितं जनः ॥ ५० ॥

(पादयमकम्)

नागेति ॥ नागायत्तं सर्पव्याप्तं नभो गगनं सुजित्याभिः शोभनहलीभिर्दारितं विदीर्णम् इव अभूत्। जनः आभिर्मायाभिः सुजित्य अनायासेन शत्रूञ्जित्वा उदितं तं प्रतिविष्णुं न न अगायत्। अगायदेव ॥

ददर्देऽदोऽद्दरिद्रोऽरिरद्रिरौद्रोऽरुरादरी।
दूरादरं दरं दद्रुरार्द्रा दद्रुर्दरीर्दरी ॥ ९१ ॥

(द्यक्षरः)

ददर्दे इति ॥ अदरिद्रः पुण्यवान्, अद्रिरौद्रः पर्वतवद्भयानक आदरी आदरवान् दरी भयानकोऽरिरुदः एतत् अरुर्व्रणं ददर्दे दत्तवान्। आर्द्राः स्निग्धचित्ता अरं शीघ्रं दरं भयं दद्रुर्गताः। तथा च दूराद्दरीः कन्दरान् दद्रुर्गतवन्तः ॥

प्रौर्णवीदथ सौपर्णः कीर्णपर्णः फणाभृतः।
कृष्णोदीर्णोऽर्णवस्याग्निस्तरङ्गानिव घूर्णतः ॥ ९२ ॥

प्रौर्णेति ॥ अथारिप्रौढ्यनन्तरं कृष्णोदीर्णो नारायणप्रेरितः सौपर्णो गरुडः कीर्णपर्णः प्रसारितपत्रः सन् घूर्णतो भ्रमतः फणाभृतः सर्पान्। अर्णवस्य समुद्रस्य अग्निर्वाडवानलस्तरङ्गानिव। प्रौर्णवीत् प्रच्छादितवान् ॥

अरुणत्फाणिनगणानुच्चचार समुद्धृतान्।
सोऽन्त्राणीव रुषा कर्षन्नुच्चचारसमुद्धृतान् ॥ ९३ ॥

(समपादयमकम्)

अरुणेति ॥ समुत् सहर्षः स सौपर्णः फाणिनगणान् सर्पीयसमूहान्, अरुणद् रुद्धवान्। ततश्च उच्चचारसमुद्धृतान् उच्चैर्गमनसमुत्क्षिप्तान्, धृतान् अन्त्राणि इव रुषा कर्षन् सन् उच्चचार ऊर्ध्वं भक्षितवान् ॥

गरो गिरिगुरुर्गौरैररागैरुरगैररम्।
मुमुचेऽमी चमूमुच्चाममाचाममुचोऽमुचन् ॥ ९४ ॥

(द्यक्षरार्धः)

गर इति ॥ गौरैः शुक्लैररागैरनुरागरहितैरुरगैः सर्पैर्गिरिगुरुः पर्वतगरिष्ठो गरो गरलं मुमुचे मुक्तः। अमी उरगा आचाममुचो भक्षणमुक्ताः सन्तोऽमा युगपद् उच्चां चमूम् अमुचन् मुक्तवन्तः ॥

आधुनानः करं भानुरापतन्मण्डलस्थितिम्।
प्रयोगं गारुडं प्राप्य नागदष्टोऽश्वसीदिव ॥ ९५ ॥

आधुनेति ॥ भानुः सूर्यः। नागदष्टः सर्पदष्टः पुरुष इव गारुडं गरुडकृतं प्रयोगं

प्राप्य मण्डलस्थितिं परिवेषं मन्त्रचक्रम् आपतन् करं किरणं हस्तम् आधुनानः कम्पयन् सन्नश्वसीदुल्ललास ॥

स दिदंक्षाममायासीत्पक्षिराजो रुरुत्सया।
सदिदं क्षाममायासीच्चिन्तयेवाहिमण्डलम् ॥ ९६ ॥

(पादयमकम्)

स दीति ॥ स पक्षिराजो गरुडो रुरुत्सया रोद्धुमिच्छया अमा युगपत् दिदंक्षां दंष्टुमिच्छाम् अयासीत् प्राप्तवान्। तथा च इदमहिमण्डलं सर्पवृन्दं क्षामं क्षीणं सत् चिन्तया इव आयासीत् खेदमनुभवति स्म ॥

पलायांचक्रिरे नागा नैव नागान्महानृपाः।
निस्तुदन्नपि चञ्चा तान्गरुत्मान्पर्णवायुना ॥ ९७ ॥
वनेऽपूरि रिपूनेव नेयताक्षक्षतायने।
पूतानेककनेता पू रिक्षकर्यर्यकक्षरि ॥ ९८ ॥ (युग्मम्)

(गतप्रत्यागतपादः)

पलायामित्यादि ॥ नागाः सर्पाः पलायांचक्रिरे, महानृपा नरेन्द्राः नैव पलायांचक्रिरे। पूतानेककनेता पूताः पवित्रीकृता अनेके येन तादृशः कस्य विष्णोर्नेता वाहकः, पवित्रीकुर्वेद्विष्णुवाहकः पूः पवमानः प्लवमानो गरुत्मान् गरुडोऽपि तान् नागान्, चञ्चा निस्तुदन् सन्, नेयताक्षक्षतायने नेयानां प्राप्ये गम्ये पदार्थे च रथे नेयः प्रवर्तते' इत्युक्ते रथानां तेषु, 'विस्तारे जनके चक्रे तशब्दोऽप्यभिधीयते' इत्युक्तेः। चक्रेषु अक्षैश्चक्राधारकाष्ठैः क्षतानि खण्डितानि अयनानि मार्गा यस्मिन् तादृशि, रिक्षकर्यर्यकक्षरि रिक्षकरिणो हिंस्रगजा अर्यकक्षरो अर्यस्य 'स्वामिनि नीरदे सूर्ये प्रधानेऽपि च वस्तुनि। देवदन्तिनि वै दक्षैरर्यशब्दोऽभिधीयते ॥' इत्युक्तेः ऐरावतगजस्य कक्षाम् ऋच्छन्ति गच्छान्ति। विच्। ऐरावतस्पर्धाबद्धा यत्र तादृशि, वने, रिपून् एव पर्णवायुना पक्षवातेन अपूरि आप्यायते स्म ॥

इति मोघं बभूवारिर्मन्त्रयुद्धमयुङ्क्त यत्।
प्रागनालोचितस्यास्मिन्मन्त्रस्यावसरः कुतः ॥ ९९ ॥

इतीति ॥ अरिर्यत् मन्त्रयुद्धम् अयुङ्क्त तदित्येवंप्रकारेण मोघं निष्फलं बभूव। युक्तमेतत्। यतः—अस्मिञ्शत्रौ प्रागनालोचितस्य प्रमाणनयनिक्षेपैरविचारितस्य, मन्त्रस्य अवसरः प्रस्तावः कुतः कस्मात् स्यात् ॥

अविस्मरन्परावातमित्थं कस्यचिदस्मरत्।
यदर्थं यतते शूरस्तदर्थं विस्मरेत्कथम् ॥ ६० ॥

अवीति ॥ इत्थमेवंप्रकारेण पराघातं शत्रुवधम् अविस्मरन् असावरिः कस्यचित्। 'अधीगर्थ–' इति कर्मणि षष्ठी। अस्मरत्। युक्तमेतत्। यतः—शूरो यदर्थं यतते तदर्थं कथं विस्मरेत् ॥

ननूधसि पयोऽस्तीति कुण्डोध्नीनां फलं भवेत्।
समेत्य भुक्तमात्मीयं तत्संभुक्तं मया धनम् ॥ ६१ ॥

नन्विति ॥ ननु ऊधसि पयो दुग्धम् अस्ति इत्येव कुण्डोध्नीनां फलं भवेत्। अतो यदात्मीयं स्वकीयं धनं मया प्रतिविष्णुना समेत्य मिलित्वा भुक्तं तदेव संभुक्तं सम्यग् भुक्तम् ॥

रणे प्राणाः सदातिथ्यं प्रीणितास्तथ्यमर्थिनः।
निःशेषास्तस्य ते मेऽस्य भुक्तशेषा हि कीर्तयः ॥ ६२ ॥

रण इति ॥ रणे प्राणाः आतिथ्यं भजन्ते। तथा निःशेषाः समस्ता अर्थिनो याचकाः तथ्यं सत्यं प्रीणिताः। युक्तमेतत्। हि यतः—तस्य ते, अस्य मे, कीर्तयो भुक्तशेषा भुक्तोद्धृता भवेयुः ॥

भुज्यतेऽवारपारीणं मयैकेनार्जितं यशः।
सोऽयं लोभो गुणो वास्तु सहभोगो न सह्यते ॥ ६३ ॥

भुज्यते इति ॥ एकेन एकाकिना मया अवारपारीणं पारावारगामि यशोऽर्जितं सद्भुज्यते। सोऽयं लोभः कार्पण्यं गुणो वास्तु। यतः—सहभोगः शत्रुणा सह मिलित्वा भोगो न सह्यते सोढुं शक्यते ॥

अरावणञ्जगद्विश्वं करवै तदविष्णु वा।
नयोक्तव्याजरासंधं वागितोऽन्या न वर्तते ॥ ६४ ॥

अरावेति ॥ तद् विश्वं समस्तं जगदरावणं रावणरहितम्, अविष्णु लक्ष्मणरहितं वा करवै। इतोऽस्याः प्रतिज्ञाया अन्या नयोक्तव्या नयेन उक्तं व्यं संवरणं यया सा नीतिप्रतिपादितसंवरणा अजरा नूतना वाग् असंधम् अप्रतिज्ञं यथा स्यात्तथा, न वर्तते ॥ भारतीये—अरौ शत्रौ, अणन् गर्जन् अहमविष्णु नारायणरहितम् अजरासंधं जरासंधरहितं वा ॥

इति चक्रस्य तत्कालमध्यगादभियोगतः।
अकालचक्रं लोकोऽयमध्यगादभियो गतः ॥ ६५ ॥

(समपादयमकम्)

इतीति ॥ तत्तस्मात्कारणादित्युक्तप्रकारेण अभियोगत उद्यमात, चक्रस्य कालमवसरम् अध्यगात् स्मृतवान्। तथा अभियोऽभयाद् गतो निर्यातोऽयं लोकोऽकालचक्रम्, अध्यगात् ज्ञातवान् ॥

तथायुधिष्ठिरन्तारं कीर्त्या बलमधिष्ठितम् ।
चिन्तागृहप्रवेशैकप्रारम्भो राममाविशत् ॥ ६६ ॥

तथेति ॥ चिन्तागृहप्रवेशैकप्रारम्भः चिन्ताया एव गृहस्य संबन्धिनः प्रवेशस्य एकः प्रारम्भः, आयुधिष्ठि अतिशयितायुधवत् बलं सैन्यम् अधिष्ठितम्, रन्तारं क्रीडन्तं रामं राघवम्, आविशत् ॥ भारतीये—तारमुचं बलम् अधिष्ठितं युधिष्ठिरं प्रधानपाण्डवं रामं बलभद्रं च ॥

असुग्रीवाभियोगार्तमनाशं नरि पौरुषम् ।
विदधेऽनाकुलं सैन्यमनाशं न रिपौ रुपम् ॥ ६७ ॥

(समपादयमकम्)

अस्विति ॥ असुग्रीवाभियोगार्तं सुग्रीवस्याभियोगाभावेन ऋतं सुग्रीवोद्यमाभावेनार्दितम् अनाशं कलत्रपुत्रादौ अलोभितया स्वस्थं सैन्यम् अनाकुलमव्यग्रं सत् रिपौ शत्रौ नरि जने अनाशमनश्वरं पौरुषं विदधे । रुपं न विदधे ॥ भारतीये—असुग्रीवाभियोगार्तं कण्ठगतप्राणार्दितम् नाकुलं नकुलसंबन्धि ॥

योऽपि ना हनुमानाजेर्जुष्टो भेरिरवो गतिः ।
नोऽरुजे तीर्थनीत्याथोऽसौ सहायकमस्तुत ॥ ६८ ॥
योऽर्जुनोऽसौ स रुष्टोऽपि नाभेजे हायतीरिह ।
नुरर्थकमनीवोमा नागत्यास्तु तथोतिजे ॥ ६९ ॥

(गोमूत्रिकान्वयः)

योऽपीति ॥ अथ उ अहो योऽपि आजेः सङ्ग्रामात्, जुष्टः प्रीतः, भेरिरवो दुन्दुभिध्वनिर्ना पुरुषो हनुमान्, नोऽस्माकं तीर्थनीत्या पञ्चाङ्गमन्त्रेण अरुजेऽभङ्गाय गतिरस्ति । असौ सहायकं मित्रसमूहम्, अस्तुत प्रार्थितवान् ॥ भारतीये गोमूत्रिकाबन्धगर्भश्लोकेन—यः स लोकप्रसिद्धोऽर्जुनो मध्यमपाण्डवो रुष्टोऽपि सन्निह रणे असौ खङ्गे आयतीरुत्तरफलानि न आभेजे आश्रितवती । तथा ऊतिजे रक्षाजाते इह रणे नुः पुरुषस्य अगत्या अनीत्या उमा कीर्तिः । अर्थकमनी द्रव्यमनोहरा इव । न अस्तु ॥

हस्तच्युतास्त्रमाकम्पं मीलिताक्षं बलं जलम् ।
वाताहतमिवोत्सृज्य न स वेद क्रियान्तरम् ॥ ७० ॥

हस्तेति ॥ हस्तच्युतास्त्रं करगलितशस्त्रं, मीलिताक्षं संकुचितलोचनं, बलं सैन्यं, वाताहतं जलम् इव । आकम्पम् उत्सृज्य परित्यज्य, क्रियान्तरं न स्म वेद जानाति ॥

दूरक्षेशविभीमोऽस्मिन्निति वेपथुमीयुपि ।
त्रस्तं युद्धे परं सैन्यं विजगाहे विभीषणः ॥ ७१ ॥

दूरेति ॥ दूरक्षेशविभीमो दूरक्षेण दुःखेन रक्षितुमशक्येन ईशेन रावणेन विभीमो भयानको विभीषणो राक्षसः इत्येवंप्रकारेण, वेपथुं कम्पम्, ईयुषि गतवति, अस्मिन् युद्धे रणे त्रस्तं परमुत्कृष्टं सैन्यं विजगाहे विलोडितवान् ॥ भारतीये—विभीषणो भयानको भीमो द्वितीयपाण्डवो दूरक्षे दुष्टरक्षे युद्धे शवि शववत् सैन्यम् ॥

अजित्वान्यं श्रिया विष्णोरररिंसोरसी सरत् ।
संमुखं चक्रमुद्द्योतैरररिंसोरसीसरत् ॥ ७२ ॥

(समपादयमकम्)

अजित्वेति ॥ अरिः प्रतिविष्णुरन्यम् अजित्वा श्रिया लक्ष्म्या सह अरिरंसोः क्रीडितुमनिच्छोर्विष्णोरंसोरसी स्कन्धवक्षसी उद्द्योतैः प्रकाशैः संमुखं यथा भवति तथा सरत् गच्छत्, चक्रम् , असीसरत् प्रेरितवान् ॥

स प्रभाविक्रमं भूमेः कामुको नमयन्परान् ।
वामोऽथ चक्रं वक्रोऽरिः [प्रमुमोच न विक्रम्] ॥ ७३ ॥

(गूढचतुर्थपादः)

स इति ॥ अथ भूमेः कामुकः कामी वामः प्रतिकूलः वक्रः कुटिलः सोऽरिः परान् नमयन् सन् प्रभाविक्रमं प्रभावी क्रमो यस्य तत् चक्रं प्रमुमोच त्यक्तवान् । विक्रमं पराक्रमं न प्रमुमोच॥ अनुलोमगत्या द्वितीयाक्षरैः, विलोमगत्या चतुर्थाक्षरैः, पञ्चमाक्षरैः पुनरनुलोमगत्या चतुर्थपादोद्धारः ॥

सस्रेरुस्रैः सुसंसस्रे सीरिसीरासिरासरत् ।
सा ररास रसा सारा सुराः सस्रंसिरेऽसुराः ॥ ७४ ॥

(द्व्यक्षरः)

सस्रेरिति ॥ सस्रेः सूर्यस्य उस्रैः किरणैः सुसंसस्रे संकुचितम् । तथा च सीरिसीरासिः सीरी बलभद्रश्चासौ सीरासिः सीरो हलमेव असिर्यस्य स च आसरत् विजृम्भते स्म । तथा सारा प्रधाना सा रसा पृथ्वी ररास ध्वनितवती । तथा सुरा देवा असुरा दानवाः सस्रंसिरे पतिताः ॥

अरथाश्वं हरिर्युद्धमध्यवासादसिन्धुरम् ।
वीक्ष्यास्त्रं विदधत्सैन्यमध्यवासादसिं धुरम् ॥ ७५ ॥

(समपादयमकम्)

अरेति ॥ हरिरध्यवसात् निश्चयात् युद्धं रणं विदधत् कुर्वन् अरथाश्वं रथवाजिरहितम् असिन्धुरं गजरहितं सैन्यं विदधत् अस्त्रं वीक्ष्य, धुरं प्रधानम् असिं खड्गम् अध्यवासात् गृहीतवान् ॥

आज्ञासमापनीयेन विष्णुनैवास्त्रमैक्ष्यत ।
तेनैव तद्यशः केन निःशेषं समभुज्यत ॥ ७६ ॥

आज्ञेति ॥ आज्ञासमापनीयेन प्रतिज्ञानिर्वाहकेण, विष्णुनैव अस्त्रं चक्रमैक्ष्यतावलोकितम् । तथा तेनैव विष्णुनैव तद् यश ऐक्ष्यत । निःशेषं सकलं केन समभुज्यत भुक्तम् । न केनापि ॥

न तद्भुजतटं गच्छन्न रराज स्यदारुणम् ।
अर्कोऽञ्जनाद्रिपर्वेव नरराजस्य दारुणम् ॥ ७७ ॥

(समपादयमकम्)

नेति ॥ स्यदारुणं वेगलोहितं तच्चक्रं नरराजस्य दारुणं भुजतटं गच्छत् सत् । अञ्जनाद्रिपर्व अञ्जनगिरितटं गच्छन्नर्कः सूर्य इव । न न रराज रराजैव ॥

भियेदमिति नैकोऽपि जज्ञे तत्केशवः परम् ।
यस्यांसमगमच्चक्रं वोढा भारं हि बोधति ॥ ७८ ॥

भियेदमिति ॥ एकोऽपि भिया भयेन इदम् इति न जज्ञे ज्ञातवान् । परं केवलं यस्य अंसं प्रति चक्रम् अगमत् स केशवस्तच्चक्रं जज्ञे । युक्तमेतत् । हि यतः वोढा वाहको, भारं बोधति जानाति ॥

उत्तमोऽपरतो दुःखमुत्तमोऽभ्युदयोऽन्यतः ।
आसीदतिक्रमं तस्मिन्नासीदति रवाविव ॥ ७९ ॥

(अर्धपादादियमकः)

उत्तेति ॥ अपरतः पृष्ठतः, उत्तम उद्गतान्धकारं दुःखम्, अन्यतोऽग्रत उत्तम उत्कृष्टोऽभ्युदयः, तस्मिन् चक्रे । रवौ इव । अतिक्रमम् आसीदति आगच्छति सति, आसीत् ॥

चक्रं दुःसहमालोक्य चक्रन्दुः सहसारयः ।
मृतोत्पन्नेव साश्वा साश्वासा सा वैष्णवी चमूः ॥ ८० ॥

चक्रमिति ॥ अरयो दुःसहं चक्रम् आलोक्य सहसा शीघ्रं चक्रन्दुराक्रन्दितवन्तः । तथा—साश्वा सतुरगा साश्वासा आश्वाससहिता सा वैष्णवी चमूर्मृतोत्पन्ना पूर्वं मृता पश्चादुत्पन्नेवासीत् ॥

हस्तच्युते गते क्वापि कीदृशोऽप्यनुशेरते ।
साम्राज्यमूलेऽतीतेऽपि तादवस्थ्यं ययौ रिपुः ॥ ८१ ॥

हस्तेति ॥ कीदृशोऽपि पुरुषा वस्तुनि हस्तच्युते करपतिते क्वापि गते सति अनुशेरते

पश्चात्तापं कुर्वन्ते । रिपुः साम्राज्यमूले हस्त्यश्वरथपदातिलक्षणेऽतीते लोचनगोचरातिक्रान्तेऽपि सति, तादवस्थ्यं तदवस्थतां ययौ ॥

कृपया नापि मोहेन हस्तप्राप्तं हि दुस्त्यजम् ।
किंतु शत्रूत्तरप्रौढिं शुश्रूषुः स व्यलम्बत ॥ ८२ ॥

कृपयेति ॥ हस्तप्राप्तं करगतं वस्तु, कृपयानुकम्पया, मोहेनापि न दुस्त्यजम् । किंतु स शत्रूत्तरप्रौढिं रिपोरुत्तरकालीनसामर्थ्यं शुश्रूषुराकर्णयितुमिच्छुः सन् व्यलम्बत कालयापनां चकार ॥

अत्यन्तकोऽपकारेण निरास्थन्न तदानवम् ।
अत्यन्तकोपकारेण निरास्थं नतदानवम् ॥ ८३ ॥

(अर्धसमः मुरजसमुद्गकबन्धः)

अत्यन्तेति ॥ अत्यन्तको विष्णुरत्यन्तकोपकारेणातिशयितक्रोधकारिणा अपकारेण निरास्थं चञ्चलं नतदानवं नता दानवा येन तादृशं तद् आनवम् अनो रथस्य इदमानवं चक्रं न निरास्थत् निक्षिप्तवान् ॥

व्यापिपद्व्यापिपद्मोऽसौ रूक्षोरू क्षोभपीवरौ ।
तौ भुजौ भूभुजौ पूर्वं वाचोवाचोद्धुरो विभुः ॥ ८४ ॥

(ओष्ठ्यः)

व्यापीति ॥ व्यापिपद्मः व्यापी प्रतिषेधकः पद्मो रामो यस्य व्यापिनी कामव्यापारचतुरा पद्मा लक्ष्मीर्यस्य उद्धुर उत्कटः असौ, विभुर्लक्ष्मणो नारायणश्च । पूर्वं वाचा वाण्योवाच, पश्चात् क्षोभपीवरौ क्षोभपुष्टौ रूक्षोरू कर्कशोरू भूभुजौ भुवं भुञ्जाते इत्येवंशीलौ, तौ भुजौ व्यापिपत् व्यापारितवान् ॥

भोगः स एव सा संपन्नम हानिश्च यस्यते ।
सीतार्पणेऽपवादो मे न महानिश्चयस्य ते ॥ ८५ ॥

(समपादयमकम्)

भोग इति ॥ हे प्रतिविष्णो, यतो महानिश्चयस्य गृहीतप्रौढप्रतिज्ञस्य ते तव स एव भोगः 'सैन्यनाट्यनिधिरत्नभोजनान्यासनं शयनभाजनोऽपरम् । वाहनेन सममित्यभीप्सितं भोगमाप स दशाङ्गमीश्वरः ॥' इत्युक्तभेददशाङ्गलक्षणः, सैव संपल्लक्ष्मीः, अस्ति, अतो नम नम्रो भव, यस्यते यत्नं कुर्वते मे मह्यं सीतार्पणे जानकीदाने भूमिदानेऽपवादो जनदूषणं हानिश्च न स्यात् ॥

प्रत्याहतं सुराजानन्नामकीर्तिरिति स सः ।
प्रत्याह तं सुरा जानन्कथाक्षेपेण शात्रवः ॥ ८६ ॥

(विषमपादयमकम्)

प्रत्येति ॥ सुराः कोमलध्वनिः सुराजा शोभनो राजा । 'न पूजनात्' इति समासान्ताभावः । स शात्रवः शत्रुः । नामकीर्तिः त्रैलोक्यकण्टकेति जरासंधेति नाम्नैव कीर्तिः इति जानन् कथाक्षेपेण आनन् श्वसन् सन्, प्रत्याहतं तं नारायणं प्रत्याह स्म प्रत्युत्तरगोचरीकृतवान् ॥

रजश्छलेन दुर्दानं सुदानाः कृपयासवः ।
दृष्टोऽपन्थास्त्वया मार्गं दावाग्निर्नापि लङ्घते ॥ ८७ ॥

रजेति ॥ छलेन दुर्दानं रजः स्यात् तथा असवः प्राणाः कृपया सुदानाः सुखदेयाः स्युः । त्वया दृष्टोऽपन्थाः मार्गं न लङ्घते । दावाग्निरपि न लङ्घते ॥

त्रासो विरूपरेखा वा छायाया यदि वा हृतिः ।
मानिनः शठ मन्यन्ते तृणायापि न नायकम् ॥ ८८ ॥

त्रासविति ॥ हे शठ, मानिनोऽभिमानवन्तो मूल्यज्ञानिनो रत्नपरीक्षकाः । नायकं स्वामिनं, प्रधानरत्नं तृणायापि तृणतुलनामपि । 'मन्यकर्मणि' इति चतुर्थी । न मन्यन्ते । यदि तत्र त्रास उद्वेगो भङ्गः विरूपरेखा रौद्रत्वम् असौन्दर्यम् छायाया लोकव्यवहारस्य कान्तिविशेषस्य हृतिर्नाशः स्यात् ॥

शिश्रीषतोऽन्यमीर्त्सायै पारावारीणमात्मनः ।
यशः संकुचति व्याप्तं किंवानेनार्जयिष्यते ॥ ८९ ॥

शिश्रीति ॥ ईर्त्सायै वर्धितुमिच्छायै अन्यं परं शिश्रीषतः सेवितुमिच्छत आत्मनः पुरुषस्य पारावारीणं पारावारमलं गामि व्याप्तं प्रसृतं यशः संकुचति संकोचं प्राप्नोति । अनेन परसेवनेन किम् अर्जयिष्यते । न किमपि ॥

विधुरास्ते त्रपापेतः पराश्रये च ये स्थिताः ।
विधुरास्ते त्रपापेतः पूष्णो नास्योदये रविः ॥ ९० ॥

(विषमपादयमकम्)

विधिवति ॥ ये पराश्रये स्थितास्ते विधुरा भीतास्त्रपापेतः त्रपामपयन्ति । क्विप् । निर्लज्जाः स्युः । यतः—विधुश्चन्द्रः पूष्णः सूर्यस्योदये त्रपापेतो लज्जया त्यक्तः, सन् आस्ते । अस्य चन्द्रस्योदये रविः सूर्यस्त्रपापेतो नास्ते ॥

मा ज्ञाय्यसि निरस्त्रोऽहं हस्तेनास्त्रं हि मुच्यते ।
ततस्तलप्रहारेण मुञ्चास्त्रं क्राथयामि ते ॥ ९१ ॥

मा ज्ञायीति ॥ हे विष्णो, अहं निरस्त्रोऽस्त्ररहितोऽस्मि इति त्वया मा ज्ञायि मा बोधि । हि यतः हस्तेनास्त्रं मुच्यते । ततः कारणात् । अस्त्रं मुञ्च, तलप्रहारेण ते तव । 'जासिनिप्रहणनाटक्राथ—' इति षष्ठी । क्राथयामि त्वां हन्मि ॥

इत्याकर्ण्य तमुत्साहं साहंकारं सुरावली ।
सुरावलीला साशंसं साशं संप्रशशंस तम् ॥ ९२ ॥

(शृङ्खलायमकः)

इत्येति ॥ सुरावलीला सुरावा मधुरध्वनिर्लीला यस्याः तादृक् सुरावली देववृन्दम् इति पूर्वोक्तं तम् उत्साहम् आकर्ण्य, साहंकारं सगर्वं साशंसं सप्रशंसं साशं सवाञ्छं तं लोकप्रतीतं प्रतिविष्णुं संप्रशशंस प्रशंसां कृतवती ॥

शौर्यं ह्रीश्च कुलीनस्य स्वे नुः सद्मार्गलाञ्छनम् ।
वस्वितीवोक्तये भेर्यः स्वेनुः सद्मार्गलाञ्छनम् ॥ ९३ ॥

(समपादयमकम्)

शौर्यमिति ॥ भेर्यः कुलीनस्य नुः शौर्यं ह्रीश्च स्वे आत्मीये स्याताम् । तथा वसु सद्मार्गलाञ्छनं सतां सत्पुरुषाणां मार्गस्य लाञ्छनं चिह्नमेव वसु अस्ति इति उक्तये इव सद्मार्गलाञ्छनं मन्दिरार्गलोल्लङ्घनं यथा स्यात्तथा स्वेनुर्ध्वनितवत्यः ॥

गाथका गाथकाबन्धैः सज्जगुः स्थाम सज्जगुः ।
राशिराशिश्रवन्नाम वन्दिनां गुणवन्दिनाम् ॥ ९४ ॥

गाथका इति ॥ गाथका मङ्गलपाठकाः सत् समीचीनं स्थाम बलं गाथकाबन्धैर्जगुर्गायन्ति स्म । तथा—सज्जगुः सज्जा गीर्वाणी यस्य चतुरवचनो गुणवन्दिनां गुणस्तवनशीलानां वन्दिनां राशिः समूहो नाम अभिधानम् आशिश्रवत् श्रावितवान् ॥

देवैर्विमानशालायामाश्रितैर्मत्तवारणीम् ।
रणरङ्गस्तयोस्तत्र पूर्वरङ्ग इवाभवत् ॥ ९५ ॥

देवैरिति ॥ तत्र युद्धे तयोर्विष्णुप्रतिविष्ण्वो रणरङ्गः विमानशालायां मत्तवारणीं मत्तालम्बनम् आश्रितैर्देवैः । षष्ठ्यां प्राप्तायां तृतीया । देवानां पूर्वरङ्ग इव अभवत् संजातः ॥

नामोचितेन चक्रान्तं दोष्णावर्त्यामुचद्धरिः ।
नामोचि तेन च क्रान्तं धैर्यं जगति वैरिणा ॥ ९६ ॥

(विषमपादयमकम्)

नामोचितेनेति ॥ हरिर्नामोचितेन कीर्तनयोग्येन दोष्णा बाहुना चक्रान्तं चक्रस्वरूपं शस्त्रम् आवर्त्य भ्रमयित्वा, अमुचत् त्यक्तवान् । तेन वैरिणा तु जगति भुवने क्रान्तं प्रसृतं धैर्यं नामोचि त्यक्तम् ॥

तेनार्जितात्मशिरसा श्रीः कथं सा वहिःशिरः ।
इतीवोत्सृज्य सोऽन्याङ्गमुत्तमाङ्गमतोऽग्रहीत् ॥ ९७ ॥

तेनेति ॥ स नारायणस्तेन वैरिणा आत्मशिरसा निजमस्तकेन कृत्वा अर्जिता सा श्रीर्वहिःशिरः शिरसो बहिः कथं स्यादितीव हेतोरन्याङ्गमुत्सृज्य अतो रिपुत उत्तमाङ्गं शिरोऽग्रहीत् ॥

ग्रीवा हते क्षरत्तन्त्री वैरराजे समन्ततः।
धुनी सधातुस्यन्देव वै रराजे समं ततः ॥ ९८ ॥

(समपादयमकम्)

ग्रीवेति ॥ ततः शिरश्छेदानन्तरं वैरराजे प्रतिविष्णौ हते सति क्षरत्तन्त्री स्रवन्नाडिका ग्रीवा सधातुस्यन्दा गैरिकप्रस्रवणा धुनी नदी इव समं युगपत्, समन्ततः सामस्त्येन वै निश्चये रराजे शोभिता ॥

इत्यघानि द्विषन्देवैर्दव्यघानिषतानकाः।
जित्वाघानि स्थितोऽनर्तीदमोघानि स नारदः ॥ ९९ ॥

इत्यघेति ॥ इत्येवंप्रकारेण [विष्णुना] द्विषन् प्रतिविष्णुरघानि हतः। तथा देवैर्दिवि आनकाः पटहा अघानिषत आहताः। तथा अमोघानि निष्फलानि अघानि पापानि जित्वा स्थितः स नारदो ब्रह्मपुत्रः अनर्तीत्। नृत्यं कृतवान् ॥

सत्रा संभ्रमसंपातैः सत्रासं भ्रमरैश्चिता।
ता माल्यमालिकाः पेतुस्तामाल्य इव नाकतः ॥ १०० ॥

सत्रेति ॥ चिताः पुष्टास्ता माल्यमालिकाः पुष्पमालाः। तामाल्यः तमालकुसुमनिर्मिता इव। सत्रासं सभयं यथा स्यात्तथा संभ्रमसंपातैः संभ्रमेण संपातो येषां तैर्भ्रमरैः सत्रा सार्धं नाकतः स्वर्गतः पेतुः ॥

अदृक्षेतामुभौ सेन्द्रैर्विशेषेण जगद्विषत्।
पौरुषं पुरुषायत्तं मरणं हि विधेर्वशम् ॥ १०१ ॥

अदृक्षेतामिति ॥ सेन्द्रैरिन्द्रसहितैर्विशेषेणोभौ विष्णुप्रतिविष्णू अदृक्षेतां दृष्टौ। जगत् द्विषत् पौरुषं पुरुषायत्तं वर्तते। मरणं विधेर्वशम् अस्ति। हि स्फुटम् ॥

शुद्धां शुद्धान्तवसतिं संगतः कर्मसङ्गतः।
मुख्योद्यावो ददे मुख्यो बाष्पेण त्र्यञ्जलं जलम् ॥ १०२ ॥

शुद्धामिति ॥ कर्मसङ्गतः क्रियासंबन्धात्, शुद्धां पवित्रां शुद्धान्तवसतिम् अन्तःपुरमन्दिरं संगतः प्राप्तो मुख्यः प्रधानो मुख्योद्यावो मुख्यानां प्रधानाङ्गनानामुद्यावः समूहो बाष्पेणाश्रुणा त्र्यञ्जलम्अञ्जलित्रयमितम्। 'द्वित्रिभ्यामञ्जलेः' इति टच्। जलं ददे दत्तवान् ॥

पुरो रिपोरपारोऽपि तत्तूत्तापातपोऽतपत्।
विवेशैवावशोऽवेशो नृमानं मानिनीमनः ॥ १०३ ॥

(व्यक्षरपादः)

पुरोरिति ॥ पुरोर्महतस्तत तस्मात् रिपोः शत्रोरुत्तापातपः संतापातपोऽतपदुज्ज्वाल । तु पुनः अपारोऽवशोऽपराधीनोऽवेशोऽत्रगत ईशो यस्य निःस्वामिक उत्तापातपो मानिनीमनोऽपि नृमानमिव विवेश प्रविष्टवान् ॥

हरिः क्रान्तमतं भूतगरिमान्तगतं बत ।
वरित्सुं तत्र तह्वा तमरिणान्तरतप्यत ॥ १०४ ॥

(अश्वप्लुतबन्धादिः)

हरिरिति ॥ हरिः क्रान्तमतम् अनुक्तकारिणं भूतगरिमान्तगतं भूतगरिमावसानगतं भूतव्यापारव्याप्तिविपर्ययप्राप्तं वरित्सुं हन्तुमिच्छुं तं प्रतिविष्णुं तत्र युद्धे अरिणा चक्रेण तह्वा हत्वा अन्तरन्तःकरणे बत खेदे अतप्यत स्वयं तप्यते स्म ॥

सत्यतो विभया व्यूहे समुत्पत्या महोरसा ।
सत्यतो विभया व्यूहे समुत्पत्या महोरसा ॥ १०५ ॥

(अर्धसमः समुद्गकगोमूत्रिकामुरजादिबन्धः)

सत्येति ॥ महोरसा विस्तीर्णवक्षसा पत्या विष्णुना सती समीचीना विभया विगतविधुरा समुत् सहर्षा महोरसा तेजोरसा आ लक्ष्मीर्व्यूहे रणे सत्यतः सत्यादेनं प्रतिविष्णुं जेष्यामीति निश्चयाद् विभया विशिष्टप्रभया प्रतापेन अतः प्रतिविष्णुवधात् समुत्पत्य आगत्य व्यूहे परिणीता ॥

बलिमानर्चयावेद्य बलिमानर्च संयुगे ।
निर्ययौ भूतलोकं तं निर्ययौ भूतलोचितम् ॥ १०६ ॥

बलीति ॥ बलिमान् बलिनोऽस्य सन्तीति विष्णुर्निर्ययौ निरश्वे संयुगे रणे तं प्रतिविष्णुं भूतलोचितमवनीतलयोग्यं बलिम् अर्चया पूजया आवेद्य संकल्प्य भूतलोकं भूतसमूहम् आनर्च पूजितवान्, तथा निर्ययौ रणान्निर्गतः ॥

याहतेशादृते सीता साह तेजोधिके रिपौ ।
व्याहते श्वसिते रागं प्राह तेन स संयुता ॥ १०७ ॥

येति ॥ या ईशात्स्वामिनो रामादृते विना हता खिन्ना सा सीता जानकी तेजोधिके प्रतापाधिके रिपौ शत्रौ व्याहते सति तेन रामेण संयुता सती श्वसिते रागं प्रीतिम् अह कष्टेन प्राह स्म प्रकटितवती ॥ भारतीये—ईशात्प्रतिविष्णोः ऋते । अहता अखिन्ना प्रसन्ना । तेन विष्णुना । सीता भूमिः ॥

कौरवीं गतिमुच्छेत्तुमदुर्योधनपाटवम् ।
ये ते सख्येन विक्रान्ताः स स्वां तेभ्यो ददौ भुवम् ॥ १०८॥

कौरेति ॥ ये ते विभीषणप्रभृतयो रावणबान्धवा विक्रान्ताः सुयोजिताः सन्तः

कौरवीं कुत्सितरवसंबन्धिनीम् 'तस्मिन्नाथे मृते कथं भवद्भिर्जीवनीयम्' इति लोकापवादरूपां गतिम् उच्छेत्तुम् याधनपाटवं युद्धपटुत्वम् अदुर्दत्तवन्तः । स सख्येन मित्रत्वेन स्वां युद्धजितां भुवं तेभ्यो विभीषणादिभ्यो ददौ दत्तवान् ॥ भारतीये—ये पाण्डवाः कौरवीं कुरूणामिमां गतिम् अदुर्योधनपाटवं न विद्यते दुर्योधनस्य राज्ञः पाटवं पटुत्वं जीवनं यत्र तादृग् यथा स्यात्तथा उच्छेत्तुं विक्रान्ताः । तेभ्यः पाण्डवेभ्यः स विष्णुः स्वां स्वकीयां भुवम् ददौ ॥

सरक्षोवरजो राज्यं धर्मपुत्रोऽथ फल्गुनः ।
भीमोहतापरुद्धारि लब्ध्वासीद्वैरतः प्रभोः ॥ १०९ ॥

सरेति ॥ अथ स्वभूमिदानानन्तरं स रक्षोवरजो रावणानुजो विभीषणः फल्गुनः निःसाराद् वैरतो वैराद् भीमोहतापरुद्धारि भिया मोहेन तापेन च रुद्धा अरयो यस्मात्तादृशं राज्यं लब्ध्वा प्रभो रामस्य धर्मपुत्रः प्रतिपन्नपुत्रः आसीत् ॥ भारतीये—धर्मपुत्रो युधिष्ठिरः, भीमस्तदनुजः, फल्गुनोऽर्जुनः, अवरजः अवगतं रजो यस्येत्येनोमलरहितं हतापरुद्धारि हता अपरुद्धाश्च अरयो यत्र तादृशं राज्यं लब्ध्वा प्रभोः कृष्णस्य रतः प्रीतः सरक्षः रक्षासहितः आसीत् ॥

ततो विधातुमन्येषां निश्चक्रामवसुं धराम् ।
आत्मीयां रक्षितुं चक्री निश्चक्राम वसुंधराम् ॥ ११० ॥

(समपादयमकम्)

तत इति ॥ ततो विभीषणाय पाण्डवेभ्यश्च राज्यसमर्पणानन्तरं चक्री नारायणोऽन्येषां शत्रूणां धरां पृथ्वीं निश्चक्रां निर्घाटकाम् अवसुं निर्द्रव्यां विधातुं कर्तुम् आत्मीयां स्वकीयां वसुंधरां पृथ्वीं रक्षितुं निश्चक्राम निर्गतवान् ॥

हरितो हरितो बिभ्युराभ्यो राभ्यो विनारयः ।
तेऽभ्यस्तेभ्यः स्वदेशेभ्यः केवलं केऽवलन्न वा ॥ १११ ॥

हरित इति ॥ हरितो दिशो हरितो नारायणाद्, बिभ्युः । ते के । अभ्यो निर्भया येऽरय आभ्यो दिग्भ्यः तेभ्यः प्रख्यातेभ्यः स्वदेशेभ्यो राभ्यो द्रव्येभ्यो विना केवलं परं न अवलन् ॥

आशिश्रियन्नदीनाथो गङ्गा सिन्धुश्च केशवम् ।
आशि श्रियं न दीनाथो दिग्भीता तेन बिभ्रता ॥ ११२ ॥

(विषमपादयमकम्)

आशिश्रीति ॥ नदीनाथो माधवो देवो वरतन्तुदेवः प्रह्लादनदेवश्च गङ्गा सिन्धुश्च केशवं नारायणम् आशिश्रियत् सेवते स्म । अथो अनन्तरं श्रियं बिभ्रता तेन नारायणेन दीना भीता दिक् (किं) न आशि । अपि तु व्याप्तैव ॥

वाजीभविपिनेऽयेये जीनारावे रजोमये ।
भरादपेतै राजोने विवेपेऽरिशतैरपि ॥ ११३ ॥

(अर्धभ्रमः)

वाजीति ॥ अयेये अगम्ये जीनारावे क्षीणशब्दे रजोमये धूलिप्रचुरे राजोने शत्रुहीने वाजीभविपिने तुरगगजरणे भराद् रणतत्परतायाः अपेतैरपगतैररिशतैरपि विवेपे कम्पितम् ॥

न नाम प्रतिसामन्तं त्रेसुः के संघवृत्तयः ।
ननाम प्रतिसामं तं प्रकृत्या प्रातिकूलिकः ॥ ११४ ॥

(विषमपादयमकम्)

नेति ॥ के संघवृत्तयः सामवायिकाः क्षत्रियाः, प्रतिसामन्तं सामन्तं सामन्तं प्रति, नाम अहो न त्रेसुस्त्रस्ताः । अपि तु सर्वेऽपि । अतएव प्रातिकूलिकः प्रतिकूलं वर्तमानस्तं नारायणं प्रकृत्या स्वभावतः प्रतिसामं यथोपशमं यथा स्यात्तथा ननाम नमस्कृतवान् ॥

कमन्यं यः समुन्न तमकरोत्करदा मतः ।
गम्भीरां वार्धिविततिमकरोत्करदामतः ॥ ११५ ॥

(समपादयमकम्)

कमिति ॥ यः समुत् सहर्षः करदा सिद्धायदात्रा मत इष्टः सन् गम्भीरां वार्धिवितातिं समुद्रविस्तारकरदां सिद्धायदात्रीम् अकरोत् । अतः कम् अन्यं तं करदं न अकरोत् । अपि तु सर्वम् ॥

त्रस्तेऽरावधरास्तेऽत्र केशवेन नवेऽशके ।
तेपे चारु रुचापेते नाधुते न नतेऽधुना ॥ ११६ ॥

(गतप्रत्यागतचरणः)

त्रस्त इति ॥ अधुना संप्रति केशवेन लक्ष्मणेन विष्णुना त्रस्ते भीतेऽवरास्ते आद्विष्णोर्वरेण प्रधानेन ज्येष्ठेन रामेणास्ते क्षिप्ते नवे नूतनेऽशकेऽशक्ते रुचा कान्त्यापेते त्यक्त आधुते समन्ततः कम्पिते नते नम्रेऽत्र अरौ चारु यथा स्यात्तथा न न तेपे । तेप एव ॥

समजन्यायतोऽन्यान्गोसमजन्यायतोऽवयन् ।
समजन्यत हीनारे समजन्यतयायतिः ॥ ११७ ॥

समजेति ॥ विष्णुर्गोसमजन्यायतो गोसमूहन्यायेनायत आगच्छतोऽन्यान्शत्रूनवयज् जानन् समजनि संजातः । समजन्यतया समानरणतया अरेः शत्रोरायतिः फलमुत्तरं हीना क्षीणा समजन्यत कृता ॥

लूनं खलीकृतं नैव कष्टं न द्विगुणीकृतम् ।
तथापि यानेशालेयक्षेत्राणि ददिरे फलम् ॥ ११८ ॥

लूनमिति ॥ यद्यपि क्षेत्रं लूनं छिन्नम्, नैव खलीकृतमखलं खलं धान्यमर्दनभूमिः कृतम् । तथा कृष्टं कर्षणीकृतम्, नैव द्विगुणाकृतं द्विर्वाहितम् । तथापि यानेशालेयक्षेत्राणि यानेशानां यानेश्वराणाम् आलेयानामालिमतां शत्रूणां क्षेत्राणि फलं ददिरे ॥ यद्वा तथापि शालेयक्षेत्राणि शालिभवनक्षेत्राणि याने प्रयाणे फलं ददिरे ॥

अमरः खचरश्चक्रमत्रसत्समनद्ध तम् ।
कश्च पश्यञ्जगच्चक्रमत्र सत्समनद्धतम् ॥ ११९ ॥

(समपादयमकम्)

अमर इति ॥ कश्च कोऽपि अमरो देवः खचरो विद्याधरः अत्र सङ्ग्रामे हतं तं प्रतिविष्णुम्, चक्रम् (सुदर्शनाभिधम्) अत्रसत् उद्वेगमगच्छत् सत् समीचीनं सर्वक्लेशरहितम्, समनत् समुच्छ्वसत् समुल्लसत् जगच्चक्रम्, पश्यन् सन् समनद्ध संनद्धवान् । अपि तु न कोऽपि ॥

येऽमी मायामयायामाः शार्ङ्गमारोप्य तैरयम् ।
शरैः शशार शूरोऽरीन्प्राप्य शैलमहागुहाः ॥ १२० ॥

येऽमी इति ॥ अयं शूरो विष्णुः शैलमहागुहाः पर्वतवृहत्कन्दरान् प्राप्य शार्ङ्गं धनुः आरोप्य येऽमी शरा मायामयायामाः मायानिर्माणदैर्घ्याः सन्ति, तैः शरैः अरीन् शशार हतवान् ॥

कन्याहेमपुरो लेभे मायी यायात्र कातरे ।
शुध्यानपेतो यामायानयं यातोऽयमक्षत ॥ १२१ ॥

कन्येति ॥ मायी मायावी अत्र रणे याया अतिशयेन गमनशीलः कातरे भीरौ शुद्ध्यानपेतोऽपरित्यक्तोऽयं शुभावहविधिं यातः प्राप्तः विष्णुर्या शुद्धिमायान् आगच्छन् सन् यं कातरम् अक्षत हतवान् स कन्याहेमपुरस्तनयासुवर्णपुराणि लेभे प्राप्तवान् ॥

कमाशु न तयारेभे न्यायीध्यायन्क्षमातले ।
हेयानयामयाकारोमयापेतो यतोत्रपु ॥ १२२ ॥

(अर्धभ्रमगर्भश्लोकः)

कमिति ॥ न्यायी नीतिमान् हेयानयामयाकारो हेयस्य अनयस्यैवामयस्येवाकारो यस्य तादृक् हेयानां शत्रूणामानानां याममुपरमं विध्वंसं याति प्राप्नोतीवाकारो यस्य तादृग् हेयैः परित्याज्यैरानैः प्राणे यायते प्राप्यते तादृश्या अया मर्यादायां श्रियां कीर्तौ वाकारः कीर्त्यते बुधैः' इत्युक्तेः कीर्त्या निर्वृत आकारो यस्य तादृग् वा, अमया न मया

लक्ष्म्या दारिद्र्येण अपेतः परित्यक्तः यतो यत्नपर उद्यमी विष्णुः क्षमातले धरातले इद्धया दीप्त्या अत्रपु अलज्जं निःशङ्कं यथा स्यात्तथा आयन् आगच्छन् सन् कं पुरुषं तया लक्ष्म्या आशु शीघ्रम् न आरेभे । अपि तु सर्वमुत्सुकीकृतवान् ॥

श्रीधीनीतिस्थितिप्रीतेरुद्धेतिरुचितोदिति ।
एषोऽजैषीद्द्विषो रोषै रुद्ध्वेति रुचितोदिति ॥ १२३ ॥

(च्युतायोगवाहकण्ठ्यः समपादयमकः)

श्रीति ॥ श्रीधीनीतिस्थितिप्रीतेः श्रिया धिया नीतेरनिन्द्यस्थितेश्च प्रीतेः चितो योग्य उद्धेतिरुत्खातशस्त्रः एष विष्णुः इत्युक्तप्रकारापेक्षया रुचितोदिति ईहितोदयं यथा स्यात्तथा रोषै रुद्ध्वा संवृत्य अदिति अखण्डं यथा स्यात्तथा द्विषः शत्रून् अजैषी-ज्जितवान् ॥

श्रीतः सुरकुलं हीनमत्रासीदक्षमोहितम् ।
क्षात्रं तु वृत्ततः क्षिप्तमत्रासीदक्षमोहितम् ॥ १२४ ॥

(समपादयमकम्)

श्रीत इति ॥ सुरकुलं देववृन्दं श्रीतः श्रियाः सकाशाद्धीनं सदक्षमोहितम् अक्षेषु स्पर्शन-रसन-घ्राण-चक्षु-श्रोत्रेन्द्रियेषु मोहितं तदीयव्यापारनिर्विवेकम् आसीत् संजा-तम् । विष्णोर्विभूतिमालोक्य लज्जितमासीत् । तथा अत्र लोके तु क्षात्रं क्षत्रियसमूहो वृत्तत आचरणात् क्षिप्तं सदक्षमोहितं न विद्यते क्षमायाः पृथ्व्या ऊहितं वितर्कणं यस्य तादृक् सदत्रासीत् त्रस्तम् ॥

सर्वकर्माणमूर्ध्वज्ञं दूतमुद्युक्तविक्रमम् ।
प्रहित्याश्वमपि म्लेच्छस्त्रीराज्यं तमशुश्रुवत् ॥ १२५ ॥

सर्वेति ॥ सर्वकर्माणं सर्वकार्यसमर्थम् ऊर्ध्वज्ञमूर्ध्वजानुकम् उद्युक्तविक्रमं समर्थविशिष्ट-पादम् आश्वमश्वसंबन्धिबलं (कर्तृ)सर्वकर्माणम्, ऊर्ध्वज्ञम् उत्तरफलज्ञातारम्, उद्युक्तवि-क्रमं प्रयुक्तपराक्रमं दूतं प्रहित्य प्रेष्य तं विष्णुम् (प्रयोज्यकर्म) म्लेच्छस्त्रीराज्यं म्लेच्छानां क्षत्रियाणामेव स्त्रीणां स्त्रीभूतानां राज्यम् अपि अशुश्रुवत् श्रावितवत् ॥

प्रजिघ्युः पार्वतीयाश्च चामरं दन्तमौषधिम् ।
चित्तेन कार्मणेनापि द्विषन्तो न तमद्विषुः ॥ १२६ ॥

प्रजिघ्युरिति ॥ पार्वतीयाः पर्वतोद्भवाश्चामरं दन्तम् औषधिम् प्रजिघ्युः प्रेषितवन्तः । तथा कार्मणेन कर्मप्रयुक्तेन चित्तेन द्विषन्तोऽपि तं विष्णुं न अद्विषुः ॥

समयाचक्रिरे खेयं केऽरिमूलं यदम्बुधीन् ।
समया चक्रिरेखेयमलङ्घ्या सामवायिकैः ॥ १२७ ॥

(समपादयमकम्)

समयेति ॥ के अरयः समयाचक्रिरे कालयापनां कृतवन्तः । न केऽपि । यद्यस्मात्कारणात् अम्बुधीन् समया समीपे अरिमूलं शत्रुमूलं खेयं खननीयम् । युक्तमेतत् । यत इयं चक्रिरेखा चक्रवर्तिमर्यादा सामवायिकैः सैनिकैरलङ्घ्या ॥

समयासीदसौ जन्यं समयासीदसौजन्यम् ।
समयासीदसौ जन्यं समयासीदसौ जन्यम् ॥ १२८ ॥

(पादसमोऽश्वप्लुतिर्मुरजबन्धः)

समेति ॥ समयासीत् संगतोऽयं शुभावहविधिं तादृशासिना इन्धे दीप्तो भवतिः तादृक्, असौ विष्णुर्यदि जन्यं रणं समयासीत् सम्यग्गतवान् तदा असौ जन्यममैत्रीं समयासीत् प्रयत्नविपर्यीकृतवान् । तथा जन्यं जनादनपेतम् असौ खड्गे असौ प्राणे च जन्यमपवादं समया समीपम् आसीत् ॥

व्यधादरीणां द्वीपेषु जयस्तम्भस्थितिं व्यधात् ।
व्यधाद्वेलावने धैर्याद्दण्डोऽस्य मधु भव्यधात् ॥ १२९ ॥

(आद्यन्तयमकार्धः)

व्यधादिति ॥ अस्य विष्णोर्दण्डः सैन्यम् अरीणां शत्रूणां व्यधात्ताडनात्तो द्वीपेषु जयस्तम्भस्थितिं व्यधात् कृतवान् । तथा भव्यधात् कल्याणधारकाद् धैर्याद् वेलावने मधु मधुरसं व्यधादास्वादितवान् ॥

इत्यादाय दिनैः कैश्चिद्दिशो दण्डधनं नृपः ।
सदयोध्यामतो रागाद्ययौ द्वारवतीं पुरीम् ॥ १३० ॥

इत्येति ॥ नृपो लक्ष्मण इत्येवंप्रकारेण कैश्चिद्दिनैर्दिशः सत्समीचीनं दण्डधनमादाय गृहीत्वा अतः अतति तादृशो विजृम्भमाणाद् रागात् प्रीतेर्द्वारवतीं सुद्वाराम् अयोध्यां पुरीं ययौ ॥ भारतीये—नृपः कृष्णोऽयोध्यां योद्धुमशक्यां द्वारवतीं द्वारकां पुरीम् ॥

वियोगे लघुमुत्तुङ्गमानीताशार्थमात्मजम् ।
सा तं मातेव संवोढुं मुदामान्त्यपि नाशकत् ॥ १३१ ॥

वियोग इति ॥ सा नगरी मुदा संतोषेण हर्षेण अमान्ती अवकाशमलभमाना अपि, तं नारायणम् । माता जननी वियोगे लघुम् (संयोगे) उत्तुङ्गम्, आनीताशार्थव्याहृताभिलषितार्थम् आनीतदिग्द्रव्यम् आत्मजं पुत्रमिव संवोढुं न अशकत् न शक्ता ॥

अवाष्टभञ्जनाश्चारुशेषाभिस्तं चमूः पुरम् ।
अवाष्ट भञ्जनाश्चारुराज्ञया न तृणान्यपि ॥ १३२ ॥

अवाष्टेति ॥ जनाः प्रजास्तं विष्णुम्, चारुशेषाभिर्मनोहराशीर्वादैरवाष्टभन्नवष्टब्धवन्तः

स्तुतवन्तः । तथा चमूः सेना पुरम् अवाष्ट व्याप्तवती । तथा तृणानि आज्ञया आदेशेन भञ्जना आमर्दनक्रिया न आरुर्गतवन्तः ॥

प्रविश्य पुरमाराध्य चक्रमारुह्य विष्टरम् ।
परं मित्राणि देशाय नामुञ्चत्तदनुस्मृतिम् ॥ १३३ ॥

प्रविश्येति ॥ स विष्णुः पुरं प्रविश्य, चक्रम् आराध्य प्रपूज्य, विष्टरमासनमारुह्य, परं केवलं देशाय देशं गन्तुं मित्राणि अमुञ्चत् प्रेषयामास । तदनुस्मृतिं मित्रानुस्मरणं न अमुञ्चत् त्यक्तवान् ॥

एकभुक्तिमलुब्धिं च कुलोपकरणं हितम् ।
सामाधिकमसाधुं च राज्यभारं बभार सः ॥ १३४ ॥

एकेति ॥ स नारायण एकभुक्तिमेकानुभवगोचरमेकस्य भुक्ती रक्षा यस्येत्येकच्छत्रम् । अलुब्धिम् अलोभं विमोहहानम् । कुलोपकरणं पृथ्वीलोपकरं वंशोपकारकम् अपि हितं सुखदम् । साम्ना सान्त्वेन अधिकं सया लक्ष्म्या मया ज्ञानेन पञ्चाङ्गमन्त्रेण च अधिकम् । अपि । असाधुमचेतोरञ्जकमस्य विष्णोः साधुं मनोहरं राज्यभारं बभार पुष्टिं नीतवान् ॥

नानेष्टसहितादोहि स्वयं गौर्वसु भूपतिः ।
नानेष्ट स हिताऽदो हि स्थानं तीर्थान्तरात्परम् ॥ १३५ ॥

(विषमपादयमकम्)

नानेष्टेति ॥ नानेष्टसहिता विविधाभिलषितयुक्ता हिता हितदायिनी गौर्भूमिः स्वयमेव वसु द्रव्यम् अदोहि दुग्धा । सोऽसौ भूपतिर्विष्णुरदो द्रव्यं तीर्थान्तरात् धर्मसमवायस्थानान्तरात् परमन्यत् स्थानं न अनेष्ट प्रापितवान् ॥

स्वपुरग्रामतायत्तं वस्वदिक्षञ्जनं जनम् ।
स्वपुरग्रा मता यत्तं भूपास्तस्याधिकारिणः ॥ १३६ ॥

(विषमपादयमकम्)

स्वपुरेति ॥ अग्राः प्रधानास्तस्य विष्णोर्मता इष्टा अधिकारिणो नियोगिनो भूपा यत् यस्मात्कारणात् तं जनं स्वपुः सुष्ठु पान्ति स्म । (अतः) स्वपुरग्रामतायत्तमात्मनगरग्रामसमूहाधीनं वसु द्रव्यम् आदिक्षन् दिष्टवन्तः ॥

परस्परमपश्यन्तः सामन्ता ददृशुः प्रभुम् ।
नमन्तस्तं नवोत्थानं भानुं दूरस्थिता इव ॥ १३७ ॥

परस्पेति ॥ दूरस्थिताः सामन्ताः परस्परम् अपश्यन्तः सन्तो नवोत्थानं नवप्राप्तं नवोदयं भानुमिव तं प्रभुं नमन्तः सन्तो ददृशुः ॥

निजतो हि धराराधी सदा नाम रवी रुचा ।
वेधसा जनितो भूयो योगे वेगनयेन सन् ॥ १३८ ॥
सन्नयेन गवे गेयो यो भूतो निजसाधवे ।
चारुवीरमना दासधीराराधहितोऽजनि ॥ १३९ ॥

(प्रतिलोमानुलोमैकद्वैतम्)

निजेति ॥ वेधसा ब्रह्मणा सदा धराराधी धरां राध्यति भूमिवर्धको धरां राध्नोति भूमिसंसिद्धिकारको रुचा कान्त्या रविः सूर्यः, सन् सज्जनो विष्णुर्भूयः पुनर्निजत आत्मीयेन वेगनयेन योगे समाधौ हि स्फुटं जनितोऽजनि नाम अहो ॥

सन्नयेनेति ॥ यः चारुवीरमनाश्चारुषु वीरेषु मनो यस्य तादृग् दासधीराराधहितः दासानां भृत्यानां धीरं यथा स्यात्तथा आराध आराधनं सेवाकर्म हितो यस्य तादृग् अजनि संजातः । स विष्णुर्निजसाधवे निजाः साधवो जाता यस्यास्तस्यै, गवे भारत्यै सन्नयेन समीचीननीत्या गेयः स्तुत्यो भूतः ॥

स्वपत्यं विधिनिग्राहं स्वपत्यन्तेऽकरोद्द्विषाम् ।
आजिजीवाधि कृत्वा तमाजिजीवारवाहतम् ॥ १४० ॥

स्वपेति ॥ स नारायणः स्वपत्यन्ते स्वस्वामिसंनिधौ आत्मजनकसमक्षमेव द्विषां शत्रूणां विधिनिग्राहं विधानबन्धकं स्वपत्यं शोभनापत्यमाज्ञासंपादकं पुत्रमकरोदुत्पादयामास । तदपत्यमाजिजीवारवाहतमाजौ रणे जीवाया रवे अहतमखिन्नं किंतु सोत्सवं तं विष्णुमधि स्वामिनं कृत्वा आजिजीव प्राणान्धारयति स्म तद्वियोगे प्राणोत्क्रमणसूचिका खिन्नता तस्याजायतेति भावः ॥

अमा रणं महामात्रैर्महाब्रह्मैरमारणम् ।
अध्यायन्कविभिः काव्यमध्यायं कर्म चाकरोत् ॥ १४१ ॥

अमेति ॥ स नारायणो महामात्रैः प्रधानैर्मन्त्रिभिरमा सहाध्यायन् परामृशन् रणं सङ्ग्रामाख्यं महामात्रैर्महावयस्कैर्महाब्रह्मैर्महाद्विजैः । 'कुमहद्भ्याम्–' इति ब्रह्मणष्टच् । सह परामृशन् अमारणं हिंसाभावरूपं मायै लक्ष्म्यर्थे रणाभावरूपं वा महामात्रैर्बहुद्रव्यसाध्यैः कविभिः सह परामृशन् काव्यमध्यायं काव्यस्य मध्यमयते तादृशम् काव्यनिर्माणरूपं कर्म अकरोत् । विमृश्यैव सकलं कर्म कृतवान् नत्वविमृश्य । तथा चोक्तम्—'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥' इति ॥

अर्थानपेक्षानद्राक्षीत्काले करणमात्रिकान् ।
स पौरानङ्गहारांश्च नमत्क्रमकटीकरान् ॥ १४२ ॥

अर्थेति ॥ स विष्णुः काले यथोचितावसरे करणमात्रिकान् अधिकारिणोऽर्थानपेक्षान् उत्कोचादिशुद्धान्, पौरान्नगरवासिनोऽङ्गहारान्नर्तकान् निःस्पृहान्, नम्रीभवच्चरणनितम्बहस्तान् अद्राक्षीत् ॥

ततसारतमास्थासु सुभावानभितारधीः ।
धीरताभिनवाभासु सुस्थामा तरसातत ॥ १४३ ॥

(गतप्रत्यागतम्)

ततेति ॥ अभितारधीः अभिगता तारा धीर्यस्येति सकलशास्त्ररसरसिकबुद्धिः, सुस्थामा बलीयान् स विष्णुः धीरताभिनवाभासु निःक्षोभतरुणप्रतापासु ततसारतमास्थासु विस्तृतसारतमप्रतिज्ञासु सुभावान् सुष्ठुपरिणामान् आततं विस्तृतवान् ॥

क्षयलोभविरागहेतवः प्रकृतीनामभवन्न यत्र यः ।
रिपुमध्यकृतास्य केवलं परवध्वः परकीयतां ययुः ॥ १४४ ॥

क्षयेति ॥ यत्र विष्णौ राजनि सति प्रकृतीनां दुर्गधर्मकर्माध्यक्षसेनापतिपुरोहितमन्त्रिदैवज्ञलक्षणानां क्षयलोभविरागहेतवः क्षयो बलाभावः, लोभः सर्वपदार्थेषु स्पृहा व्यामोहो वा, विरागोऽनुरागाभावः, त एव हेतवो न अभवन् । क्षीणा हि प्रकृतिरकिंचित्करा जायते पतिं ग्रसते लुब्धाहिरपत्यमिव, विरक्ता राज्यसमापनाय जायते इति । एतेन राजनि प्रकृतिस्वाधीनता कथिता । तथा यो विष्णू रिपुं शत्रुम् अध्यकृत स्वाधीनीकृतवान् । केवलम् अस्य विष्णोः परवध्वः शत्रुनार्यः परकीयतां पराधीनतां ययुः, तत्पतीनां मृतत्वात्कारागृहपतितत्वाद्वा । अन्ये तु केऽपि न पराधीना बभूवुः ॥ वैतालीयं छन्दः ॥

चम्वाजिस्थिरया धरानमननिश्चिन्तस्थितोऽनश्चर-
न्प्रज्ञानस्थिति कर्मजातमवनिस्वामी सुखानां कृते ।
मत्वामा सचिवैरिहत्यमवसि स्थानं सतामर्चितौ
तौ जैनौ चरणौ प्रजाशमकृतौ रत्यास्तुतेन्द्रस्तुतौ ॥ १४५ ॥

चम्वेति ॥ आजिस्थिरया सङ्ग्रामस्थिरया चम्वा सेनया धरानमननिश्चिन्तस्थितो मेदिन्या नमनेन प्रह्वीभवनेन पूर्वं निश्चिन्तः पश्चात्स्थितो अवनिस्वामी भूपतिर्विष्णुः प्रज्ञानस्थिति प्रकृष्टज्ञानेन स्थितिर्यत्र तादृशं कर्मजातं कार्यसमूहम्, अनः प्राणनं सोल्लासं यथा भवति तथा चरन्ननुभवन् सन् सचिवैरमात्यैः अमा सह मत्वा विमृश्य सुखानां कृते करणाय, इहत्यमिहलोकोद्भवम्, अवसि न वासयति तच्छीलम् । संज्ञापूर्वकत्वान्न वृद्धिः । 'वस स्नेहच्छेदापहरणेषु' । अक्षयं सतां सत्पुरुषाणां स्थानमास्पदम् आश्रयणीयं सतां सत्पुरुषाणाम् अर्चितौ पूजितौ । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तप्रत्यये तत्कर्तरि 'क्तस्य च वर्तमाने' इति षष्ठी । सतामित्यस्य मध्यमणिन्यायेनोभयत्र संबन्धः । प्रजा-

शमकृतौ प्रजानां शमं कुरुतस्तथोक्तौ इन्द्रस्तुतौ तौ लोकप्रतीतौ जैनौ जिनदेवसंबन्धिनौ, चरणौ रत्या प्रीत्या अस्तुत स्तुतिं कृतवान् ॥ शार्दूलविक्रीडितं छन्दः ॥

नीत्या यो गुरुणा दिशो दशरथेनोपात्तवान्नन्दनः
श्रीदेव्या वसुदेवतः प्रतिजगन्न्यायस्य मार्गे स्थितः ।
तस्य स्थायिधनंजयस्य कृतितः प्रादुष्षदुच्चैर्यशो
गाम्भीर्यादिगुणापनोदविधिनेवाम्भोनिधींल्लङ्घते ॥ १४६ ॥

इति श्रीधनंजयकविविरचिते धनंजयाङ्के द्विसंधानकाव्ये राघवयादवपाण्डवानां निष्कण्टकराज्यप्राप्तिवर्णनो नामाष्टादशः सर्गः ॥

नीत्येति ॥ यो नन्दनः पुत्रो गुरुणा पित्रा दशरथेन सह प्रतिजगत् प्रतिलोकम् अवतः पालयतो न्यायस्य वसुदे द्रव्यदातरि मार्गे स्थितः सन् श्रीदेव्या श्रिया दीव्यति विलसति तादृशा नीत्या दिश उपात्तवान् गृहीतवान् स्वाधीनीकृतवान् तस्य लक्ष्मणस्य स्थायिधनमनश्वरधनं यशः जयस्य कृतितः करणात् प्रादुष्षत् प्रचुरीभवत् उच्चैरतिशयेन गाम्भीर्यादिगुणापनोदविधिना तदीयगाम्भीर्यादिगुणानामन्यत्रप्रकाशनविधानेनेव तेषामपनोदाय दूरीकरणाय अन्यस्य तादृशगुणवतो मार्गणविधानेनेव वा अम्भोनिधींन्समुद्रान् लङ्घते । आभूमण्डलव्यापि तस्य यश इति भावः ॥ भारतीयपक्षे—यः वसुदेवतः प्रति वसुदेवप्रतिनिधिः श्रीदेव्या शोभया लक्ष्म्या नन्दनः समृद्धो जगन्न्यायस्य लोकनीतेर्मार्गे स्थितः सन् नीत्या गुरुणा महता रथेन च दश दिश उपात्तवान् । तस्य श्रीकृष्णस्य स्थायि स्थिरं धनंजयस्यार्जुनस्य कृतितः कर्मणः [तत्सहायेनैवार्जुनस्य दुःखनिवृत्तेः] प्रादुष्षत् प्रचुरीभवत् यशः इत्यादि समानम् ॥ ग्रन्थकर्तृपक्षे—यः श्रीदेव्या मातुर्नन्दनः पुत्रो वसुदेवतः प्रति वसुदेवस्य पितुः प्रतिनिधिः । जगन्न्यायेऽस्य लोकनीतेर्मार्गे स्थितः सन् गुरुणा दशरथेन । [हेतौ तृतीया ।] नीत्या नीतेर्दिश उपदेशान् उपात्तवान् । तस्य धनंजयस्य कवेः कृतितः काव्यकरणतः प्रादुष्षत् स्थायि यशः । अन्यत् सिद्धम् ॥

इति श्रीमथुरातः पश्चिमे पुष्करतः पूर्वे अवन्तिकात उत्तरे कुरुक्षेत्रतो दक्षिणे मध्यरेखातोऽर्धपलधने देशे सकलनगरातिशोभिनि जयनगरे वास्तव्येन श्रीमन्महाराजाधिराजश्रीसवाईरामसिंहप्रतिष्ठापितश्रीमन्महाराजाधिराजश्रीसवाईमाधवसिंहजीप्रतिपाल्यमानजयनगरीयसंस्कृतपाठशालास्थत्रयोदशाध्यापकान्तर्गततामापन्नेन दाधीचवर्यकौत्सगोत्रकुद्दालोपनामकपण्डितवर्यश्रीराधाकृष्णात्मजसाहेबरामात्मजानन्तरामात्मजछोटीलालात्मजबदरीनाथेन विनयचन्द्रान्तेवासिनेमिचन्द्रोपकल्पितप्राचीनपदकौमुदीनामकटीकातो गृहीतसारायां द्विसंधानव्याख्यायां राघवपाण्डवयादवानां वैरिरावणकौरवजरासंधवधपूर्वकनिष्कण्टकराज्यप्राप्तिकथनो नामाष्टादशः सर्गः ॥